

# न्यायसिद्धान्तमुक्तावली।

प्राच्यमहाविद्यालयसाहित्यदर्शनशास्त्राध्यापकेन
स्यालकोटवास्तव्यजैनन्यायविशारदकविता-
किंकनृसिंहदेवशास्त्रिणा विरचितयाऽ-
तिसरलया स्वोपज्ञटिप्पणयुतया प्रभा-
ख्यया व्याख्यया समुद्भासिता ।

---

सेयम्

मेहरचन्द्र लक्ष्मणदास इत्यनेन
सुन्दरसीसकाक्षरैर्मुद्रयित्वा
प्रकाशिता ।

---

१९७८ सङ्ख्ये विक्रमसंवत्सरे मार्गशीर्षशुक्लदले
प्रत्यक्षपथं समासम् ।

---

पुनर्मुद्रणादिसर्वोऽप्यधिकारः टीकाकर्तुरायत्तः ।

---

एज्युकेशनलयन्त्रालये लवपुरनगरे मुद्रापिता ।







# समर्पणम् ।

ये विविधभाषाविज्ञानसन्तानविपुलहृदयाः शान्तिदेव्या वल्लभाः स्वाश्रितहितचिन्तका गम्भीरप्रकृतयो विगतविकृतयः सद्गुणानुरागिणः सौजन्यभागिनः पञ्चापयूनिवर्सिटीपरिषद्रत्नभूता भूतानुकम्पिनः निजकर्मदत्तक्षणा विचक्षणाः ओरियंटलकालेजप्रभुवरा श्री· ए· सी, वूल्नरसाहिवमहोदयाः तेषां सरस्वतीप्रिये विमले कण्ठे सानुरागं समर्पितेयं **सप्रभा न्यायसिद्धान्तमुक्तावली** अतिप्रमोदमावहन्ती सुचिरं विराजताम् ।

समर्पको—

**नृसिंहदेवः**

साहित्यदर्शनाध्यापकः ।

# प्रभाख्यया व्याख्यया सहिताया न्यायसिद्धान्तमुक्तावल्या विषये

## द्वित्राः शब्दाः ।

गोपांगनापांगचकोरचन्द्रः कंसादिविध्वंसनधूमकेतुः ।
संसारपारोत्तरणैकसेतुः कृष्णः सदास्तात्प्रमदस्य हेतुः

अयि ! महाशयाः ! इह तावत्सकलानां प्रेक्षावतां प्रवृत्तिः प्रयोजनपूर्विकैव, प्रयोजनं तु किञ्चिद् गौणं किंचिन्मुख्यं तत्राप्यैहिकमामुष्मिकञ्चेति द्विविधम् । आद्यं सम्भोगात्मकं विनश्वरं सततदुःखसम्भिन्नं पर्यन्ते परं वैरस्यमावहतीति कस्य न विषयैषणाकुञ्चितहृदयस्य विज्ञातम्, तदर्थं यतमानोऽपि जन्तुर्न जातुचिदाशापिशाच्या मुच्यते नवा सन्तुष्टिजनन्या अङ्गीक्रियते, तस्मादैहिकं प्रयोजनं न प्रेक्षावतामत्यादरणीयं भवति । परं प्रयोजनन्तु निःश्रेयसाख्यं सकलदुःखात्यन्तविमोक्षपरानन्दप्राप्तिस्वरूपं 'ब्रह्म क्षेमधाम कैवल्यमित्यादि शब्दव्यपदेश्यं दुःखासम्भिन्नमेकरसमनल्पं सारभूतं सर्वैरेवोपादेयं सततकल्याणेप्सुभिः । तदर्थमेव जपतां जुह्वतां गायतां श्रृण्वतां गृणताञ्च साधूनां सदाचारपरिपाटीं मातुरङ्कपालीमिव बालाः स्वात्मार्हितैषिणः समाश्रयन्ते ।

परमिदं प्रयोजनं तत्त्वज्ञानमात्रसाध्यं न द्रव्यसाध्यम्, यत्रेदमुक्तम्—'न कर्मणा न प्रजया न धनेन त्यागेनैके अमृतत्व-

मानशु ' रिति, 'अमृतत्वस्य तु नाशास्ति वित्तेन' 'तमेव विदित्वाति-मृत्युमेति' इति च । तत्त्वज्ञानञ्च शास्त्रादेव, शास्त्रञ्च मुख्यं वेदः—'शास्त्रयोनित्वात्' ब्र० सू० १ । १ ३ । इत्यत्रोक्तम् श्रुतिरपि 'नावेद-विन्मनुते तं बृहन्तम्' इत्याह । किन्तु तदनादिपापवासनादूषिता-न्तःस्वान्तानां वैदिकपदपदार्थसङ्गतिज्ञानमहासागरमोमुह्यमानाना-मनुपासितगुरुचरणानां कुतार्किकाणामसम्भावनाविपरीतभावनादि-पुन्दोषपिहितप्रष्टमतिचक्षुषां सहसा निरस्तसमस्तदोषपङ्ककलङ्काद् वेदवाक्याद्वद्व्यविद्यमानमिव भवतीति तदर्थं सकलस्यापि विचा-रशास्त्रस्य समुत्थानम् । अभियुक्ता अप्याचक्षते—'पुरुषापराध-विनिवृत्तिफलः सकलो विचार इति वेदविद्' इति । विचार-शास्त्रञ्च पूर्वोत्तरभेदेन द्विविधं मीमांसात्मकं, तस्यैवोपकाराय यथा-यथं प्रवृत्तानि इतराणि दर्शनानि स्वरूपमन्वयन्ति विचाररूपाण्येव तर्कप्रधानत्वात् तथाचैतेषामपि साक्षात् परम्परया वा पुरुषगतदोष-विनिवृत्तिरेवफलमिति वाक्यविदां परामर्शः ।

तेष्वभ्यर्हितमिदं न्यायशास्त्रं सपरिकरं प्रमाणपरिष्करण-मन्तरा प्रमेयपरिष्कारानुपपत्तेः । मूलभूतस्यास्य शास्त्रस्य प्रवर्त्तकौ द्वावाचार्यौ । एक- श्रीमहर्षि गोतम आत्रेयगोत्रः पञ्चाध्यायात्मकन्या-यसूत्रप्रणेता प्रमाणादिषोडशपदार्थवादी, एतस्यैवाक्षपाद अक्षचरण इत्यादि नामान्तराणि ।

महर्षि कणादस्तु कश्यपगोत्रः द्रव्यादिषट्पदार्थवादी दशा-ध्यायात्मकवैशेषिकसूत्रप्रणेता यस्य उलूक औलूक्य इत्यप्याख्ये स्तः । प्रायो न्यायदर्शनमाश्रित्य गङ्गेशोपाध्यायप्रभृतयो विविधबौद्धा-दिनास्तिककुतर्कप्रतिक्षेपाय परिष्कारशैल्या न्यायचिन्तामणिप्रभृतीन् बृहतो न्यायग्रन्थान् रचयाम्बभूवुः । तेच ग्रन्था आकारतो विषयतश्च

महान्त इति कृत्वा सुकुमारमतीनामपि यथा संक्षेपणैव सिद्धान्तावबोधः स्यादित्याकलय्य विद्यानिवासमूनुः श्रीविश्वनाथपञ्चानन-भट्टाचार्य उक्ते द्वे दर्शने अवलम्ब्य अन्तर्भावितषोडशादिपदार्थान् सप्तपदार्थान् निरूपयन् स्वप्रणीतायाः कारिकावल्या व्याख्यानभूतं न्यायसिद्धान्तमुक्तावलीग्रन्थं निजशिष्यराजीवोज्जीवनाय कृपापरवशः सन् व्यरचयत, सोऽयं श्रुतिपरम्परातो वङ्गदेशीयोऽवगतोऽपि कस्मिन् संवत्सरे कस्मिन्ग्रामे जातः किं किमकरोदिति मत्तो न निर्णयपथं प्राप्त, तथापि ११०० एकादशशतकेऽङ्के शके वङ्गदेशे जातात् गङ्गेशोपाध्यायात् पश्चात् कालात् पराचीन इति निश्चेतुं शक्यते, तदेतत् मत्प्रणीतन्यायतत्त्व-समीक्षाग्रन्थे न्यायग्रन्थकर्तृक्रमनिरूपणप्रस्तावे द्रष्टव्यम् अस्यैव रचिता न्यायसूत्रवृत्तिरपि युक्ततरा गोतमसूत्रार्थप्रकाशनं इत्यपि बोध्यम्, अस्यैतत्प्रणीतमुक्तावलीग्रन्थस्य मर्मभेदनाय यथाकथञ्चित् परिष्कारप्रक्रियामनुसरन्तौ महादेवभट्टरामरुद्रसूरी उत्तरोत्तरं द्वौ ग्रन्थौ व्यरचयताम् । सम्प्रति तु ब्राह्मणजातिदुर्भाग्यव-शाद्वा कालस्य विलक्षणपरिणामाद्वा संस्कृतेतरभाषाप्रचारकारणा-द्वास्मद्देशेग्रन्थानां पठनपाठनपरिपाटी प्रायः शाकल्यमतमेवाधिशि-यत् अतीवोपयुक्ता इमे ग्रन्था बुद्धिकौशलवर्धनाय सन्ति, परं सन्ति केचन मत्सरिणः, तेषां मत्सरपित्तनिमित्तकारोचकरोगविध्वंसन-कामोऽहमध्येतृध्यापकवर्गहितमाकलयन् गुरुप्रदर्शितां रचयञ्च मुक्तावल्या 'प्रभां' व्याख्याममायिपि, याऽतीवसरला मूलार्थयोजनपरा भावशुद्धिप्रकाशिका अवच्छेदकादिकाठिनतरनव्यन्यायपरिभाषास्वरू-पोद्घाटिनी आर्षमूलताप्रकाशिनी नातिबहुपाठा, पङ्क्तिपाठनकाल एव छात्रहृदयेऽज्ञानपटलपाटनक्षमेति स्वयमालोकयन्तु तत्त्वकलनाचणा विचक्षणाः । किन्तु यथासमयं यथामति कृतसंस्करणायामप्यस्यां सम्भाव्यमानपुरुषदोषवशात् सीसकाक्षरयोजकप्रमादहेतोः यन्त्रपी-

ञ्जनभराचरलोपादिकारणाद्वा यत्र क्वचन वर्णमात्राद्यशुद्धयोजाताः स्युः तासां सशोधनेन मामतिमात्रमनुकम्पयिष्यन्ति सहजानुकम्पानुरागिणो महाभागाः ।

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ॥

किञ्च एतस्या विस्तृता न्यायतत्त्वसमीक्षाख्या भूमिका मत्प्रणीता, यत्र न्यायशास्त्रेतिहासः ग्रन्थीयविषयपरिपाटीपरिशुद्धिः कतिपयाधुनिकाचार्यम्मन्यजनप्रक्षिप्तन्यायसिद्धान्तामणिमन्दिरोपरि-कुतर्कजालधूलिप्रक्षेपमार्जनम् इत्याद्युपयुक्ततरविचारान्द्‌ प्राकाशयम् माशासे सकलग्रन्थमुद्रणोत्तरमेव सापि सहैव प्रकाश्येत यथाकालं वा । अन्ते च विदुषां पुरत साञ्जलिबन्धं सर्वज्ञात्मनुनि प्रणीतमेकं पद्यं प्रकटयामि—

विद्वांसो यदि मम दोषमुद्गिरेयुर्यद्वा ते गुणगणमेव कीर्त्तयेयुः ।
तत्तं तद्वद्‌ मनुते मनो मदीयं कष्टं तद्वत मनुते यदाह मन्दः

विदुषामनुचरः—

नृसिंहदेवः

| अशुद्धम्। | शुद्धम्। |
| --- | --- |
| पृ० ६७ पं० १७। 'न देयम्'। | देयम्। |
| ,, ९९ ,, ६ ।-निषेध व्यर्थ। | —निषेधमव्यर्थं |

विशेषसूचना—मुक्तावलीपाठयुक्ततानिरीक्षणाय मया पञ्च ग्रन्था अग्रिके रक्षिताः, तत्रैकमपूर्णं बहुप्राचीनं हस्तलिखितम् अस्मन्मित्रवर मोहनलालज्योतिषशास्त्रिणाम्। एकं कलिकातामुद्रितम् परं गुरुणांपुस्तकम्। सर्वं दृष्ट्वा प्रायो गुजरातप्रिंटिङ्गप्रेसमुद्रितपुस्तकानुसारं मूलपाठमपाठयम् पाठभेदस्तु ग्रन्थगौरवभीत्या न प्रदर्शि।

सप्तमामुक्तावल्या विषयानुक्रमणी अथ द्वितीयखण्डत्रयमुद्रणकाले प्रकाशयेत।

# प्रभोपेता सिद्धान्तमुक्तावली ।

स्वाङ्के षडाननगजाननसूनुयुग्मं
धृत्वा स्तनामृतपयः परिपाययन्ती ।
सा नीलकण्ठसुकृतौघफलं भवानी
वाचां निरोधमपहन्तु ममाद्य माता ॥ १ ॥

तैस्तैर्भूरिपरिश्रमैः सनियमं श्रीमद्गुरोः पादयोः
शुश्रूषां विदधन्मुदैकमनसा यत्वां समाराधयम् ।
मातर्भारति ! तेन चेदधिगतः स्वल्पोऽपि तोषस्त्वया
तत्साहाय्यमलं स्थिरं करुणया कुर्या ममास्यां कृतौ ॥ २ ॥

श्रीभगवद्दत्ताभिधमहाकविं शीतलप्रसादञ्च ।
न्यायाम्भोधिश्रीकृष्णाकरायमेवोऽस्मि तौ गुरू प्रयतः ॥ ३ ॥

देवीदासाभिधं तातं विष्णुदेवीञ्च मातरम् ।
प्रणम्य मान्यं मान्याञ्च तयोरर्थं समर्थयन् ॥ ४ ॥

विश्वनाथस्य सूक्तीनां गूढतत्त्वप्रकाशिकाम् ।
शुभां कुर्वे "प्रभां" टीकां छात्राणां हितकाम्यया ॥ ५ ॥

चूडामणीकृतविधुर्वलयीकृतवासुकिः ।
भवो भवतु भव्याय लीलाताण्डवपण्डितः ॥ १ ॥

तत्र तावत् कारिकावलीग्रन्थस्य राजीवशिष्यहिताय स्वय-प्रणीतस्य व्याख्यानं चिकीर्षुः विश्वनाथपञ्चाननभट्टाचार्यो निर्विघ्नपरिसमाप्तये कृतस्येश्वरनिर्देशरूपमङ्गलस्य 'शिष्या अप्येवं कुर्यु'-रिति शिष्यशिक्षार्थं (सदाचारसंरक्षणार्थं) *निबन्धनं कुर्वन् ईश्वरं प्रार्थयते चूडामणीकृतेति—अचूडामणिः चूडामणिः सम्पद्यमानः कृत इति † चूडामणीकृत, चूडामणीकृतो विधुः चन्द्रो येन स

---

* ग्रन्थघटनं कुर्वन् । † 'कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः' (५।४।५०) इति सूत्रेण विहितः 'च्वि' प्रत्ययः 'अभूततद्भाव इति वार्त्तिकेन अभूततद्भावेऽर्थे भवति, 'अस्य च्वौ' ७।४। ३२ अनेन अवर्णस्य ईत्वे वेर्लोपे च्व्यन्तत्वादव्ययत्वम् ।

तथोक्त, अवलय. वलयः सम्पद्यमानः कृत इति वलयीकृत., वलयीकृतो वासुकिः महाख्यो नागो येन स तथोक्तः । भवः भवति अस्मात्प्रपञ्च इति ❀ भवो महादेवः भव्याय कल्याणाय भवतु ।

पुनः कीदृशो भव इत्याह लीलेति–लीलया ताण्डवं लीलाताण्डव तत्र पण्डितः कुशल इत्यर्थं ।

केचित्तु अस्मिन्श्लोके § समाप्त पुनरात्ताख्यं वाक्यदोषमाचक्षते, तथाहि—यत्र विशेष्यवाचक पदं पूर्वं क्रियया अन्वितं सत् निराकाङ्क्ष भवति पुनस्तस्यैव अन्यविशेषणेन सहान्वयलाभाय उपादानं समाप्तपुनरात्तत्वं दोष, यथा चात्रैव 'भव' इति विशेष्यपदस्य 'भवतु' इति क्रियापदेन प्रथममन्वयो जात, तदुत्तरं तस्यैव लीलेत्यादिविशेषणपदेन सह सम्बन्धकरणाय 'कीदृशो भव' इत्यनुसन्धानमेवोक्तदोष. ।

एतस्य समाधानन्तु—लीलेत्यादिपदं न विशेषणं किन्तु [illegible] णानि, [illegible] र्थं वा [illegible] भवत्यवाकाङ्क्षा, तदुपशमायैव लीलेत्यादिविशेषणपदस्योपादानं कृतम, यदीद विशेषणपद नोपादीयेत तदेष्टान्वयस्य लाभ एव न स्यात 'निराकाङ्क्षा काचित् प्रतिपत्तिः ( वाक्यार्थबोध. ) न सम्भवति' इति न्यायात, तस्मादत्रोक्तदोषस्य सम्भावनैव नेति बोध्यम ।

अयं भावः—क्रियाकारकपदानां परस्पराकाङ्क्षा नियता, पुत्रादिपदानामपि स्वसम्बन्धिपित्रादिपदाकाङ्क्षा नियता, प्रयोजनाकाङ्क्षापि नियतैव तेन विना वाक्यार्थबोधानुपपत्ते । एवमनियताकाङ्क्षास्थल एव समाप्तपुनरात्ताख्यो दोषो ज्ञातव्य, नियताकाङ्क्षास्थले तु नासौ दोष,. यथात्रैव विधुप्रभृतीनां चूडामण्यादिकरणे कैमर्थ्याकाङ्क्षायां जायमानायां लीलेत्यादिविशेषणोपादाने

---

❀ 'भू' धातो बाहुलकाद् ( ३ । ३ । ११३ ) अप् ।

§ वाक्ये समाप्ते पुनस्तदन्वयिशब्दोपादानम्, समाप्त सत्पुनरुपात्तमिति व्युत्पत्तेरिति प्रदीप ।

सप्रयोजनम्, तेन च भवतिक्रियान्वितस्यापि भवपदस्य पुनरन्वयो न दोषावहः।

अनेन भवस्य नृत्यवर्णनेन प्रमुदितात् तस्मात् प्रार्थिता अर्था अवश्यं लभ्यन्त इति सूचितम्। नहि प्रमुदितः कश्चिदपि कस्यचिन्मनोरथं पूरयतीति लोकप्रसिद्धमेव ध्वनितम्। अधिकन्तु दिनकरीरामरुद्र्यादिग्रन्थे द्रष्टव्यम्। गौरवभयात् छात्राणां सुकुमारमतीनां बुद्धिव्याकुलताभयाच्च न बहु प्रपञ्चितम्।

निजनिर्मितकारिकावलीमतिसंक्षिप्तचिरन्तनोक्तिभिः।
विशदीकरवाणि कौतुकान्ननु राजीवदयावशंवदः॥ २॥

शिष्याणां शुश्रूषायै * प्रतिजानीते निजनिर्मितेति—निजेन स्वेन निर्मिता रचिता या कारिकावली तां निजनिर्मितकारिकावलीम्, अत्यन्तं सङ्क्षिप्ता सङ्क्षेपं प्राप्ता या चिरन्तनानां कणादप्रभृतीनां मुनीनाम् उक्तयो वचांसि यत्र प्रतिपाद्या युक्तयः ताभिः, कौतुकात् कुतूहलात्, ननु एव अनायासादेवेत्यर्थः, विशदीकरवाणि स्फुटीकरोमि। कीदृशोऽहमित्याह—राजीवेति राजीवसहाये शिष्ये या दया कृपा तस्या वशंवदः तदधीन इत्यर्थः।

अयं भावः—यद्यपि लीलावत्यादयः प्राचीना निबन्धाः सन्ति येषां पठनेनैव कारिकावलीबोध्योऽर्थो ज्ञातुं शक्यतेऽतो मुक्तावलीग्रन्थनिर्माणं निष्फलमेव भाति, तथापि तेषु भूयान् पाठः, सुकुमारमतीनां बालानां यस्याध्ययने बहुक्लेशो भवतीत्यतोऽल्पप्रयत्नेनैव यथा बहुन्यायसिद्धान्ता ज्ञाताः स्यात् तथा मुक्तावलीग्रन्थो रचनीय एवेति कृत्वा नास्य निर्माणं निष्फलम्।

अत्र चिरन्तनोक्तिकथनेन स्वस्य ग्रन्थस्य सन्मूलत्वं सूचितम्, कपोलकल्पितत्वञ्च वारितम्। एतेन ये केचिदाधुनिका गुरुसम्प्रदायशून्या दर्शनमर्मबोधरहितमतयो मुक्तावलीं जालग्रन्थं वदन्ति ते

---

* प्रतिज्ञां करोति। प्रतिज्ञा च स्वकर्त्तव्यत्वेन निर्देशः, इत्यादिभिरुक्तं शास्त्रैव स्वकर्त्तव्यत्वेन प्रतिज्ञानात्।

परास्ता वेदितव्या । एतच्चाग्रेऽस्मद्व्याख्याने तत्र तत्र स्फुटीभविष्यति । राजीवेतिपदेन स्वस्य ग्रन्थकरणे प्रयोजनं प्रदर्शितम् ।

ननु—'सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते । शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः' इति नियमादत्र च विषयादीनामनुक्तेः कथमस्मिन् ग्रन्थे * प्रेक्षावतां प्रवृत्तिः स्यादिति तच्छङ्कामपनिनीषुः विषयादिकं सूचयति सद्द्रव्येति—

सद्द्रव्या गुणगुम्फिता सुकृतिनां सत्कर्मणां ज्ञापिका
सत्सामान्यविशेषनित्यमिलिताभावप्रकर्षोज्ज्वला ।
विष्णोर्वक्षसि विश्वनाथकृतिना सिद्धान्तमुक्तावली
विन्यस्ता मनसो मुदं वितनुतां सद्युक्तिरेषा चिरम् ॥ ३ ॥

सद्द्रव्या पृथिव्यादिनवद्रव्यैः सहिता युक्ता तेषां प्रतिपादनकरीत्यर्थः, गुणगुम्फिता गुणैः रूपरसादिभिश्चतुर्विंशतिसङ्ख्याकैर्गुम्फिता युक्ता सत्कर्मणाम् उत्क्षेपणादिपञ्चविधकर्मणां ज्ञापिका बोधिका, सत्सामान्येति—सत् जातिरूपं सामान्यम्, विशेषाः नित्यद्रव्यवृत्तयोऽनन्ताः स्वतो व्यावृत्ताश्च, नित्यः समवायो नित्यसम्बन्धः तैः मिलिता, अथवा नित्यमिलितं समवायसम्बन्धः, सन्ति सामान्यविशेषनित्यमिलितानि यस्यां सा, अभावप्रकर्षोज्ज्वला अभावस्य भावभिन्नसप्तमपदार्थस्य यः प्रकर्षः प्रागभावादिभेदरूपं वैलक्षण्यं तस्योज्ज्वला प्रकाशयित्री, एषा बुद्धिस्था सिद्धान्तमुक्तावली सिद्धान्ता एव मुक्ता मणिविशेषास्तासामावली पङ्क्तिः, विष्णोः कमलापतेर्नारायणस्य सविशेषवक्षस्थले वक्षसि वक्षःस्थले, विन्यस्ता सम्यगर्पिता, सुकृतिनां मेधाविनां पण्डितानामित्यर्थः, मनसो हृदयस्य, मुदं सन्तोषं प्रसन्नतामित्यर्थः, चिरं बहुकालं, वितनुताम् विस्तारयतु । कथम्भूता सिद्धान्तमुक्तावली, सद्युक्तिः सद्भिः वादिभिरखण्डनीया युक्तयः तर्का यस्यां सा ।

---

* हेयोपादेयविवेकनिपुणधिषणातिशयवताम् ।

अनेन द्रव्यादिपदार्थतत्त्वनिरूपणेन ग्रन्थे मुक्तावल्या उपमा सूचिता । ततश्च मुक्तावलीपक्षे एव योजयितव्यम्—मुक्तामाला हि द्रव्येण साध्या क्रेतव्या निर्मातव्या वा भवतीति सद्रव्या । गुणेन सूत्रेण गुम्फिता प्रोता, सुकृतिनां पुण्यवतां यानि सन्ति शुभानि परमेश्वरनामस्मरणादीनि कर्माणि तेषां ज्ञापिका बोधिका, पुण्यवन्त एव मुक्तामालाद्युत्तमभोग्यपदार्थान् लभन्ते न तु पापात्मान इति भावः । सत्सामान्यम्, उत्तमा जातिः, विशेषो मुक्तानां मसृणत्वं निर्मलत्ववर्तुलत्वादिकञ्च ताभ्यां नित्यं सदैव मिलिता सम्बद्धा, अभावे तेजोऽभावरूपेऽन्धकारे सति प्रकर्षेण उज्ज्वला वसनादिपदार्थप्रकाशिकेति यावत् । एवं यथा मुक्तावली द्रव्यादिसकलपदार्थवती तथा सिद्धान्तमुक्तावलीनामको ग्रन्थोऽपीत्यर्थः ।

अत्र मुक्तावल्या उपमाकथनेन ग्रन्थस्य सर्वथा दोषराहित्यं प्रकटीकृतम् ।

एवञ्चास्य ग्रन्थस्य द्रव्यादयः पदार्था विषयः, पदार्थतत्त्वावधारणं * प्रयोजनम्, ग्रन्थविषययोः प्रतिपाद्यप्रतिपादकभावः, अधिकारिग्रन्थयोर्बोध्यबोधकभावः अधिकारिविषययोश्च ज्ञातृज्ञातव्यभाव इत्यनेकविधः सम्बन्धः, पदार्थज्ञानकामोऽधिकारीति † अनुबन्धचतुष्टयं प्रदर्शितम् । तथा च विषयसम्बन्धादिप्रदर्शनेनास्मिन् ग्रन्थे प्रेक्षावतां प्रवृत्तिर्भवेदित्युक्तं भवति ।

किञ्च सिद्धान्तमुक्तावल्या शिष्योर्ध्वगतिं विन्यस्ततरकथनेन

---

* परमस्य शास्त्रस्य मोक्ष एव परमं प्रयोजनम् । मोक्षश्च न्यायमते आत्यन्तिकी दुःखनिवृत्तिः । दुःखानि तु एकविंशतिसंख्याकानि । तथाहि—षड् इन्द्रियाणि, षड् विषयाः षड् बुद्धयः, शरीरम्, सुखम्, दुःखञ्चेति । एतेषां निवृत्तिक्रमस्तु शास्त्रेण तत्त्वज्ञानं भवति, तेन मिथ्याज्ञानस्य नाशः, ततो रागादिदोषाणां नाशः, ततः प्रवृत्तेरनुत्पादः, ततो जन्मानुत्पत्तिः, ततो दुःखानुत्पादः, एतदभिप्रायेणाह पदार्थतत्त्वावधारणं प्रयोजनमिति । सङ्क्षेपात् 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः' तदत्यन्तविमोक्षोऽपवर्गः इति महर्षिगोतमकृतन्यायमतमूलकमेव ।

† अनुबन्धश्चात्र ग्रन्थप्रवृत्तिप्रयोजकज्ञानविषयत्वम् ।

आरब्धुमिष्टस्य ग्रन्थस्य विघ्नविघाताय विघ्नानां प्रत्यूहानां विघाताय ध्वंसाय कृतं मङ्गलं शिष्यशिक्षायै, स्वकर्तव्यत्वेन ज्ञानं शिक्षा, शिष्याणां शिक्षा शिष्यशिक्षेति षष्ठीतत्पुरुषः, निबध्नाति ग्रन्थघटकीकरोति नूतनेत्यादिना । यथाह ग्रन्थारम्भेऽन्तरायप्रशमनाय मङ्गलं करोमि, मच्छिष्या अपि तथैव शिष्टाचारं पालयेयुरित्याशित कसम्प्रदायरक्षणाय मङ्गलं करोतीत्यर्थः ।

---

**नूतनजलधररुचये गोपवधूटीदुकूलचौराय ।**
**तस्मै कृष्णाय नमः संसारमहीरुहस्य बीजाय ॥१॥**

नूतनो नवीनो वर्षणाभिमुखजलभरितो यो जलदो मेघस्तस्य रुचिरिव रुचिर्यस्य स तस्मै गोपानां वल्लवानां या वध्वस्तरुण्यस्तासां यानि दुकूलानि क्षौमवसनानि तेषां चौराय अपहारिणे, संसार प्रपञ्च एव महीरुहो वृक्षस्तस्य बीजाय निमित्तकारणाय, तस्मै शास्त्रप्रसिद्धाय कृष्णाय वासुदेवाय ( देवकीनन्दनाय ) भगवते नमः नमस्कारो भवत्विति मूलकारिकाया अक्षरार्थः । किञ्च—गां वाणीं पिपन्ति रक्षन्ति इति गोपा वेदास्तेषां वधूटी बुद्धिः तस्या यद् दुकूलमावरणं तस्य चौराय अपहर्त्रे इत्यर्थः, नवत्वेन मुग्धत्वेन चाज्ञानतिमिरमाच्छ्यारोपितं वधूटीत्वं ज्ञेयम् । दाक्षिणात्यास्तु—गां पृथ्वीं पान्ति रक्षन्तीति गोपाः पाण्डवाः तेषां वधूटी द्रौपदी तस्या दुकूलस्य वसनस्य चौराय चोलाय वर्धयित्र इत्यर्थः 'चुर्' समुच्छ्राये इति धातुः । एतेन 'अज्ञानतः कृतं पापं प्रायश्चित्तेन नश्यति' इति बाल्यावस्थायां कृतेन बालिकावस्त्रापहरणेन जन्यं यत्पापं तस्य प्रायश्चित्ताय अनाथायै द्रौपद्यै वस्त्रं दत्तवान् भगवदवतारः श्रीकृष्णः, अन्योऽप्येवं प्रायश्चित्तं कुर्यादिति केवलं मर्यादारक्षायै इत्यपरे । अवतारत्वन्तु सर्वथाऽविलुप्तज्ञानक्रियावत्त्वे सति साक्षान्मायिकविलासवत्त्वम् इत्यन्यत्र विस्तरः ।

त्रिविधं *मङ्गलम्—आशीर्वादो नमस्क्रिया वस्तुनिर्देशश्च ।

---

* 'मङ्गलच्' इत्यौणादिकेन ( उ० ५ । ७१६ ) मङ्गल्यर्थकात् 'मगि' धातो अलच् प्रत्यये रूपम् ।

परमेश्वरात्स्वस्य स्वशिष्यादेश्च वाञ्छितार्थप्रार्थनमाशीर्वादः । स्वापकर्षबोधानुकूल स्वीयव्यापारविशेषो नमस्कारः । नमस्कारादिकमन्तरा स्वइष्टदेवताकीर्तनं वस्तुनिर्देशः ।

मङ्गलस्य लक्षणन्तु— विघ्नभिन्नत्वे सति विघ्नध्वंसप्रतिबन्धकाभावभिन्नत्वे सति च प्रारिप्सित ( ग्रन्थ ) विघ्नध्वंसासाधारण कारणमिति ज्ञेयम् । विघ्नेऽतिव्याप्तिवारणाय विघ्नभिन्नत्वे सतीति विशेषणम् । विघ्नध्वंसप्रतिबन्धकाभावेऽतिव्याप्तिवारणाय विघ्नध्वंसेत्याद्यपरं विशेषणम् । कारीरीयागेऽतिव्याप्तिवारणाय प्रारिप्सितेति । ईश्वरादिनवविध*साधारणकारणे अतिव्याप्तिवारणाय असाधारणपदनिवेशः ॥ आशीर्वादान्यतमत्वं मङ्गलमिति संक्षिप्तं मङ्गललक्षणम् ।

ननु मङ्गलं न विघ्नध्वंसं प्रति न वा समाप्तिं प्रति कारणं विनापि मङ्गलं नास्तिकादीनां ग्रन्थे निर्विघ्नपरिसमाप्तिदर्शनादिति चेन्न । अविगीतशिष्टाचारविषयत्वेन मङ्गलस्य सफलत्वे सिद्धे तत्र च फलजिज्ञासायां सम्भवति दृष्टफलकत्वे अदृष्टफलकल्पनाया अन्याय्यत्वात्, उपस्थितत्वाच्च समाप्तिरेव फलं कल्प्यते ।

श्रुतिं ये न प्रमाणयन्ति चार्वाकाद्या नास्तिकः तेषां पूर्वपक्षमादाय शङ्कते—नन्विति । नास्तिका हि ईश्वरमन्यां चेष्टदेवतां माङ्गीकुर्वन्तो ग्रन्थारम्भे किमपि मङ्गलं न कुर्वते अथ च तेषां निर्विघ्ना ग्रन्थसमाप्तिर्दृश्यते तस्मान्मङ्गलस्य विघ्नध्वंसादि फलं न नियतमतो ■ कर्तव्यमिति शङ्काग्रन्थार्थः । अयमत्र मङ्गलाचरणखण्डनेऽनुमानप्रकारः—मङ्गलाचरणं न युक्तं निष्फलत्वात् जलताडनवत् । अत्र निष्फलत्व हेतुः स्वरूपासिद्ध इति कथं मङ्गलाचरणस्य युक्तत्वाभावं साधयेदित्युच्येत, तदा तत्परिहारोऽनुमाना-

* ईश्वर, तस्य ज्ञानचिकीर्षाकृतयः, दिक्कालौ, अदृष्टम् ( धर्माधर्मौ ) प्रागभावध्वंसौ साधारणकारणानि कार्यमात्रं प्रति प्रतिबन्धकसंसर्गाभाव इत्येवं साधारणकारणानि नव भवन्ति ।

'न्तरेण कर्त्तव्य ;तथाहि—मङ्गलं निष्फलं फलविशेषशून्यत्वात् यन्नैवं तन्नैवम् अत्र फलविशेषशून्यत्वेन हेतुना पूर्वानुमाने हेतुभूतस्य निष्फलत्वस्य सिद्धि तस्मात् 'निष्फलत्व' हेतुः स्वरूपासिद्ध. । एवञ्चानेन पूर्वपक्षग्रन्थेन मङ्गलस्य व्यतिरेकव्यभिचारो दर्शित । *व्यतिरेकव्यभिचारस्य लक्षणन्तु 'कार्य्याव्यवहितप्राक्क्षणावच्छेदेन कार्य्याधिकरणवृत्त्यभावप्रतियोगितावच्छेदकत्वम्' यथा कार्यं ग्रन्थसमाप्ति तस्या अव्यवहित पूर्वस्मिन् क्षण तस्या एव अधिकरणभूते च नास्तिकग्रन्थे विद्यमानो योऽभाव मङ्गलाभाव, तस्य प्रतियोगि मङ्गल, तन्निष्ठा या प्रतियोगिता, तदवच्छेदकत्वं मङ्गलत्वमेवेति न मङ्गलस्य समाप्तिरूपं फलम्।

एवञ्च पूर्वपक्षीयानुमानमित्थं निःसरति—मङ्गलं विघ्नध्वंस प्रति समाप्तिं प्रति वा कारणत्वाभाववत् कार्य्याधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्वात्, घटप्रति वेमवत् । यथा घटरूपस्य कार्य्यस्याधिकरणे चक्रादौ वर्त्तमानो या वेमात्यन्ताभाव तस्य प्रतियोगि वेम तन्न घटोत्पत्तिं प्रति कारणम्, तथैव समाप्तिरूपफलस्याधिकरणभूतेषु नास्तिकादिग्रन्थेषु विद्यमानो यो मङ्गलाभाव तस्य प्रतियोगि मङ्गल नैव ग्रन्थसमाप्तिकारणम् [ यस्याभाव. स तस्य प्रतियोगीति शास्त्रसङ्केत ] ततश्च विनापि मङ्गल नास्तिकादिग्रन्थे समाप्तिफलसत्त्वे कथं तस्य कारणतेति पूर्वपक्षयितुराशय. ।

निर्विघ्नपरिसमाप्तिदर्शनात् निर्विघ्नत्वपूर्वकसमाप्तिदर्शनादित्यर्थः ।

तदेतत् सिद्धान्ती खण्डयति ' चेन्न ' इत्यादिग्रन्थेन । अविगीतेति—विरुद्धो गीतो विगीत अथवा शास्त्रात् विरुद्ध गीतं कथनं यस्य स विगीतो निन्दित न विगीतोऽविगीतः । †शिष्टानां

---

* कारणाभावे कार्य्यभावो व्यतिरेकव्यभिचार इति सरल लक्षणम्, पर कठिनलक्षणस्यापि सरलार्थबोधनप्रकारमनुसरन् शिष्यबुद्धयोद्योतयन् एवमटीकयम् ।

† शिष्टत्वञ्च मातृश्रद्धादिभिवदानुमतकर्मकर्त्तृत्वम् । आस्तिकाभासे व्यभिचारवारणाय भक्तीत्यादि । चैत्यवन्दनप्रवृत्तबौद्धे व्यभिचारवारणाय वेदानुमतेति । भक्तिश्च आराध्यत्वेन ज्ञानम् । श्रद्धा च फलावश्यम्भावनिश्चयः ।

फलसाधनतांशे भ्रान्तिरहितानाम् [ महापुरुषाणाम् ] आचारः कृतिरिति शिष्टाचारः, अविगीतश्चासौ शिष्टाचार इति अविगीतशिष्टाचार इति कर्मधारयः। तस्य विषयो निरूप्योऽनुष्ठेय इति यावत् तस्य भावस्तत्त्वं तेन हेतुनेत्यर्थः। सफलत्वे सामान्यतः फलवत्त्वे सिद्धे अनुमिते। तत्र च तस्मिन्मङ्गले फलजिज्ञासायां विशेषतः फलस्य ज्ञातुमिच्छायाम्। दृष्टफलकत्वे दृष्टमेव विघ्नध्वंसः विघ्नध्वंसपूर्विका समाप्तिर्वा फलं यस्य तद्भावस्तत्त्वं तस्मिन्। सम्भवति सति। अदृष्टेति—अदृष्टस्वर्गादिफलकल्पना न युक्तेति भावः। उपस्थितत्वादिति—'आरब्धं मे कर्म निर्विघ्नं समाप्यताम्' इति या ग्रन्थादौ प्रवृत्तस्य पुरुषस्य कामना, तद्विषयत्वेन यदनुमानं तस्मिन् प्रवर्त्तमानस्य [ प्रतिपत्तुः प्रमातुः ] समाप्तिरेव फलमुपस्थितं [ अनुमितं ] भवति तस्मादित्यर्थः। कल्प्यते अनुमीयते।

अयमस्य सिद्धान्तग्रन्थस्याशयः—वेदविधिमाश्रित्य सदाचारपरिपालकानां तस्य तस्य साध्यस्य साधनस्वरूपे भ्रान्तिरहितानां पुरुषाणां काचिदपि प्रवृत्तिर्न निष्फला भवति। ते हि यथा अन्येषां कर्मणामादौ भगवन्नामस्मरणं गणपत्यादिपूजनं वा कुर्वते तथैव ग्रन्थादौ मङ्गलमप्यातन्वते, तेषां तथाविधमङ्गलाचरणप्रवृत्तिनो वयं प्रथमं मङ्गलस्य साफल्यमनुमास्यामहे, ततः फलविशेषजिज्ञासायां समाप्तिं ग्रन्थसमाप्तिप्रतिबन्धकानां विघ्नानां ध्वंसं वा फलं साधयिष्यामो येन मङ्गलाचरणस्य नैष्फल्यं नैव सेत्स्यति। तेनास्तिकयुक्तीनामग्रे नास्तिकः किं करिष्यति। अत्र नास्तिकतर्कनिरसनप्रकारश्चायम्—मङ्गलं सफलम् अविगीतशिष्टाचारविषयत्वात् दर्शादियागवत् यथा दर्शादियागकर्म अविगीतशिष्टाचारविषयत्वेन सफलं तथा मङ्गलाचरणमपि कर्म सफलम्, यत्र यत्र अविगीतशिष्टाचारविषयत्वं तत्र तत्र सफलत्वमिति व्याप्तिः। अनेनानुमानेन मङ्गलस्य सफलता सिद्धा भवति। एवं पूर्वपक्षीयनिष्फलतासाधकमनुमानम् अस्मदीयेऽस्मिन्ननुमाने सति नैवोत्थातुमर्हति। यच्च पूर्वपक्षीयानुमानेन समाप्त्यादिफलविशेषाभावः साधितः

तस्येदमुत्तरम्—'मङ्गलं समाप्तिफलकं, समाप्त्यन्याफलकत्वे सति सफलत्वात्', यत् समाप्तिभिन्नफलवत् सफलश्च तत् न समाप्तिरूपफलवत्, यथा दर्शादि कर्म समाप्तिभिन्नस्वर्गादिफलवत् सफलञ्च न तत् समाप्तिरूपफलवत्। मङ्गलन्तु न तथा, इदन्तु समाप्तिभिन्नफलवत् सत् न सफलम् अपितु समाप्तिभिन्नाफलकत्वे सति सफलम् अतः समाप्तिफलकमेवेत्यर्थ।

अपि च नैव मङ्गलस्य स्वर्गादि अदृष्टं फलं मन्तव्यम्। तत्रैव अदृष्टं फलं कल्प्यते यत्र दृष्टं फलं नोपस्थितं भवति। अत्र तु मङ्गलस्य दृष्टमेव फलं ग्रन्थसमाप्तिरूपं ग्रन्थसमाप्तिप्रतिबन्धकानां विघ्नानां ध्वंसरूपं चेति निष्फलमपि पन्था।

इत्थं च यत्र मङ्गलं न दृश्यते तत्रापि जन्मान्तरीयं तत्कल्प्यते, यत्र च सत्यपि मङ्गले समाप्तिर्न दृश्यते तत्र बलवत्तरो विघ्नो विघ्नप्राचुर्यं वा बोध्यम्, प्रचुरस्यास्यैव बलवत्तरविघ्ननिराकरणकारणत्वम्।

सम्प्रति पूर्वप्रदर्शितव्यतिरेकव्यभिचारस्योद्धरणायाह—इत्यञ्चेति। मङ्गलस्य समाप्तिफलकत्वं सिद्धं चेत्यर्थः। तत्रापि नास्तिकग्रन्थादौ। जन्मान्तरीयम् पूर्वजन्मभवम्। तत् मङ्गलम्। कल्प्यते अनुमीयते, समाप्तिरूपेण कार्येणेति शेषः। * अनुमानप्रकारश्चायम्-अयं नास्तिकः [ पूर्वजन्मनि ] कृतमङ्गलकः ग्रन्थस्य निर्विघ्नपरिसमाप्तिदर्शनात् आस्तिकवत्। यत्र २ निर्विघ्ना समाप्तिः तत्र २ मङ्गलस्य सत्त्वमिति व्याप्तिः। यथा आस्तिकग्रन्थे। नहि कारणेन विना कार्यं भवतीति भावः। एवञ्च नैव व्यतिरेकव्यभिचारः। स्यादेतत्, मा भूद् व्यतिरेकव्यभिचारः, कारणसत्त्वेऽपि कार्यस्याभावरूपोऽन्वयव्यभिचारस्तु भविष्यति इत्याशङ्क्य अन्वय-

* ... प्रमाण-

व्यभिचारं निराकरोति—यत्र चेति । यत्र कादम्बर्यादिग्रन्थेषु मङ्गले कृतेऽपि समाप्तिर्न दृश्यते तत्र बलवत्तरः अतिशयेन बलवानिति बलवत्तरः बलीयान् यो विघ्नः अन्तरायः, विघ्नप्राचुर्यं विघ्नानां बाहुल्यं वा, वाशब्दः पक्षान्तरद्योतकः ।

प्रचुरस्येति—प्रचुरस्य प्रभूतस्य मङ्गलस्यैव । बलवत्तरेति—बलवत्तरविघ्नस्य निराकरणे दूरीकरणे, कारणत्वं हेतुभाव ।

अयं भावः—यत्र आस्तिकग्रन्थादौ मङ्गले कृतेऽपि समाप्तिर्न जाता तत्र मङ्गलकरणापेक्षया बलीयान् विघ्नोऽनुमातव्य । यद्वा यावत्सङ्ख्यं मङ्गलं कृतं ततः प्रचुरा अधिकसङ्ख्याकास्तत्र विघ्ना सन्ति तेन न समाप्तिरिति कल्पनीयम् । एवञ्च विघ्नसमसङ्ख्याकमेव मङ्गलं विघ्नविनाशकं न न्यूनमिति सिद्धं भवति ।

विघ्नध्वंसस्तु मङ्गलस्य द्वारमित्याहुः प्राञ्चः ॥

ननु कारणसत्त्वे कार्यस्यावश्यम्भाव इति नियम, कादम्बर्यादिग्रन्थे विघ्नध्वंसो न स्यात् परं मङ्गलरूपकारणादर्शनात् समाप्तिरवश्यं भवेदितीमां शङ्कां परिहरन्नाह—विघ्नध्वंसस्त्विति । द्वारं व्यापारः । कारणसत्त्वेऽपि यदि तस्य व्यापारो न स्यात् नैव कार्यं जायते, न हि कुठारस्य सत्त्वमात्रेण छिदारूपं फलं दृष्टचरम् अपि तु कुठारस्य काष्ठेन सह संयोगविशेषरूपे व्यापारे सत्येव छिदा भवति, एवमेव कादम्बर्यादौ विघ्नानां बाहुल्येन मङ्गले कृतेऽपि नैव विघ्नध्वंसो जातः तत्कथं विद्यमानमपि मङ्गलं विघ्नध्वंसात्मकव्यापाराभाववत् समाप्तिरूपं फलं जनयेत् । मङ्गलेन विघ्नध्वंसः क्रियते तदेव समाप्तिफलं जनयति नान्यदितिभावः । इदञ्च प्राचीनानां नैयायिकानां मतमित्याह—इत्याहुरिति ।

नव्यास्तु मङ्गलस्य विघ्नध्वंस एवं फलं समाप्तिस्तु बुद्धिप्रतिभादिकारणकलापात् ।

सम्प्रति न्यायचिन्तामणिकृतां गङ्गेशोपाध्यायानां मतमाह—नव्यास्त्विति । विघ्नध्वंस एव फलमिति—पञ्चकारणं समाप्ते-

दर्शयन्नुद्देशं । फलं प्रवृत्युद्देश्यम् । विघ्नध्वंसादन्यत्र मङ्गलफलमिति भाव.।

ननु समाप्तिस्तर्हि केन हेतुना जायेत इत्याह—समाप्तिस्त्विति । बुद्धिप्रतिभादिकारणकलापात्, तत्र बुद्धिर्ज्ञानम्, प्रतिभा प्राक्तनसंस्कारविशेषः स्फूर्त्याख्यः, आदिपदेन विघ्नसंसर्गाभावग्रहः, बुद्धिप्रतिभाविघ्नससर्गाभावरूपकारणसमुदाय एव समाप्तिहेतुर्न मङ्गलमित्यर्थः ।

> बुद्धिस्तात्कालिकी ज्ञेया मतिरागामिगोचरा ।
> प्रज्ञां नवनवोन्मेषशालिनीं प्रतिभां विदुः ॥ इति ॥

नचैवं स्वतःसिद्धविघ्नविरहवता कृतस्य मङ्गलस्य निष्फलत्वापत्तिरिति वाच्यम् । इष्टापत्तेः, विघ्नशङ्कया तदाचरणात् । तथैव शिष्टाचारात् । नच तस्य निष्फलत्वे तद्बोधकवेदाप्रामाण्यापत्तिरिति वाच्यम्, सति विघ्ने तन्नाशस्यैव वेदबोधितत्वात् । अत एव पापभ्रमेण कृतस्य प्रायश्चित्तस्य निष्फलत्वेऽपि न तद्बोधकवेदाप्रामाण्यम् ।

प्रकारान्तरेण मङ्गलस्य नैष्फल्यं शङ्कते—नचैवमिति । एवं मङ्गलस्य विघ्नध्वंसम्प्रति जनकत्वे सत्यर्थात्पर्यं स्वतःसिद्धविघ्नविरहवता स्वाभाविकविघ्नात्यन्ताभाववता ।

समाधत्ते—इष्टापत्तेरिति । मन्तु विघ्नात्यन्ताभाववता पुरुषेण कृतस्य मङ्गलस्य नैष्फल्यं नैव दोष पश्याम इति भाव ।

ननु कथं निष्फले कर्मणि विघ्नात्यन्ताभाववतः शिष्टस्य प्रवृत्ति. स्याद् ? अत आह—विघ्नशङ्कयेति । तदाचरणात् मङ्गलाचरणात् । संशयनिश्चयसाधारणविघ्नज्ञानमेव प्रवर्त्तकमिति भावः । विघ्नशङ्कया मङ्गलाचरणमेवासिद्धम् इत्यत्राह—तथैव शिष्टाचारादिति । विषयतासम्बन्धेन मङ्गले शिष्टानां प्रवृत्तिर्विघ्नशङ्कयेत्यर्थः ।

स्वतो विघ्नाभावस्थले कृतस्य मङ्गलस्य निष्फलत्वपक्षे वेदस्या-

प्रामाण्यमित्याक्षिपति——नचेति । तस्य निर्विघ्नसुरव्याऽनुष्ठित मङ्गलस्य । तद्बोधकेति तस्य मङ्गलविघ्नध्वंसयोः कार्यकारणभावस्य बोधको यो वेद 'समाप्तिकामो विघ्नध्वंसकामो वा मङ्गलमाचरेत् इत्याकारा (कल्प्यमाना) *श्रुति तस्य यद् अप्रामाण्य बाधितार्थ बोधकत्वेन प्रमाण्याभाव तस्यापत्ति प्राप्ति स्यात् ।

पलाशिरस्यति—सति विघ्न इति । विघ्न सत्त्वेन यद्न विघ्न नाशो बोधित न भवति इत्यर्थः ।

अथ भाव—स्वत सिद्धविघ्नविरहस्थले विघ्नात्मकप्रतियोगिरूपकारणाभावेन विघ्नध्वंसरूपकार्यस्यानुत्पत्तावपि नैव मङ्गलविघ्नध्वंसयोः कार्यकारणभावबाधः, नापि च कारणतावाधकश्रुतिवाक्यस्याप्रामाण्यापत्तिः नहि कारणाभावस्थले कार्याभावस्य बाधकत्वाभाव प्रमाणसम्प्रतिपन्न ।

यथा कपालाद् दण्डाद् घटानुत्पत्तावपि दण्डो घटकारणं' मिति वाक्यस्य नाप्रामाण्यम् घटाव्यवहितपूर्वेऽस्मिन् क्षणे विद्यमानऽपि दण्डे इतरकारणाभावे घटानुत्पत्तिदर्शनात् किन्तु दण्डभिन्नसकलमृत्तिकादिघटकारणसत्त्वे एव दण्डो घटस्य कारणमिति तस्य वाक्यस्य तात्पर्यम्, एवमत्र विघ्न सत्येव मङ्गलस्य विघ्नध्वंसकारिकारणत्वम् । विघ्नाभावस्थले तु सत्यपि मङ्गल नाकारणाभाव भजत इति तु प्रकृतस्याशयो वाच्य ।

मङ्गलविधायकश्रुतिवाक्यानुमानप्रकारश्चेत्थम्—मङ्गल वेदबोधितकर्तव्यताकम्, अलौकिकाविगीतशिष्टाचारविषयत्वात् दर्शादियागवत् । अत एव नावश्यति प्रतियोगिन कारणत्वादप । तद्बोधकवेदाप्रामाण्यापत्तिः प्राप्तिरस्य पापनाशकत्वबोधको यो वेद तस्याप्रामाण्यापत्तिर्न चर्च ।

---

* कश्चित्तु स्वस्ति न इन्द्रो वृद्धश्रवा, शन्नो मित्रः शं वरुण इत्याद्या मन्त्रा प्रत्यक्षभूता सकलसमाप्त्युच्चारणेन निर्णीत श्रुति कमनन निष्फला या सन्ताति पुनरस्यानवश्रुतिरनुमानेन प्राप्यमाणा च कल्पनामति तत्र सन्तु नाचिण । यत्तु आशीर्वादात्मकमनुष्ठानमस्य मङ्गलस्याचरणीयत्व तच्च श्रुति प्रत्यक्ष मनुपलम्भात्कल्पनीयमिति श्रुत्या सम्प्रदायवशा सगच्छन्ते साधु पश्य म ।

मङ्गलं तु विघ्नध्वंसविशेषे कारणं विघ्नध्वंसविशेषे च विनायकस्तवपाठादि ।

ननु—यदि मङ्गलं विघ्नध्वंसम्प्रति कारणं स्यात्, अर्थात् यदि विघ्नध्वंसो मङ्गलैकसाध्यः स्यात् तदा विनायकस्तवपाठेन विघ्ना न नश्येयुः नहि विनायकस्तवपाठो मङ्गलं, ततश्च पुनरपि व्यभिचारदोषतया शङ्काया परिहारं मन्वान आह—मङ्गलन्त्विति । विघ्नध्वंसविशेषे जननीयविघ्नध्वंसे । कारणं हेतुः । विघ्नध्वंसविशेषे च विनायकस्तवपाठादि', विनायकस्तवपाठेन अन्यो विघ्नध्वंसः मङ्गलेन चान्यो विघ्नध्वंस इति नैव व्यभिचार इत्यर्थः । कुण्ठतान्याद्यभिघातरूपस्य पाठस्य ज्ञानविशेषरूपान्मङ्गलाद् भेदः, एवमुभयोः कार्यभूतयोः विघ्नध्वंसयोरपि परस्परं विभेद एवेत्यभिप्रायः । सर्वे विघ्नाः शमं यान्ति गणेशस्तवपाठतः इति वाक्यन्तु गणपतिमाहात्म्यपरमिति यदि केचित् । अधिकमन्यतो ज्ञेयम् । विनायकस्तवपाठादिरित्यत्र आदिना प्रायश्चित्तस्यापि सङ्ग्रहः ततश्च कश्चिद्विघ्नध्वंसो मङ्गलजन्यः, कश्चित् विनायकस्तवपाठजन्यः, कश्चित् प्रायश्चित्तानुष्ठानजन्य इति निष्कर्षः ।

कश्चित्तु विघ्नात्यन्ताभाव एव समाप्तिसाधनं प्रतिबन्धकसंसर्गाभावस्यैव कार्यजनकत्वात् । तथ च नास्तिकादीनां ग्रन्थेषु जन्मान्तरीयमङ्गलजन्यदुरितध्वंसः, स्वतःसिद्धविघ्नात्यन्ताभावो वास्तीति न व्यभिचार इत्याहुः ।

ननु—यदि विघ्नध्वंस एव मङ्गलफलं तदा समाप्तिकामो मङ्गलं नाचरेत् यस्य यत्फलं स्यात् तत्कामस्यैव तत्र प्रवृत्तेः, नहि तृप्तिकामः पाकं विहायान्यत्र प्रवर्तेत इतीमां शङ्कां खण्डयति—कश्चिदिति । विघ्नात्यन्ताभाव विघ्नानां स्वतःसिद्धः एवात्यन्ताभावः समाप्तिकारणम् । *प्रतिबन्धकेति—कार्यमात्रम्प्रतिप्रतिबन्धकसंसर्गा-

* संसर्गाभावस्य लक्षणमत्र मूले तद्व्याख्याने च द्रष्टव्यम् ।

भाव कारणमित्यर्थं । तथाच विघ्नध्वस विघ्नात्यन्ताभावश्चोभावपि ससर्गाभावौ मसर्गाभावत्वेन च कार्यप्रत्ययनयोरनुगम । एवञ्च इत सिद्धविघ्नात्यन्ताभावस्थलेऽपि नैव व्यभिचार तत्र तादृश ससर्गाभावस्यैव कारणभूतस्य समाप्तिरूपकार्यजनकत्वात् ।

व्यतिरेकव्यभिचारमुद्धर्तुमाह—इत्थञ्चेति । नास्तिकादि ग्रन्थेषु पूर्वजन्मनि कृतेन मङ्गलेन पापनाश तेन समाप्ति मथवा स्वत सिद्ध एव विघ्नानामत्यन्ताभाव तेन समाप्तिर्द्वयेति नैव व्यतिरेकव्यभिचार । 'आहु' रिति क्रियापदस्य 'नव्या' इति कर्तृपदनान्वय ।

अत्रेदमापद्धन्त—जन्मान्तरीय मङ्गल ऐहिक वा मङ्गल विघ्नध्वसद्वारा समाप्तिम्प्रति तदा कारण स्यात् यदा मङ्गलसमाप्त्यो सामानाधिकरण्य स्यात्, समानाधिकरणवृत्तिपदार्थानामेव कार्यकारणभावनियमात् यदि व्यधिकरणवृत्तिपदार्थानामपि कार्य कारणभाव तदा देशान्तरस्थतन्तुजालादपि एतद्देशे पटोत्पत्ति स्यात् तस्मात्समानाधिकरणवृत्तिपदार्थानामेव कार्यकारणभाव इत्यकामे नाप्यभ्युपेयम ।

[1]चरमवर्णरूपा समाप्ति ककारादिशब्दस्वरूपत्वात् स्वसमवायिकारणाकाशनिष्ठा एव च चरमवर्णध्वसरूपा समाप्तिरपि स्वप्रतियोगिसमवायिकारणाकाशनिष्ठैव[2] गुर्वीश्वरादिस्मरणरूप मङ्गलन्तु आत्मनिष्ठत्वाद् अन्यकर्तृपुरुषात्मनिष्ठञ्चेति कथ मङ्गलसमाप्त्योर्व्यधिकरणयो कार्यकारणभाव कार्यकारणभावाभावाच्च समाप्तिम्प्रति मङ्गलस्य नैव कारणत्वम ।

अत्रेद परिहारमाचक्षते—स्वजनकविघ्नध्वसनाशत्वावच्छेदकतासम्बन्धेन समाप्तेर्ग्रन्थकर्तृपुरुषशरीरनिष्ठत्वात् अवच्छेदकतासम्बन्धेन च ज्ञानरूपमङ्गलस्यापि तत्रैव सत्त्वात् मङ्गलसमाप्त्यो कार्य कारणभावे बाधकाभाव एव ।

उक्त सम्बन्धे स्व शब्दग्राह्या समाप्ति तज्जनको विघ्नध्वसो हि शरीरावच्छिन्नात्मन्येव वर्त्तते तत्र शरीरस्य समाप्तिजनकविघ्नध्वसोत्पत्त्यवच्छेदकत्वम (नियामकत्वम्) । अनया रीत्या 'स्वजनक

समाप्ते

विघ्नध्वंसोत्पत्त्यवच्छेदकतासम्बन्धेन' अन्यकर्तृपुरुषशरीरनिष्ठत्वं ज्ञानात्मकमङ्गलस्यापि शरीरावच्छिन्नात्मनि सत्त्वाद् अवच्छेदकतासम्बन्धेन शरीरनिष्ठत्वमेव, शरीरस्य ज्ञानावच्छेदकत्वात् ज्ञानस्य च तदवच्छेद्यत्वम् ।

तथा च—स्वजनकविघ्नध्वंसोत्पत्त्यवच्छेदकतासम्बन्धेन तच्छरीरनिष्ठसमाप्तिं प्रति अवच्छेदकतासम्बन्धेन तच्छरीरनिष्ठमङ्गलस्यापि सामानाधिकरण्ये कार्यकारणभावः सर्वथा निर्दुष्टः ।

स्वजनकविघ्नध्वंसोत्पत्त्यवच्छेदकतासम्बन्धस्तु समाप्तिनिष्ठकार्यताया अवच्छेदकसम्बन्धः, अवच्छेदकतासम्बन्धस्तु कारणताया अवच्छेदकसम्बन्धः ।

अयंभाव —कारणाधिकरणे यत्सम्बन्धेन कार्यं भवति स सम्बन्धः कार्यतावच्छेदकसम्बन्ध इत्युच्यते, कार्याधिकरणे यत्सम्बन्धेन कारणं भवति स सम्बन्धः कारणतावच्छेदकसम्बन्धः, यथा द्रव्यीयचाक्षुषप्रत्यक्षे उद्भूतरूपं कारणं,तत्र विषयतासम्बन्धेन चाक्षुषप्रत्यक्षं घटादिनिष्ठम्, उद्भूतरूपमपि समवायसम्बन्धेन घटादिनिष्ठमेव, तस्माद् विषयतासम्बन्धः कार्यता-( चाक्षुषप्रत्यक्षता )—या अवच्छेदकसम्बन्धः, समवायसम्बन्धश्च कारणता-( उद्भूतरूपता )-याः अवच्छेदकसम्बन्धः एवैव दिक् सर्वत्र सम्बन्धेऽनुसरणीया ।

अथवा—अवच्छेदकतासम्बन्धेन समाप्तिः ग्रन्थकर्तृपुरुषशरीरनिष्ठा । चरमवर्णरूपाया चरमवर्णध्वंसरूपाया वा समाप्तेः शरीरावच्छिन्नात्मवृत्तित्वात् मङ्गलस्यापि स्वजन्यविघ्नध्वंसावच्छेदकतासम्बन्धेन तच्छरीरनिष्ठत्वमेव, अत्रापि 'स्व' शब्दग्राह्यं मङ्गलं तज्जन्यो विघ्नध्वंसः तदवच्छेदकं शरीरम् अवच्छेदकता च तच्छरीरे वर्तते,

[illegible] सत्त्वात् ।

[illegible]

जन्यविघ्नध्वंसोत्पत्त्यवच्छेदकतासम्बन्धेन शरीरे विद्यमानस्य [illegible]स्य कारणत्वम् ।

अत्र अवच्छेदकतासम्बन्धः कार्यतावच्छेदकसम्बन्धः, स्वजन्यविघ्नध्वंसोत्पत्त्यवच्छेदकतारूपसम्बन्धस्तु कारणतावच्छेदकसम्बन्धः ।

किया—स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्त्वसम्बन्धेन समाप्तेर्भन्यकर्तृपुरुषात्मनिष्ठत्वम्। तत्रैव मङ्गलस्यापि आश्रयतासम्बन्धेन सत्त्वम्। अत्र 'स्व' शब्दग्राह्या चरमवर्णध्वंसरूपा समाप्ति, तद्या प्रतियोगिभूतश्चरमवर्णः तस्य निमित्तकारणं कृति सा च तस्मिन्नात्मनि समवायसम्बन्धेन वर्त्तत एव, तस्मात् स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्त्वसम्बन्धेन आत्मनि वर्त्तमाना समाप्तिम्प्रति आश्रयतासम्बन्धेन वर्त्तमानस्य मङ्गलस्य हेतुत्वम्।

अत्र स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्त्वसम्बन्ध कार्यतावच्छेदकसम्बन्ध, आश्रयतासम्बन्ध कारणतावच्छेदकसम्बन्धो ऽवगन्तव्य। इत्थ प्रदर्शितसम्बन्धप्रकारेण जन्मान्तरीयमङ्गलस्य ऐहिकमङ्गलस्य वा सामानाधिकरण्ये सिद्ध विघ्नध्वंसद्वारा समाप्तिम्प्रति कारणत्वं निर्दुष्टमेव।

ये तु नव्या समाप्तिम्प्रति मङ्गल कारण न मन्यन्ते किन्तु विघ्नध्वंसमेव तथा मते स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्त्वसम्बन्धेन आत्मनि वर्त्तमाना समाप्तिम्प्रति तत्रैवात्मनि विशेषणतासम्बन्धेन विद्यमानस्य विघ्नध्वंसस्य कारणत्वं ज्ञेयम्, अत्र स्वप्रतियोगीत्यादि कार्यतावच्छेदकसम्बन्ध विशेषणतासम्बन्धश्च कारणतावच्छेदकसम्बन्ध इत्यलम्।

ससारमहीरुहस्य बीजायेति। ससार एव महीरुहो वृक्षस्तस्य बीजाय निमित्तकारणायेत्यर्थ। एतेन ईश्वरे प्रमाणमपि दर्शितं भवति। तथाहि। यथा घटादिकार्यं कर्तृजन्य तथा क्षित्यङ्कुरादिकमपि। न च तत्कर्तृत्वमस्मदादीना सम्भवतीत्यतस्तत्कर्तृत्वेनेश्वरसिद्धि।

बीजत्व समवायिकारणत्व तच्चेश्वरे नैव सम्भवति इत्यतो व्याख्यातं *बीजाय निमित्तकारणायेत्यर्थ इति। 'हेतुर्ना कारणं

---

*विपरीत आयतनेन अस्य द्वात बाजम्। उपमेय च मत्स्यायाम् (३।२८६) इति मूलस्य 'जना धाना', आयतनान्त-(६।३।११३) इति सूत्रस्य द प्र।

बीज' मिति कोषात् बीजशब्दस्य कारणसामान्ये शक्तिः, तेन निमित्त-कारणरूपोऽर्थो न विरुद्ध इतिभावः ।

नन्वीश्वरे नमस्काररूपं मङ्गलमयुक्तं तत्र प्रमाणाभावाद् इत्यत आह—एतेनेति । प्रमाणम् अनुमानाख्यं प्रमाणम् । तथाहीत्यादिना कार्यकारणयोः व्याप्तिं, दृष्टान्तद्वारा अभिलापयति । 'यत्कार्यं तत्कर्तृजन्यम्' इति व्याप्तेः सामान्याकारः । ईश्वरसाधकमनुमानन्तु—क्षित्यङ्कुरादिकं कर्तृजन्यं कार्यत्वात् घटवत् इति । अत्र (१) क्षित्यादि पक्षः, कर्तृजन्यं साध्यम्, कार्यत्वं हेतुः । घटो दृष्टान्तः । नहि किमपि जडं चेतनाधिष्ठानमन्तरा कार्यं कर्तुं समर्थं दृष्टचरं, नहि मृत्पिण्डः कुलालाधिष्ठानं विना स्वयं घटं घटयितुमीष्टे, तथा परमाण्वाद्युपादानं जडं येनाधिष्ठितं जगद्रूपं जायते सएवाधिष्ठाता क्षित्यादिकर्ता जगन्नियन्ता परमेश्वर इत्यनुमानं प्रमाणं जगत्कर्तुः परमेश्वरस्य साधकमिति परमार्थः ।

नन्वस्मदाद्या जीवा एव सम्भूय क्षित्यादिकर्तारो भविष्यन्ति किमीश्वराङ्गीकारेणेति शङ्कां निरस्यति नचेति । अस्मदादिजीवानामल्पज्ञत्वात् अल्पशक्तित्वाच्च नैव क्षित्यादिजनने सामर्थ्यं, अस्ति च क्षित्यादि कार्यं, तच्च घटवत् निमित्तकारणं विना नोत्पत्तुमर्हतीति यश्च तदुत्पादकः स परमेश्वर इति भावः ।

नच शरीराजन्यत्वेन कर्त्रजन्यत्वसाधकेन सत्प्रतिपक्ष इति वाच्यम्, अप्रयोजकत्वात् । मम तु कर्तृत्वेन कार्यत्वेन कार्यकारणभाव एव अनुकूलतर्कः। "द्यावाभूमी जनयन्देव एकः" "विश्वस्य कर्ता भुवनस्य गोप्ता" इत्यादय आगमा अप्यनुसंधेयाः ॥ १ ॥

---

'बीजन्तु रेतसि । स्यादाधाने च तन्त्रे च हेतावङ्कुरकारणे' इति हैमः । औपनिषद सिद्धान्ते तु बीजपद=अभिन्ननिमित्तोपादानकारणपर इत्ययमपि नासङ्गतमिति ॥

(१) यस्मिन् साध्यस्य सन्देहः असौ पक्षः, यत्तत्र सन्दिग्धं तदेव साध्यम्, साध्यसाधनाय दीयमानोपपत्तिरेव हेतुः, यत्र साध्यस्य निश्चयः, असौ दृष्टान्तः, सर्वमिदमनुमानखण्डे लक्षणादिद्वारा स्फुटीभविष्यति ॥

कार्यत्वहेतौ सत्प्रतिपक्षत्वमाशङ्कते—नचेति क्षित्यङ्कुरादिकं कर्त्तृजन्यमित्यनुमानं न युक्तं, यतोऽस्य हेतोः साध्याभावसाधकमनुमानान्तरं वर्त्तते तस्मादयं सत्प्रतिपक्षो हेत्वाभासः, तथाहि क्षित्यङ्कुरादिकं कर्त्रजन्यं शरीराजन्यत्वात् (शरीरिकर्त्रजन्यत्वात्) ध्वंसविशेषवत् (वनस्थस्वत सिद्धगुल्मादिध्वंसवत्) इति पूर्वपक्षयितुराशयः।

तदेतत् सिद्धान्ती खण्डयति—अप्रयोजकत्वादिति। व्यभिचारशङ्कास्थानेऽनुकूलतर्काभावादित्यर्थः।

अयमाशयः—'क्षित्यङ्कुरादिकं कर्त्तृजन्यं कार्यत्वात् घटवत्' इतीश्वरवादिनोऽनुमाने साध्यं यत् 'कर्त्तृजन्यत्वं' तत्साधनाय 'कार्यत्वात्' इति हेतुरुपात्तः, परमयमस्त्येको नियमः यदि कस्यचिद्धेतोः साध्याभावसाधनाय अपरो हेतुः प्रवृत्तः स्यात्, तदा पूर्वानुमाने दत्तो हेतुः सत्प्रतिपक्षितो भवन् स्वसाध्यसंसाधनाय नालम्भवति, तेनासौ सत्प्रतिपक्षोनाम हेत्वाभास इत्युच्यते। प्रकृते च 'कार्यत्वात्' इत्यस्य हेतोः साध्यं यत् 'कर्त्तृजन्यत्वं' तस्याभावः 'कर्त्रजन्यत्वम्' तस्य साधकः 'शरीराजन्यत्वात्' इत्यन्यो हेतुर्वर्त्तते तस्मात् कथं कार्यत्वहेतुना कर्त्तृजन्यत्वरूपस्य साध्यस्य सिद्धिः स्यात्।

अत्र सिद्धान्ती इत्थमुत्तरयति—भो! अनीश्वरवादिन्! तवानुमाने व्यभिचारशङ्कायां क्रियमाणायां तस्या निवारकः कश्चनानुकूलतर्को न दृश्यते—

तथाहि—'शरीराजन्यत्वं हेतुरस्तु क्षित्यङ्कुरादिषु कर्त्रजन्यत्वं साध्यं मा भवेत् को दोषः' इत्याकारिका व्यभिचारशङ्का। नचास्या उद्धाराय तवान्तिके कश्चित्तर्कः, एवञ्चानुकूलतर्काभावादेव तवानुमानं दुष्टम्, तस्य दुष्टतायां ममानुमाने उक्तः 'कार्यत्वात्' इति हेतुः साध्यसाधनाय समर्थ एव नासमर्थः।

अवधेहि तावत्—कार्यकारणभावभङ्गप्रसङ्ग एव प्रायस्तर्कस्य स्वरूपम्, तत्र 'यदि कर्त्रजन्यत्वं न स्यात् तदा शरीराजन्यत्वमपि न स्यात्' इत्येव भवान् (नास्तिक) वदिष्यति, परं नैतावता बाधानु-

माने व्यभिचारशङ्कां निवर्त्तयतीति, नहि पूर्वं कचित् कर्त्रजन्यत्वशरीराजन्यत्वयोः कार्यकारणभावः प्रसिद्धः येन 'न स्याद् न स्याद्' इत्यभिधाय कार्यकारणयो भङ्गप्रसङ्ग आपाद्येत, तस्मात् 'शरीराजन्यत्वाद्' इत्यप्रयोजको हेतुर्नास्तिकस्य ।

अपि च कर्त्रजन्यत्वाजन्यत्वयोरेव आकाशादिषु व्याप्तिर्दृष्टा तेन अजन्यत्वस्य पुरोभागे 'शरीर' रूपविशेषणादानं व्यर्थं सत् हेतोर्व्यर्थविशेषणतां स्पष्टयतीति सर्वथा शङ्कितुरनुमानमसदेव बोध्यम् । अस्मिन्ननुमाने उपाधिज्ञापनप्रकारः तदुद्धारप्रकारश्चात्र प्रदर्श्यमाणो बालानामादौ महत्काठिन्यमावहेदिति कृत्वा तदुपाधिप्रसङ्गं प्रदर्शयिष्यते ।

ननु-तथापि मते कथमनुकूलतर्क इत्याशङ्कापरिहाराय आह-ममत्विति ।

अर्थात् सिद्धान्तिनो मते 'यदि कर्तृजन्यत्वं न स्यात् तर्हि कार्यत्वमेव न स्यात्' इत्याकारक कार्यकारणभावस्य भङ्गप्रसङ्गरूपोऽनुकूलतर्कोऽस्त्येव, यतः घटपटादिषु कर्तृजन्यत्वकार्यत्वयोः परस्परं कार्यकारणभावो लोके प्रसिद्ध एव । घट कुलालकर्तृजन्यः पटश्च कुविन्दकर्तृजन्य इति तस्मादीश्वरसाधकमनुमानं सत्प्रतिपक्ष इति प्रष्टव्याय ।

एवमनुमानेनेश्वरसिद्धौ तदुच्चरितत्वेन वेदस्यापि प्रामाण्यं निश्चितं, तस्य वेदोऽपीश्वरे प्रमाणमित्याह-*द्यावाभूमी जनयन्निति ।

---

* विश्वतश्चक्षुरुत विश्वतो मुखो,
विश्वतो बाहुरुत विश्वतस्पात् ।
सम्बाहुभ्यां धमति सम्पतत्रै,
द्यावाभूमी जनयन्देव एक. ॥ यजु० अ० १७ । कं० १९ ।

अत्र प्रथमेन सर्वज्ञत्वं चक्षुषा दृष्टेरुपलक्षणात्, द्वितीयेन सर्ववक्तृत्वं मुखेन वागुपलक्षणात्, तृतीयेन सर्वसहकारित्वं बाहुना सहकारित्वोपलक्षणात्, चतुर्थेन व्यापकत्वं पदा व्याप्तेरुपलक्षणात्, पञ्चमेन धर्माधर्मलक्षणप्रधान कारणत्वं, तौ हि लोकयात्रावहनाद्वाहू, षष्ठेन परमाणुरूपप्रधानाधिष्ठेयत्वम्, ते हि गतिशीलत्वात् पतत्र-

इत्यादय इति—आदिना 'यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः' सोऽकामयत बहुस्यां प्रजायेय, इत्यादीनां परिग्रहः ।

त्रिविधा चास्य शास्त्रस्य प्रवृत्तिः उद्देशो लक्षणं परीक्षा चेति भाष्यकारः, तत्र नाममात्रेण वस्तुसंकीर्तनमुद्देशः, यथा द्रव्यं गुण इति । असाधारणधर्मो लक्षणं, यथा गन्धवत्त्वं पृथिव्याः । लक्षितस्य लक्षणं सम्भवति न वेति विचारः परीक्षा, यथा च तस्य तस्य लक्षणस्यावसरेऽतिव्याप्त्यादि दोषाः परिहृताः । एतद्य भाष्यादिनिर्दिष्टरीत्या पदार्थविचारः कृतोऽस्मिन्ग्रन्थे, एतस्य तन्मूलतया प्रामाण्यं (आदरार्हतां) स्पष्टयति इत्यधिकमन्यत्र बोधनीयम् ॥

इति मङ्गलवाद ।

---

पदार्थान्विभजते—

**द्रव्यं गुणस्तथा कर्म सामान्यं सविशेषकम् ।**
**समवायस्तथाऽभावः पदार्थाः सप्त कीर्तिताः ॥२॥**

द्रव्यमिति । शिष्यावधानाय प्रतिजानीते द्रव्यं गुण इति । प्रतिज्ञा च स्वकर्तव्यत्वेन निर्देशः द्रव्यादिनिरूपणस्यैव स्वकर्तव्यत्वेन प्रतिज्ञानात् । पदस्यार्थः पदार्थ इति व्युत्पत्त्या अभिधेयत्वं, पदशक्त्या प्रतिपाद्यत्वं पदार्थ [illegible] इति लक्षणं वास्तर- [illegible] पूर्वकभजधातोरर्थः । द्रव्य गुण इति जातावेकवचनम् । संयोगापेक्षया कर्म नातिरिक्त- मिति भूषणमतं दूषयितुमाह—तथा कर्मेति । यथा गुणः पृथक

---

व्यपदेशाः, पतन्तीति, सन्धमति सञ्जनयन् इति च व्यवहितोपसर्गसम्बन्धः तेन सद्योजयति समुत्पादयतीत्यर्थः यात्रा इत्यत्र वंसन्तोऽपलक्षणम् भूमीत्यवस्तान् एक इत्यना दितेति न्यायाचार्याः । वेदान्ताचार्या अपि परमेश्वरस्य सर्वप्राण्यात्मकत्वात् यस्य यस्य प्राणिनो ये चक्षुरादयः ते तदुपाधिकस्य परमेश्वरस्यैवेति सत्त्वे चक्षुरादयः समपद्यन्त इति फलतोऽविरोधेन व्याख्यान्ति ।

पदार्थः तथा कर्मापीत्यर्थः । यद्वा 'कर्म' इत्यत्रैकवचनेन 'एकमेव चलनात्मकं कर्म उत्क्षेपणादिभेदस्तु शिष्यबुद्धिवैशद्याय' इति सूचितम् । सामान्यं वक्ष्यमाणलक्षणं 'सत्ता' इत्याख्यं पदार्थः । अभावोऽधिकरणस्वरूप इति प्रभाकरमतं दूषयितुं पुनः 'तथा' इति पदमुपात्तम् । पदार्था निरूप्यन्त इति शेषः । सप्त' इति पदं सप्तैव पदार्था नाधिका न न्यूनाश्चेति बोधनाय । 'कीर्त्तिता' इति कणादप्रभृतिभिर्मुनिभिरिति शेषः, तत्रश्चानो नाधिका पदार्था यद्यभविष्यन् तर्हि कणादाद्यैर्मुनिभिः कुतो नाकीर्त्तयिष्यन्त इति भावः ।

अत्र सप्तमस्याभावत्वकथनादेव षण्णां भावत्वं प्राप्तं तेन भावत्वेन पृथगुपन्यासो न कृतः । एते च पदार्था वैशेषिके प्रसिद्धा नैयायिकानामप्यविरुद्धाः । प्रतिपादितं चैवमेव भाष्ये । अत एवोपमानचिन्तामणौ सप्तपदार्थभिन्नतया शक्तिसादृश्यादीनामतिरिक्तपदार्थत्वमाशङ्कितम् ।

ननु–अन्यत्र न्यायग्रन्थेषु षड् भावपदार्थाः सप्तमस्तु अभाव इत्युक्तम् अत्र अभावस्य सप्तम इति विशेषणं कुतो नोक्तं, अर्थात् पदार्थो द्विविधः भावोऽभावश्च, द्रव्यादयः षड् भावाः सप्तमस्तु अभाव इतिरीत्या कुतो न निरूपितमित्याशङ्क्याह–सप्तमस्येति । समवायिकार्यसमवायान्यतरसम्बन्धेन सत्तावत्त्वं भावत्वं, भावत्वाभावोऽभावत्वमिति भावाभावयोर्विवेकः । प्राप्तम् अर्थात् प्राप्तमित्यर्थः तेन प्राप्तत्वेन पृथगुपन्यास इति–भावत्वेनोपन्यास इत्यर्थः । ननु गौतमतन्त्रे प्रमाणाद्याः षोडश पदार्था निरूपिताः तेऽप्यत्र निरूपणीयाः तथा च न सप्तैव पदार्थाः किन्त्वधिका अपीत्याशङ्कामपाकुर्वन्नेवाह–एते च पदार्था इति । तथा च षोडशपदार्थानां * सप्तपदार्थेष्वेवान्तर्भाव इति भावः ।

उक्तार्थे भाष्यसम्मतिमाह–प्रतिपादितश्चेति । एवमेवेति–

---

* षोडशपदार्थानां सप्तपदार्थेष्वेवान्तर्भावः दिनकर्यां निरूपितः तत् तत्रैव कौतूहलिभिर्निरीक्षणीयं, ग्रन्थगौरवभयान्नेह प्रपञ्चितम् ।

द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्तैव पदार्थाः षोड-
शानामन्तर्भावादिति प्रतिपादितमित्यर्थः ।

भाष्यस्यार्थस्यमाण्डूक्य स्वोक्तार्थे न्यायचिन्तामणिकृतां सम्म-
तिमाह—अतएवेति । शक्तिसादृश्यादीनामिति—यद्यधिकाः
पदार्थाः कणादमुनेरभीष्टा अभविष्यन् तदा सप्तपदार्थभिन्नयोः शक्ति-
सादृश्ययोरतिरिक्तपदार्थशङ्कैव कृता नाभविष्यत्, यतः सप्तपदार्थ-
भिन्नत्वेन तयोः शङ्कोत्थापिता तेन मन्यामहे मुनेर्भाष्यकारस्य च
सप्तैव पदार्था इष्टा इतिभावः ।

ननु कथमेते एव पदार्थाः शक्तिसादृश्यादीनामप्यतिरिक्त-
पदार्थत्वात् । तथाहि । मण्यादिसमवहितेन वह्निना दाहो न
जन्यते तच्छून्येन तु जन्यते । तत्र मण्यादिना वह्नौ दाहानुकूला
शक्तिर्नाश्यते उत्तेजकेन मण्याद्यपसारणेन च जन्यत इति
कल्प्यते ।

यथाचोपमानचिन्तामण्यादावतिरिक्तपदार्थशङ्का कृता, यथा वा
तयोः पृथक्पदार्थभावखण्डनं कृत तत्स्मर्थ बोधयितुं ‘ननु’ इत्यादि
प्रभाति ।

प्राभाकरः (शक्तिसादृश्ययोरतिरिक्तपदार्थत्ववादी) शङ्कते—
नन्विति । अतिरिक्तेति—सप्तपदार्थातिरिक्तेत्यर्थः । शक्तेः सादृ-
श्यस्य च अतिरिक्तपदार्थभाव व्यवस्थापयति—‘तथाहि’ इत्यादिना ।
मण्यादिसमवहितेन मण्यादिसमीपवर्तिना । आदिपदेन मन्त्रौष-
धितप समाधीनां परिग्रहः ।

ननु—यत्र वह्निरूपकारणाभावः तत्र दाहाभाव इति नैव मण्या-
दीनां दाहप्रतिबन्धकत्वम् ? अत आह—समवहितेन वन्हिनेति ।
दाहो रूपान्तरोत्पत्तिः पूर्वरूपपरावृत्तिर्वा । मण्याद्यतिरिक्तस्य न
प्रतिबन्धकत्वमित्याह—तच्छून्येनेति । मणिसन्निधिशून्येनेत्यर्थः ।
तत्र पूर्वोक्तयुक्त्या सिद्धौ ।

तथाच वह्निनिष्ठशक्तित्वावच्छिन्नम्प्रति मणित्वेन नाशकत्वं-स्वीकारेण मण्यादिसत्त्वदशायां शक्तेरभावादेव न दाह इति भाव. ।

ननु—यदि मण्यादिना वह्निशक्तिर्नश्यति तदा उत्तेजकनाम-कमणिसत्त्वदशायां शक्तिनाशकमण्यादेर्वाऽपसरणकाले पुनर्वह्निना दाहो न स्यात्, अत आह—उत्तेजकेनेति । 'मण्याद्यपसरणेन च' इत्यत्र चकारो विकल्पार्थे । 'नाश्यते' इति पदस्य 'कल्प्यते' इत्यने-नान्वय । कल्प्यते अनुमीयते । अनुमानप्रकारश्चेत्थम्—वह्निर्मणि-नाश्यदाहानुकूलशक्तिमान् मणिसमवधाने दाहाजनकत्वात् यन्नैवं तन्नैवं यथा व्यतिरेके घट । किञ्च शक्तिर्न द्रव्यात्मिका गुणादिवृत्तित्वात्, अत एव न गुणात्मिका कर्मात्मिका वा । नवा सामान्याद्यन्यतम-रूपा, उत्पत्तिमत्त्वे सति विनाशित्वात् घटवत् । इत्थञ्च शक्तेरतिरि-क्तपदार्थत्वसिद्धि ।

एवं सादृश्यमप्यतिरिक्तः पदार्थः । तद्धि न षट्सु भावेष्व-न्तर्भवति सामान्येऽपि सत्त्वात् । यथा गोत्वं नित्यं तथाश्वत्व-मपीति सादृश्यप्रतीतेः । नाप्यभावे सत्त्वेन प्रतीयमानत्वादिति चेन्न, मण्याद्यभावविशिष्टवह्न्यादेर्दाहादिकं प्रति स्वातन्त्र्येण मण्यभावादेरेव वा हेतुत्वं कल्प्यते ।

एवमतिरिक्तां शक्तिं साधयित्वा सादृश्यस्याप्यतिरिक्तपदा-र्थतां साधयति—एवमित्यादिना । अतिरिक्तः पदार्थ इत्यस्यार्थः सप्तपदार्थभिन्नः स्वतन्त्रः पदार्थः । इयं प्रतिज्ञा—तथाच प्रयोग कर्त्तव्य.—सादृश्यमतिरिक्तः पदार्थ, षड्भावपदार्थानन्त-र्भूतत्वे सति अभावानन्तर्भावाद् इति ।

'भावानन्तर्भूतत्वे सति' इत्यस्य विशेषणस्य असिद्धिं वार-यति—तद्धीति । हि यत तत् सादृश्यम् । सामान्येऽपीति । अय भाव—सादृश्यं न षट्सु पदार्थेष्वन्तर्भवति सामान्येतरवृत्तित्वे सति सामान्यवृत्तित्वात् इत्यनुमानेन सादृश्यस्य भिन्नपदार्थत्वसिद्धिः ।

सादृश्यसाधिकां स्वतन्त्रप्रतीतिमभिलापयन्नभिनयति । नन्वस्तु

सादृश्यमभ वविशेष इत्याशङ्कायामाह-नापीति । सदृशेन भावयंन ।
प्रतीयमानत्वात् प्रमीयमानत्वात् ।

इत्थं प्राभाकरेण भावितां शक्तिं नाव्य दूषयितुमाह—इति चेदेति । दूषयति—मण्याद्यभावेति । अस्यायमभिप्रायः—न यत् दाहध्वंसि यदिमेव कारणं तत् किन्तु मण्याद्यभावविशिष्टं वह्निर्दा हस्य कारणं न वह्निमात्रम् । किंवा मणिसामान्याभावः एव दाहस्य हेतु, तथाच तिरिक्तशक्तिकल्पनमनुचितम् । यत्र यत्र वह्निरस्ति, मणिरूपं प्रतिबन्धकञ्चास्ति तत्र तत्र दाह कचित्तु प्रतिबन्धकमणि-सद्भावात्तदिन न भवतीति नैतदाह । तथा चातिरिक्तशक्तिपदार्थ-स्वीकारस्य नावश्यकता । प्रतिबन्धकत्वन्तु कार्यानुकूलधर्मविघटक त्वम् । उत्तेजकत्वं च प्रतिबन्धकत्वेऽपि कार्यजनकत्वम् इत्यन्यत्र विस्तर ।

ननु—दाहध्वंसि शक्तिः कारणं मण्यभावो वा कारणमिति का-रणद्वयस्वीकारे गौरव, तदपेक्षया एकैव शक्तिः दाहकारणं युक्तेति लाघवमित्यत आह—अनन्तेति । सामञ्जस्ये निर्दोषे सति ।
अनन्तशक्तीति—तथाचातिरिक्तशक्तिवादिन प्राभाकरमत एव गौरवमिति भाव ।

ननु—यदि शक्तेरतिरिक्त पदार्थे तर्हि प्रतिबन्धकमणि-सत्त्वेऽपि उत्तेजकमणिसन्निधिकाले कुतो दाह इत्याशङ्क्य खण्डयति-मत्याद्यदिप्रन्थेन । तथा च न केवल मणि प्रतिबन्धक किन्तु उत्ते-जकाभाव विशिष्ट, तदभावश्च उत्तेजकसमवधानकालेऽपि निवृत्तोति नैव दोष इति भाव ।

इदन्तु बोध्यम्-विशिष्टाभावस्त्रिधा भवति, विशेषणाभावप्रयुक्तो विशेष्याभावप्रयुक्त विशेष्यविशेषणोभयाभावप्रयुक्त श्चेति । यथा यत्र केवल पुरुष, तत्रापि भवति प्रत्ययो 'दण्डी पुरुषो नास्ति' इति,सोऽयं दण्डविशिष्टपुरुषाभाव विशेषणाभावप्रयुक्त । यत्र तु दण्डो वर्तते न पुरुष तत्रापि 'दण्डी पुरुषो नास्ति' इति प्रत्यय , स च विशेष्या-

भावप्रयुक्तः। यत्र च न पुरुषो नापि दण्डः, तत्रोक्ताभावद्वयस्य उभयाभावप्रयुक्तः। प्रकृते तु उत्तेजकसत्त्वेन उत्तेजकाभावरूपविशेषणस्य असत्त्वाद् अयं विशिष्टाभावो विशेषणाभावप्रयुक्त इति निगूढाभिसन्धिः।

अनेनैव सामञ्जस्ये अनन्तशक्तितत्प्रागभावध्वंसकल्पनानौचित्यात्। न चोत्तेजके सति प्रतिबन्धकसद्भावेऽपि कथं दाह इति वाच्यम्। उत्तेजकाभावविशिष्टमण्यभावस्य हेतुत्वात्। सादृश्यमपि न पदार्थान्तरं किन्तु तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम्। यथा चन्द्रभिन्नत्वे सति चन्द्रगताह्लादकत्वादिमत्त्वं मुखे चन्द्रसादृश्यमिति ॥ २ ॥

सादृश्यस्यातिरिक्तपदार्थत्वं निराकरोति—सादृश्यमपीति। तद्गतभूयोधर्मवत्त्वमिति—तदसाधारण्येन विद्यमाना ये भूयांसो धर्मास्तद्वत्त्वमित्यर्थः, उक्तसादृश्यलक्षणं घटयति—यथेत्यादिना। तद्भिन्नत्वे इति। तद्भिन्नत्वं नाम न प्रतियोगिकर्मवत्त्वम्, अवयवस्य अभेदः न च अन्योन्याभाव एव। एवं धर्मवत्त्व धर्मः सोऽपि विशेषणीभूतगुणक्रियादिरूप एवेत्यर्थः।

अयं भावः—सादृश्यघटकधर्मः क्वचिज्जातिरूपः यथा घटसदृशः पटः। क्वचिदुपाधिरूपः यथा गगनं नित्यं तथाऽऽत्मापीति। यथा वा चन्द्रसदृशं मुखम् इत्यादौ आह्लादकत्वादिधर्मः सादृश्यमिति तदतिरिक्तकल्पनायां गौरवमेव। इदं प्राचां मतम्।

परन्तु नव्याः सादृश्यमतिरिक्तं मन्यन्ते। न च तदतिरिक्तपक्षे पदार्थविभागव्याघातः साक्षात् परम्परया वा येषां पदार्थानां तत्त्वज्ञाने उपयोगः ते सप्तैवेत्यभिप्रायो यतः। एवञ्चास्मिन्मते अधिकरणत्वाधेयत्वादिकमपि पदार्थान्तरम्, अन्यथा संयोगादिरूपस्य तस्य कुण्डे बदरमितिवद् 'बदरे कुण्ड'मित्यपि व्यवहारः स्यात्, कुण्डबदरसंयोगस्य द्विष्ठत्वात्। एवं प्रतियोगित्वाश्रयत्वादिकमप्यतिरिक्तमेवेत्यन्यत्र विस्तरः।

द्रव्याणि विभजते—

क्षित्यप्तेजोमरुद्व्योमकालदिग्देहिनो मनः ।

द्रव्याणि—

क्षितिः पृथिवी, आपो जलानि, तेजो वह्निः, मरुद् वायुः, व्योम आकाशः, कालः समयः, दिगाशा, देही आत्मा, मनः, एतानि नव द्रव्याणीत्यर्थः । ननु द्रव्यत्वजातौ किं मानम् । नहि तत्र प्रत्यक्षं प्रमाणं घृतजतुप्रभृतिषु द्रव्यत्वाग्रहादिति चेन्न कार्यसमवायिकारणतावच्छेदकतया संयोगस्य विभागस्य वा समवायिकारणतावच्छेदकतया तत्सिद्धेरिति ।

परममूले द्रव्याणि इति पदं द्रव्यस्वरूपनिरूपणार्थकम् गुणक्रियान्यतरस्य समवायिकारणत्वं वा द्रव्यसामान्यलक्षणम् अर्थात् समवायसम्बन्धेन गुणस्य कर्मणो वाऽऽश्रयः यद्वा कस्यापि समवायिकारणं भवेत् तदेव द्रव्यं नाम ।

विभजत इति—स्वसमभिव्याहृतपदार्थतावच्छेदकधर्मव्याप्य-मिथोविरुद्धयावद्धर्मप्रकारकज्ञानानुकूलो व्यापारः विपूर्वकभजधातो-

---

ननु—गुणवत्त्वाद् द्रव्यलक्षणं न युज्यते तदुत्पत्तिक्षणावच्छेदकव्यापकं हि लक्षणं स्वरूपलक्षणम् तटस्थलक्षणं तु—अन्यतावच्छेदकसमानाधिकरणम् तस्यात्र नास्ति, तथा च आद्यक्षण (उत्पत्तिक्षण) [illegible] द्रव्यं क्षणमगुणं तिष्ठति [illegible] गुणाभावात् [illegible] ( [illegible] ) च द्रव्यत्व [illegible] अव्याप्तिलक्षणस्य [illegible] गुणसमानाधिकरणं (—समवायसम्बन्धेन गुणवद्वृत्ति—) सत्ता भिन्नजातिमत्त्वम् विवक्षायां दोषाभावात् ।

गुणादौ तद्व्यावृत्तये गुणसमानाधिकरणेति न [illegible] लक्षणम् । सत्तामादाय [illegible] सत्तायाः [illegible] द्रव्यगुणकर्मवृत्तित्वात् सत्तामादाय अतिव्याप्तिवारणाय जातीति । अयमेव प्रकारोऽन्यत्रापि लक्षणे दोषवारणायानुसन्धेयः [illegible] यद्यपि तत्र तत्र ।

र्थे, अत्र 'स्व' विपूर्वको भजधातु, तत्समभिव्याहृत यत्पद प्रकृते 'द्रव्य'पदमेव, तदर्थतावच्छेदक तदर्थे विशेषणीभूत ) यो धर्म द्रव्यत्वरूप, तद्व्याप्या मिथ ( परस्पर ) विरुद्धा ( असमानाधिकरणा ) ये यावन्त अनेके धर्मा पृथिवीत्व इय तत्प्रकारकज्ञान पृथिवी आप इत्यादि तदनुकूल ( सञ्जनक ) व्यापार पद्यात्मकशक्यप्रयोगरूप स एव विभाग इत्यनया दिशा अन्यत्रापि घटनीयम ।

द्रव्यत्वजाति साधयितु प्रथम शङ्कते—नन्विति । किं मान मिति—अत्र 'किं' शब्द प्रश्ने ।

ननु—द्रव्य द्रव्यमित्यनुगतप्रतीतिरेव द्रव्यत्वजातौ प्रमाणं स्याद् अत आह—नहीति । नव द्रव्यत्व । पामराणां घृतादिषु द्रव्यत्वजातेरग्रहात न सकलद्रव्यसाधारणतया द्रव्यत्वजातिसिद्धिरितिभाव । कार्येति । कार्यत्वञ्च स्वत्वे सति प्रागभावप्रतियोगित्व' मङ्गते बोध्यम । अस्या पङ्क्तेय भाव —

'यत्र समवायेन कार्य तत्र तादात्म्येन द्रव्य'मिति नियम, तेन समवायसम्बन्धावच्छिन्नकार्यत्वावच्छिन्नप्रति तादात्म्यसम्बन्धावच्छिन्ना या द्रव्यनिष्ठा समवायिकारणता सा किञ्चिद्धर्मावच्छिन्ना कारणतात्वात्, घटगतकार्यतानिरूपितदण्डवृत्तिकारणतावत्, यथा दण्डवृत्तिकारणता दण्डत्वधर्मावच्छिन्ना तथा द्रव्यवृत्तिकारणतापि द्रव्यत्वधर्मावच्छिन्ना निरवच्छिन्नाया कारणताया असम्भवात् । या या कारणता सा सा किञ्चिद्धर्मावच्छिन्ना इति सामान्यव्याप्ति ।

यद्वा समवायसम्बन्धावच्छिन्नसंयोगत्वावच्छिन्नसंयोगनिष्ठ-कार्यतानिरूपिता तादात्म्यसम्बन्धावच्छिन्ना द्रव्यनिष्ठा या समवायिकारणता सा किञ्चिद्धर्मावच्छिन्ना इति पक्ष साध्यञ्चोक्त्वा हेत्वादिनिर्देश पूर्ववत ।

किंवा समवायसम्बन्धावच्छिन्नविभागत्वावच्छिन्नविभाग-निष्ठकार्यतानिरूपिता या तादात्म्यसम्बन्धावच्छिन्ना द्रव्यनिष्ठा का

नाया अन्याश्रयत्वात् । रूपवत्ताप्रतीतिस्तु भ्रमरूपा । कर्मवत्त्व-प्रतीतिरप्यालोकापसरणोपाधिकी भ्रान्तिरेव । तमसोऽतिरिक्तत्वेऽनन्तावयवादिकल्पनागौरवं च स्यात् । स्वर्णस्य यथा तेजस्यन्तर्भावस्तथा वक्ष्यते ॥

तमसोऽतिरिक्तद्रव्यवादी मीमांसकः शङ्कते—ननिवति । तत्र प्रत्यक्ष प्रमाणयति—तद्धीति । प्रत्यक्षेण चक्षुरिन्द्रियेण । अस्तु तमस प्रत्यक्ष परमिद द्रव्यमन्यद्वा इति मानाभिलाषिणां शङ्कायामनुमान प्रमाणयति—तस्य चेत्यादिना । तथा च 'तमो द्रव्य रूपवत्त्वात् कर्मवत्त्वात् ( क्रियावत्त्वात् ) घटादिवत्' इत्यनुमान तमसो द्रव्यत्वे प्रमाणमिति फलितम् । एवं 'तमो द्रव्य परत्वाद्याश्रयत्वात् घटवत्' इत्यनुमानमपि ज्ञेयम् । भवति च प्रतीति—इद तम परम्, इद तमोऽपरमिति ।

ननु-तमसोरूपे मानाभाव , 'नील तम' इति प्रतीतिस्तु भ्रमरूपैव इत्याक्षेपे हेत्वन्तरमाह—कर्मवत्त्वात् । नील तमश्चलतीति आबालप्रसिद्धा प्रतीतिर्बाधितेति नैव उक्तप्रतीते भ्रमत्वमिति भावः ।

नन्वस्तु तमस पृथिव्यादिद्रव्येष्वेवान्तर्भावः किमधिककल्पनया इति शङ्कां निराकुरुते—तद्धीत्यादिना । अत्यादिकमिति-आदिना तेज प्रभृतिद्रव्यसङ्ग्रह , तथा च नवसु द्रव्येष्वन्तर्भावाभावेन परिशेषतया अधिकमेव द्रव्य तम ।

ननु—तमो यदि रूपादिमद् द्रव्य तथा घटादिवत् आलोकसहकृतेन चक्षुषा कुतो न गृह्यते द्रव्यग्रहे आलोकसापेक्षमेव चक्षुरिन्द्रियं कारण यत इत्याशङ्कावारणाय आह—तत्प्रत्यक्षे चेति । तमः प्रत्यक्ष चेत्यर्थः । तथा च तमोभिन्नद्रव्यचाक्षुषप्रत्यक्ष एव आलोकसहकृत चक्षुरिन्द्रिय कारणम् इति भाव इति मीमांसकपूर्वपक्ष ।

अथ सिद्धान्ती 'चेत्' इत्यादिग्रन्थेन तमसोऽभावेऽन्तर्भाव कुर्वन् मीमांसकमत खण्डयति-आवश्यकतेजोऽभावेनेति—प्रौढप्रका-

यकृतेजःसामान्याभावेनेत्यर्थः । प्रौढप्रकाशकस्य उष्णस्पर्शमात्रस्वरूप-वस्य तद्भेदस्य तेजसः तस्य सामान्याभाव एव तमो न भावान्तर-मिति भावः । उपपत्तौ, तमोव्यवहारोपपत्तौ ।

ननु तेजोऽभाववत्त्वे तमः कथं नहि तत्र रूपप्रतीतिः अभावस्य नीरूपत्वात् इत्याशङ्कायामाह—रूपवत्तेति ॥

ननु रूपवत्तावत् भ्रान्तिरूपा 'चलति' इति कर्मप्रतीत्या तमो द्रव्यं भवेत्, अत आह—कर्मवत्ताप्रतीतिरपीति । आलोकस्य प्रकाशस्य अपसारणमेव उपाधि तत्र आगता, प्रकाशापसरणेन भिन्ना तमसि चलनक्रियाप्रतीतिः भ्रान्तिरेवेत्यर्थः । दूषणान्तरमाह—नचेति । आगमादीति—आदिना उत्पत्तिध्वंसपरिग्रहः ।

कन्दलीकारस्तु—आरोपितं नीलरूपं तम इत्याह—तदपि न चिन्त्यत्वात् तथासति 'इहान्धकारः' इतिप्रतीतिरपि भ्रमः स्यात् इत्यधिकमन्यत्र ।

स्यादेतत्—माभूत् तमो द्रव्यं सुवर्णन्तु भविष्यति, तथाच नवद्रव्यातिरिक्तद्रव्यस्य पक्षेऽयमत आह—सुवर्णस्येति । वक्ष्यत इति तेजोग्रन्थे अग्रे निरूपयिष्यत इत्यर्थः ।

सर्वस्यास्य ग्रन्थस्यायं सारः—'तमः खलु चलं नीलं परापर-विभागवत् प्रसिद्धद्रव्यवैधर्म्यान्नवभ्यो भेत्तुमर्हति' इति मीमांस-कानां प्रवादो न युक्तः, यतः तमो द्रव्यं न भवति आलोकनिरपेक्ष-चक्षुर्ग्राह्यत्वात् आलोकाभाववत् किन्तु औद्भूतरूपतेजःसामान्या-भाव एव तमः तत्र नीलं तमश्चलतीतिप्रतीतिर्भ्रमः । नीलत्वं हि स्वनीलिमवत् दृष्टिदोषजनितं, चलनञ्च आलोकापसरणोपाधिकं भ्रम महनात्तेजोऽभावस्तमो नाधिकं द्रव्यम् । नच तमोऽभाव एव तेजः—किं न स्यादिति वाच्यम्, उष्णस्पर्शस्यापलपितुमशक्यत्वादित्यधि-कमन्यत्रानुसन्धेयम् । इति तमोवादः ।

इदं च पदार्थानां सङ्ख्यानं द्रव्याणां विभजनञ्च महर्षिकणाद-प्रणीतसूत्रमूलकम्, तथा च—

धर्मविशेषप्रसूताद् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम् ।

वै० १ । १ । ४ ।

पृथिव्यापस्तेजोवायुराकाशं कालो दिगात्मा मन इति द्रव्याणि ।

१ । १ । ५ । इति सूत्रे स्त ।

नचर्षिसूत्रे षडेव पदार्थाः सङ्ख्याता अत्र तु सप्तमोऽप्यभाव इति महर्षिविरुद्धा विश्वनाथकल्पनेति वाच्यम्, सूत्रे तु अभावस्य भावानन्यत्वात्पृथगुपदेशो न कृतः अत्र तु बालबुद्धिवैशद्यार्थं सप्तमोऽभावः पृथगुपदिष्टः । अन्यथापि नवमाध्यायस्य प्रथमाह्निके 'क्रियागुणव्यपदेशाभावात्प्रागसत्' इत्यादिसूत्रे कथमभावमवर्णयिष्यत् ।

ननु तमसोऽधिकद्रव्यत्वादिकल्पना तत्खण्डनप्रकारश्च विश्वनाथस्यानार्ष एवेति चेन्न—

द्रव्यगुणकर्मनिष्पत्तिवैधर्म्याद्भावस्तमः ॥ १९ ॥
तेजसो द्रव्यान्तरेणावरणाच्च ॥ २० ॥

इति पञ्चमाध्यायस्य द्वितीयाह्निके सूत्राभ्यां तमोविषयेऽपि महर्षिविचारणायाः कृतत्वात्, तस्मान्मुक्तावल्यादिग्रन्था ऋषिविरुद्धत्वाद्धेया एवेति भणन्तोऽविकृतबुद्धय आधुनिका एव हेया मन्तव्याः ।

गुणान्विभजते—

अथ गुणा रूपं रसो गन्धस्ततः परम् ॥ ३ ॥
स्पर्शः संख्या परिमितिः पृथक्त्वं च ततः परम् ।
संयोगश्च विभागश्च परत्वं चापरत्वकम् ॥ ४ ॥
बुद्धिः सुखं दुःखमिच्छा द्वेषो यत्नो गुरुत्वकम् ।
द्रवत्वं स्नेहसंस्कारावदृष्टं शब्द एव च ॥ ५ ॥

एते गुणाश्चतुर्विंशतिसंख्याकाः कणादेन कण्ठतः चशब्देन च दर्शिताः । तत्र गुणत्वादिकजातिसिद्धिरग्रे वक्ष्यते ॥ ३-५ ॥

गुणान्विभजते इति—'समभिव्याहृतपदार्थतावच्छेदके' इत्यादि विभजतेरर्थं पूर्ववद् घटनीयः, तथाहि 'वि' पूर्वकभजधातु, समभिव्याहृत यत्पदं, प्रकृते च तद् गुणपदं, तदर्थतावच्छेदकः (तदर्थविशेषणीभूत ) यो धर्मो गुणत्वरूप, तद्व्याप्या मिथ ( परस्परं) विरुद्धा (असमानाधिकरणा) ये यावन्तोऽनेके धर्मा रूपत्वादयः, तत्प्रकारकं यज्ज्ञानं 'रूपं, रसः गन्ध' इत्याद्याकारक, तदनुकूलः ( तज्जनक ) व्यापार पद्यात्मकवाक्यप्रयोगरूप स एव विभाग इति बोध्यम् ।

द्रव्यकर्मभिन्नत्वे सति सामान्यवत्त्वं गुणसामान्यलक्षणम् ।

कण्ठत इति—'रूपरसगन्धस्पर्शाः सङ्ख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणाः' (वै० १।१।६) इति विभागसूत्रे सप्तदश कण्ठोक्ताः । 'च' शब्देनेति—सूत्रस्थचशब्देन गुरुत्वद्रवत्वस्नेहसंस्कारधर्माधर्मशब्दाः समुच्चिताः, ते च सर्वे सङ्कलनया चतुर्विंशतिसङ्ख्या भवन्ति । तथा च प्रशस्तपादभाष्यम्—चशब्दसमुच्चिताश्च गुरुत्वद्रवत्वस्नेहसंस्कारादृष्टशब्दाः सप्तैवेत्येवं चतुर्विंशतिगुणाः । अदृष्टपदेन धर्माधर्मयोरुपसङ्ग्रह इति तद्व्याख्यातारः । तत्र गुणेष्वित्यर्थः । गुणत्वजातिसिद्धिरिति—'द्रव्यकर्मभिन्नसामान्यवति या कारणता सा किञ्चिद्धर्मावच्छिन्ना कारणतात्वाद्' इत्यनुमानं गुणत्वजातिसाधकमित्यादि गुणत्वजातिसिद्धिप्रकारो गुणनिरूपणावसरे दर्शयिष्यत इत्यर्थः ।

कर्माणि विभजते—

उत्क्षेपणं ततोऽपक्षेपणमाकुञ्चनं तथा ।
प्रसारणं च गमनं कर्माण्येतानि पञ्च च ॥ ६ ॥

कर्मत्वजातिस्तु प्रत्यक्षसिद्धा । एवमुत्क्षेपणत्वादिकमपि ॥ ६ ॥

कर्माणि विभजत इति—अत्रापि विभागार्थलक्षणं पूर्वनिर्दिष्ट-दिशा ज्ञेयम्। संयोगासमवायिकारणं कर्मसामान्यलक्षणम्। प्रत्यक्ष-सिद्धेति—'अयं चलति अयं चलति' इत्याकारकचलनानुगतप्रतीतिबलेनैव कर्मत्वजातिरिति नास्ति तत्सिद्धावनुमानादिप्रमाणापेक्षेतिभाव ।

ऊर्ध्वदेशसंयोगानुकूलोव्यापार उत्क्षेपणम् । अधोदेशसंयोगानुकूलो व्यापारोऽपक्षेपणम् । शरीरसन्निकृष्टदेशसंयोगानुकूलोव्यापार आकुञ्चनम् । शरीरविप्रकृष्टदेशसंयोगानुकूलोव्यापार' प्रसारणम् । उत्तरदेशसंयोगानुकूलो व्यापारो गमनम् ।

तथाच कणादसूत्रम्—उत्क्षेपणमवक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्माणि । (वै० १ । १ । ७) ।

नन्वत्र भ्रमणादिकमपि पञ्चकर्माधिकतया कुतो नोक्तमत आह—

भ्रमणं रेचनं स्पन्दनोर्ध्वज्वलनमेव च ।

तिर्यग्गमनमप्यत्र गमनादेव लभ्यते ॥ ७ ॥

अधिकतयेति—कर्मविभाजकोपाधिभिर्भ्रमणत्वादिभिः । मूले (कारिकायां) गमनादेवेति । तथा च प्रशस्तपादभाष्यम्—गमनग्रहणाद् भ्रमणरेचनस्पन्दनोर्ध्वज्वलनतिर्यक्पतननमनोन्नमनादयो गमनविशेषा न जात्यन्तराणि ।

ननु—उत्क्षेपणादीनामपि गमनेऽन्तर्भावात् गमनमेवैकं कर्म-कथनीयं स्यात् उत्क्षेपणत्वादिभिर्विभागो न कर्तव्य इति चेद् न ? स्वतन्त्रेच्छस्य मुनेर्नियोगपर्यनुयोगानर्हत्वात्। अतिगम्भीरार्थस्यास्य शास्त्रस्य यथा यथासम्भवं सरलेनोपायेन मुनिप्रवृत्तिरितिभावः ।

सामान्यं निरूपयति—

सामान्यं द्विविधं प्रोक्तं परं चापरमेव च ।

द्रव्यादित्रिकवृत्तिस्तु सत्ता परतयोच्यते ॥ ८ ॥

उद्देशक्रमप्राप्तं सामान्यं निरूपयितुमाह—सामान्यमिति।

तल्लक्षणं तु नित्यत्वे सति अनेकसमवेतत्वम्। अनेकसमवेतत्वं संयोगादीनामप्यस्त्यत उक्तं **नित्यत्वे सतीति**। नित्यत्वे सति समवेतत्वं गगनपरिमाणादीनामप्यस्त्यत उक्तमनेकेति। नित्यत्वे सति अनेकवृत्तित्वमत्यन्ताभावेऽप्यस्त्यतो वृत्तित्वसामान्यं विहाय **समवेतत्वमित्युक्तम्**। एकमात्रव्यक्तिवृत्तिस्तु न जातिः। तथा चोक्तम्—

"व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः।
रूपहानिरसंबन्धो जातिबाधकसंग्रहः" ॥ १ ॥

**द्रव्यादीति**। परत्वमधिकदेशवृत्तित्वम्। अपरत्वमल्पदेशवृत्तित्वम्। सकलजात्यपेक्षयाऽधिकदेशवृत्तित्वात् सत्तायाः परत्वम्। तदपेक्षया चान्यासां जातीनामपरत्वम् ॥ ८ ॥

तल्लक्षणन्त्विति—सदेव हि लक्षणं भवति—यदव्याप्त्यतिव्याप्त्यसम्भवरूपदोषत्रयशून्यम्। यथा गोः सास्नादिमत्त्वम्। अव्याप्तिश्च लक्ष्यैकदेशावृत्तित्वम्—एवञ्च गोः किं लक्षणमित्युक्ते यदि कश्चिद् ब्रूयात् 'कपिलत्वं गोत्वम्' इति तन्न लक्षणम्, कपिलत्वस्य लक्ष्यभूताया गोरेकदेशवृत्तित्वेनाव्याप्तिग्रस्तत्वात्। अतिव्याप्तिश्च लक्ष्यवृत्तित्वे सत्यलक्ष्यवृत्तित्वम्—अतएव गोर्न शृङ्गित्वं लक्षणम् शृङ्गित्वस्य हि लक्ष्यभूतायां गवि वृत्ति रस्ति अथ च अलक्ष्यभूतासु महिष्यादिव्यक्तिष्वपि वृत्तिरस्ति तेनातिव्याप्तिर्लक्षणदोषः। असम्भवश्च लक्ष्यमात्रावृत्तित्वम्—अतएव गोरेकशफत्वं न लक्षणम् तस्यातिव्याप्तिग्रस्तत्वात्, एकशफत्वस्य कुत्रापि गव्यसम्भवात्, एतद्दोषत्रयरहितं सामान्यलक्षणं दर्शयितुमाह—तल्लक्षणन्त्विति। लक्षणस्य प्रयोजनन्तु इतरभेदज्ञानं व्यवहारो वा 'व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनम्" इत्युक्तेः। तथा च सामान्यमितरेभ्यो द्रव्यादिभ्यो भिद्यते, सा-

मान्यमित्याकारकव्यवहारविषयो वा भवति, नित्यत्वे सति अनेक-समवेतत्वात् यन्नैवं तन्नैव यथा द्रव्यम् इति । एवमेव सर्वत्र लक्षणमूहनीयम् ।

सामान्यलक्षणस्य पदकृत्यं दर्शयति–अनेकसमवेतत्वमित्या-दिना । समवेतत्वं समवायसम्बन्धेन वृत्तिमत्त्वम् । वृत्तिश्चाधेयता । अनेकत्वञ्च एकभिन्नत्वम् । संयोगादीनामिति–तथा च यदि नित्य-त्वपदं विहाय अनेकसमवेतत्वमात्रं लक्षणं क्रियेत, तदा संयोगादि-ष्वतिव्याप्तिर्लक्षणदोषः स्यात् अतस्तद्वारणाय 'नित्यत्वे सति' इत्यु-पात्तम् । एवञ्च गगनपरिमाणादिषु अतिव्याप्तिवारणाय 'अनेक' इति पदं 'समवेत' पदात्पूर्वं कृतम्, गगनस्य परममहत्परिमाणं अस्ति नित्यम् अथ च समवेतं परन्तु तत्समवायाख्यसम्बन्धेन गगनवृत्त्येव नत्वनेकवृत्ति ( नहानेकासु व्यक्तिषु वर्त्तते ) आदिना परमाणुपरिमाणादिसंग्रहः । नित्यत्वे सति अनेकेषु वृत्तिरत्यन्ताभाव स्याप्यस्ति—अर्थात् अत्यन्ताभावो नित्योऽथचानेकाधिकरणवृत्तिश्च यथा रूपात्यन्ताभावो वायौ आत्मनि आकाशकालदिगाद्यनेकाधिक-रणेषु वर्त्तते तथासति यदि 'समवेत' पदं विहाय 'नित्यत्वेसत्यनेकवृत्ति-त्वम्' इति लक्षणं क्रियेत तदा अत्यन्ताभावेऽपि लक्षणस्यातिव्याप्तिः स्यात् तद्वारणाय साधारणवृत्तित्वं विहाय समवायसम्बन्धेन वृत्तित्वं गृहीतम् । नित्योऽपि ह्यत्यन्ताभावः स्वाधिकरणेषु स्वरूपसम्बन्धेन वर्त्तते न तु समवायसम्बन्धेनेति सर्वथा निर्दुष्टं निर्दिष्टं सामान्यलक्ष-णम् । यत्तु नित्यमेकमनेकानुगतं सामान्यमित्युक्तं तत्रैकपदं स्वरूप-कथनमात्रपरम् जलपरमाणवादिनिष्ठे रूपेऽतिव्याप्तिवारणार्थकं वा बोध्यम् ।

अथ शिष्यबुद्धौ जातिस्वरूपस्य दृढतार्थं जातिबाधकान् संगृही-तुमाह–एकव्यक्तिवृत्तिस्त्विति । अथवा एकैकव्यक्तिवृत्तित्वाकाशत्वा-दिषु जातिव्यवहारो माभूदित्याह—एकेति । अत्र प्राचां सम्मति-माह—तथाचोक्तमिति । किरणावलीग्रन्थे उदयनाचार्यैरितिशेषः । व्यक्तेरभेद इत्याद्याः षड् जातिबाधकाः । तथाहि—

व्यक्तेरभेदः—स्वाश्रयव्यक्त्यैक्यम् अर्थात् यो धर्म एकस्यामेव व्यक्तौ वर्त्तते स न जातिः यथा आकाशत्वं कालत्वं दिक्त्वञ्चैक-व्यक्तिवृत्तित्वान्न जातिः, किन्तु आकाशत्वादिकमुपाधिः। जातिभिन्नो धर्मः *उपाधिः। स द्विविधः सखण्डोपाधिः अखण्डोपाधिश्च, यस्य निर्वक्तुं शक्यते स सखण्डोपाधिः,—यथा नित्यत्वे सत्य-नेकसमवेतत्वं सामान्यत्वम्, स्वपरव्यावर्त्तकस्वभावत्वं विशेषत्वम्, नित्यसम्बन्धत्वं समवायत्वम्, शब्दसमवायिकारणत्वमाकाशत्वम्, अतीतादिव्यवहारहेतुत्वं कालत्वम्, प्राच्यादिव्यवहारहेतुत्वं दिक्त्वम्—

इति सामान्यविशेषत्वसमवायत्वाकाशत्वकालत्वदिक्त्वानि धर्माः सखण्डोपाधयः। यस्य धर्मो निर्वक्तुं न शक्यते, असौ †अख-ण्डोपाधिः, यथा—

अनुयोगितात्वप्रतियोगितात्वविषयतात्वादि।

तुल्यवृत्तित्वं—अन्यूनानतिरिक्तव्यक्तिकत्वं तुल्यत्वम् तच्च घटत्वकलशत्वयोः जातिद्वयस्वरूपत्वे बाधकम्। अर्थात् घटकलशशब्दौ पर्यायौ तयोर्वाच्यभूतो घटपदार्थ एक एव स एव घटत्वकलशत्वयोः समानमधिकरणमित्येकमेव घटत्वं जातिर्न तु द्वे घटत्वकलशत्वे पृथक् जाती स्तः।

सङ्करः—परस्परात्यन्ताभावसमानाधिकरणयोर्धर्मयोरेकत्र स-मावेशरूपः स च भूतत्वमूर्त्तत्वयोर्जातित्वे बाधकः, अर्थात् पृथिवी, जलं, तेजो, वायुः आकाशम्, इति पञ्चभूतानि तद्वृत्तिधर्मो भूतत्वम्। आकाशं विहाय तत्स्थाने पञ्चमं मनो मेलयित्वा पञ्च मूर्त्तानि उच्यन्ते इति वैशेषिकाणां परिभाषा। भूतत्वं विहाय मूर्त्तत्वं मनसि मूर्त्तत्वं विहाय भूतत्वमाकाशे वर्त्तते, पृथिव्यादिचतुष्टये च उभयोरेव धर्मयोः समावेशः।

---

*यद्यपि धर्ममात्रमुपाधिः तथापि जात्यतिरिक्तधर्म उपाधिरित्याचारः प्रायशो नैयायिकानाम्।

†अखण्डोपाध्यतिरिक्तानामत्र धर्माणां निर्वचनार्हत्वमित्ययं नियमो बोध्यः।

अयं भावः—यत्र मनसि मूर्त्तत्वं तत्रैव भूतत्वात्यन्ताभावः, यत्र चाकाशे भूतत्वं तत्रैव मूर्त्तत्वात्यन्ताभावः इत्यनया रीत्या परस्परात्यन्ताभावेन सामानाधिकरण्यं=एकाधिकरणवृत्तित्वमस्त्युभयोर्धर्मयोः अथ च पृथिव्यादिषु तयोः समावेशः=सम्भूयवृत्तित्वम् अतएव भूतत्वं मूर्त्तत्वञ्चेत्युभयं न जातिः किन्तूपाधिः। [सामानाधिकरण्य ... ]

अनवस्थितिः—अनवस्था अर्थात् क्वचिदपि विश्रामाभावः [...] सामान्यत्वस्य जातित्वे बाधिका। [...]

अयं भावः—यदि सामान्ये सामान्यान्तरमङ्गीक्रियेत तत्रापि सामान्यान्तरं, तत्रापि सामान्यान्तरमित्युत्तरोत्तरमनवस्थायिनी धारा आपतेत् तस्मात्सामान्यत्वं न जातिः। सामान्ये न सामान्यान्तरमित्यर्थः।

रूपहानिः—स्वतो व्यावर्त्तकत्वात्मकरूप(लक्षण)स्य हानिः रूपहानिः साच विशेषत्वस्य जातित्वे बाधिका।

अयमर्थः—यदि विशेषपदार्थे विशेषत्वं जातिः स्यात् तदा तेनैव तस्य व्यावर्त्तकत्वं भविष्यति, यतः सामान्याश्रयस्य सामान्यमुखेनैव व्यावर्त्तकत्वनियमः, विशेषपदार्थस्य तु न सामान्यद्वारा भेदसाधकत्वम् तस्य स्वरूपेणैव भेदसाधकत्वात् तत्रश्च विशेषपदार्थलक्षणहानिरभयात् विशेषत्वं नैव जातिः किन्तूपाधिरेव।

असम्बन्धः—समवायाभावोऽसम्बन्धः, सच समवायत्वस्य जातित्वे बाधकः। अर्थात् यदि समवाये समवायत्वं जातिः स्यात्, तर्हि समवायत्वस्य समवाये वृत्त्यर्थं समवायान्तरकल्पनाऽऽपद्येत सा च न युक्ता।

अयं भावः—रूपादिधर्मा हि रूपादिमत्सु द्रव्येषु समवायसम्बन्धेन वर्त्तन्ते, समवाये यदि समवायत्वं जातिः सापि द्रव्यत्वादिवत् वृत्तित्वलाभाय समवायान्तरमपेक्षिष्यते समवाये च समवायान्तरस्यासम्भव इति न समवायत्व* जातिः।

---

*यस्य सम्बन्धः स सम्बन्धस्य प्रतियोगी यस्मिन्सम्बन्धः स सम्बन्धस्य अनुयोगी, अनेन नियमेन समवायः क्वचित्प्रतियोगितासम्बन्धेन वर्त्तते क्वचिदनुयोगिता-

तदपेक्षयाचेति--सत्तापेक्षया चेत्यर्थः।

द्रव्यं सत्, गुणः सन्, कर्म सत् इत्यनुगतप्रतीतिरेव सत्तायाः साधकं प्रमाणम्। तथाह--पारमर्षं सूत्रम्--सदिति यतो द्रव्यगुणकर्मसु सा सत्ता (वै० १।२।७) इतिकारणं प्रत्ययव्यवहारयोः प्रकारमुपदिशति तथा च द्रव्यादिषु त्रिषु सत्सदितिप्रकारकः यतः प्रत्ययः, सदिदं सदिदमित्याकारकः शब्दप्रयोगो वा यदधीनः सा सत्तेति तद्व्याख्यानात्। भाष्यमपि 'परं सत्ता महाविषयत्वात् सा चानुवृत्तेरेव हेतुत्वात्सामान्यमेव' इति।

**परभिन्ना च या जातिः सैवापरतयोच्यते।**
**द्रव्यत्वादिकजातिस्तु परापरतयोच्यते ॥ ९ ॥**

परभिन्नेति—सत्ताभिन्ना सर्वापि जातिः। परापरतयेति—परतया अपरतया चेत्यर्थः।

**व्यापकत्वात्परापि स्याद्व्याप्यत्वादपरापि च।**

पृथिवीत्वाद्यपेक्षया व्यापकत्वादधिकदेशवृत्तित्वात् द्रव्यत्वादेः परत्वं, सत्तापेक्षया व्याप्यत्वाद् अल्पदेशवृत्तित्वाच्च द्रव्यत्वस्यापरत्वं, तथा च धर्मद्वयसमावेशादुभयमविरुद्धम् ॥

ननु--विरुद्धयोः परत्वापरत्वयोः कथमेकत्र स्थितिरित्यत आह—व्यापकत्वादिति। पृथिवीत्वाद्यपेक्षयेति—द्रव्यत्वादेः पृथिवीत्वाद्यपेक्षया इत्यन्वयः। धर्मद्वयेति—आपेक्षिकधर्मद्वयस्यैकत्र समावेशाच्चोभयोः परत्वापरत्वयोर्विरोध इति भावः।

'द्रव्यत्वं गुणत्वं कर्मत्वं सामान्यानि विशेषाश्च' (वै० १।२।५) इत्यार्षसूत्रमूलकमेवेदं विभागकरणम्।

---

सम्बन्धेन, समवाय यदि समवायेन जातिः स्यात् तस्या अपि समवायि समवायसम्बन्धे नवर्तिता भवेत् तयाश्च समवायः समवाय उतान्यतरसम्बन्धेन कल्प्यमानः स्यात् स च नार्हतिक्रमोऽनुमितः प्रतियोगितानुयोगितान्यतरसम्बन्धेन समवायाभाव एतत्सम्बन्ध तेन समवायत्वम् नाव जाति न जाति. अतिप्रसङ्गेति गूढाभिप्रायः।

विशेषं निरूपयति—

**अन्त्यो नित्यद्रव्यवृत्तिर्विशेषः परिकीर्तितः ॥ १० ॥**

अन्ते अवसाने वर्तत इत्यन्त्यः, यदपेक्षया विशेषो नास्तीत्यर्थः । घटादीनां द्व्यणुकपर्यन्तानां तत्तदवयवभेदात्परस्परं भेदः परमाणूनां परस्परभेदको विशेष एव । स तु स्वत एव व्यावृत्तः तेन तत्र विशेषान्तरापेक्षा नास्तीति भावः ॥५॥१०॥

अन्त्य इति—अन्ते अवसाने मर्यादा कल्पनायाः वर्तत इति अन्त्य, दिगादिभ्यो यत् (४।३।५४) इति भवार्थे यत् प्रत्ययः, अर्थात् यः पदार्थश्चरमव्यावर्त्तकरूपेण स्वीकृतोऽयं च परमाण्वाकाशादिषु नित्यद्रव्येषु वृत्तिर्वर्त्तनं स्थितिर्यस्य स विशेषः विशेषनामकः परिकीर्तित उक्तः कणादमुनिनेति शेषः तथा च सूत्रम्—अन्यत्रान्त्येभ्यो विशेषेभ्यः ( वै० १ । २ । ६ ) । नित्यद्रव्यवृत्तयोऽन्त्या विशेषाः ते खल्वत्यन्तव्यावृत्तिहेतुत्वाद्विशेषा एवेति प्रशस्तपादभाष्ये । अयमभिसन्धिः सावयवपदार्थानामवयवभेदाद्भेदः कल्पयितुं शक्यते परमाण्वादिनिरवयवानान्तु को भेदकः स्याद् यदि विशेषो न स्याद्, अतस्तेषु यो व्यावृत्तबुद्धिजननहेतुः स एव विशेषः स तु स्वतोऽव्यावृत्तो न तत्र विशेषान्तरापेक्षा वर्त्तत इति । विशेषे भेदानुमितिप्रकारश्चायम्—पृथिवीपरमाणुगतो विशेषः जलादिपरमाणुगताद्विशेषात् भिद्यते विशेषात् । अत्र यथा घटः पटाद्भिन्नो घटत्वाद् इति घटाद्भिन्नो घटत्वधर्मः पटप्रतियोगिकभेदसाधको न तथा विशेषेऽन्योधर्मो भेदसाधक इत्येव तस्य स्वतोव्यावृत्तत्वम् ।

समवायं दर्शयति—

**घटादीनां कपालादौ द्रव्येषु गुणकर्मणोः ।**
**तेषु जातेश्च संबन्धः समवायः प्रकीर्तितः ॥ ११ ॥**

घटादीनामिति—यस्य सम्बन्धः स तस्य ( सम्बन्धस्य ) प्रतियोगी, यदि तन्त्वन्वयः उ [illegible] घटादीनामि-

त्यत्र षष्ठ्या प्रतियोगित्वमर्थः, कपालादावितिसप्तम्या अनुयोगित्वमर्थः । घटपदमवयविनं कपालपदञ्चावयवमुपलक्षयति, तथाच कारिकाया अयमर्थः सम्पद्यते—अवयवप्रतियोगिकोऽवयवानुयोगिकः, गुणकर्मप्रतियोगिको द्रव्यानुयोगिको, जातिप्रतियोगिको द्रव्यगुणकर्मानुयोगिकः, चकाराद्विशेषप्रतियोगिको नित्यद्रव्यानुयोगिकश्च य सम्बन्धः स समवाय इत्यर्थं इति कृत्वैवाह मुक्तावलीकारः अवयवावयविनोरित्यादि—

अवयवावयविनोर्जातिव्यक्त्योर्गुणगुणिनोः क्रियाक्रियावतोर्नित्यद्रव्यविशेषयोश्च यः संबन्धः स समवायः । समवायत्वं नित्यसंबन्धत्वम् ।

समवायस्य लक्षणमाह—नित्यसम्बन्धत्वमिति । सम्बन्धिभिन्नत्वे सति सम्बद्धप्रतीतिनियामकत्वं सम्बन्धसामान्यलक्षणम् । तथाच अयुतसिद्धानां समवाय इति फलितं भवति । उक्तञ्च भाष्ये-'अयुतसिद्धानामाधार्याधारभूतानां य सम्बन्ध इहप्रत्ययहेतु स समवाय' इति अयुतसिद्धत्वञ्च पृथगसिद्धत्वम् । युतं पृथग्भूतं सत् सिद्धं न भवति यत् तदयुतसिद्धमित्यर्थः । अयं भाव —पृथग्भूतत्वे सति ययोरपरस्परोपलब्धिर्न भवति तयोर्य सम्बन्ध. स समवायः यथा मूल एव निर्दिष्टमवयवावयविनोरित्यादिना, तद्यत्र अवयवं विनाऽवयविनः स्थिति रुपलब्धिर्वा भवितुमर्हति, नापि गुणिनं विना गुणानामित्यादि बोध्यम् ।

तत्र प्रमाणं तु गुणक्रियादिविशिष्टबुद्धिर्विशेषणविशेष्यसंबन्धविषया विशिष्टबुद्धित्वात् दण्डी पुरुष इति विशिष्टबुद्धिवत् इत्यनुमानम् । एतेन संयोगादिबाधात्समवायसिद्धिः । न च स्वरूपसंबन्धेन सिद्धसाधनम्, अर्थान्तरं वा, अनन्तस्वरूपाणां संबन्धत्वकल्पने गौरवाल्लाघवादेकसमवायसिद्धिः । न च समवायस्यैकत्वे वायौ रूपवत्ताबुद्धिप्रसङ्गः, तत्र रूपसमवायसत्त्वेऽपि रूपाभावात् ।

समवायस्य सम्बन्धरूपतायामनुमान प्रमाणमाह—तत्रेति। गुणक्रियादिविशिष्टबुद्धिरिति—नीलो घट, पीतो घट इत्यादि गुणविशिष्टबुद्धि यतो नील विशेषण घटो विशेष्य, गतिमान्देवदत्त इति क्रियाविशिष्टबुद्धि, घटत्ववान् इति जातिविशिष्टबुद्धिरित्यादि स्वयमूह्यम्। 'गुणक्रियादिविशिष्टबुद्धि रिति पक्ष, 'विशेषणविशेष्य-सम्बन्धविषया' इति साध्यम् 'विशिष्टबुद्धित्वात्' इति हेतु ,'दण्डी पुरुष' इति दृष्टान्त। संयोगादिबाधादिति—'द्रव्ययोरेव संयोग' इति नियमसत्त्वात् गुणगुण्यादीनां समवाय एव सम्बन्धो विशिष्ट प्रत्ययहेतुरितिभाव।

सम्प्रति अयुतसिद्धपदार्थानां स्वरूपसम्बन्ध इति वदतां मीमांसकानां शङ्कामुत्थाप्य निरस्यति—नचेत्यादिना। सिद्धस्यैव साधनमिति सिद्धसाधनम् गुणक्रियादिविशिष्टबुद्धिरित्यनुमानेन समवायसम्बन्धसाधन प्रवृत्तो नैयायिक अस्मन्मत (मीमांसकमत) स्वरूपसम्बन्धमेव साधयति न किञ्चिदपूर्वं करोतीति पिष्टपिष्टिरेव।

अर्थान्तरं चेति—'प्रकृतादर्थादप्रतिसम्बद्धार्थमर्थान्तरम्' (न्याय० ५।२।७) इत्यर्थान्तराख्य निग्रहस्थान समवायसाधनाय प्रवृत्तानां नैयायिकानाम् प्रकृतस्वरूपसम्बन्धसिद्धया भवतीति पूर्वपक्षयितुर्मीमांसकस्याभिप्राय। तदुत्तरं खण्डयति नैयायिक—अनन्तस्वरूपाणामित्यादिना। प्रत्येक गुणादीनां द्रव्यादिभि सहैकमसमवायेन सम्बन्धेन निर्वाहे सति स्वरूपसम्बन्धकल्पने गौरवमेव मीमांसकस्य। तथा च यथा पृथिव्यादिजनकतया लाघवादेक परमेश्वरः सिद्ध्यति तथा समवायोऽपीति सिद्धान्तिनोऽभिप्राय।

इदन्तु वाच्यम्—यद्यपि लाघवादेकसमवायवादिन प्राचीनस्य मते नैष दोष तथापि 'पृथिव्यां गन्धस्य समवायो न जले' इत्यादि प्रतीत नानासमवायवादिनां नव्यस्य मत नोक्तानुमानेन समवाय सिद्धि किन्तु नानासमवायकल्पनापेक्षया उपस्थितानां नानास्वरूपाणामेव स्वीकारो वर उपस्थितपरित्यज्यानुपस्थितकल्पनायां मानाभावात्।

**अत्रोत्तरम्**—नव्यनयेऽपि समवायेन कार्यंप्रति तादात्म्येन हेतुता, यथा समवायेन पटाख्य कार्यंप्रति तादात्म्यसम्बन्धेन तन्तूनां कारणता, इत्यत्र पटनिष्ठकार्यताया अवच्छेदकः सम्बन्धः समवाय-एव तत्कथं स्वरूपं सम्बन्ध स्यात् । नच पटनिष्ठकार्यताया अवच्छेदक. सम्बन्धोऽपि स्वरूपसम्बन्ध एव भविष्यतीति मुधा समवायकल्पनेति वाच्यम्, यतस्तथा कल्पनायां यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणमिति समवायिकारणलक्षणव्यवस्था सर्वथा भज्येत

यदि तु यत्सम्बद्धं कार्यमुत्पद्यते तत्समवायिकारणमिति लक्षणं करिष्याम इत्युच्येत? तथा कपालसम्बद्धो यो घटध्वंस तस्यापि कपालस्य समवायिकारणतापत्तिः, इष्टापत्तौ च ध्वंसस्यापि घटकार्यवद् भावकार्यतापत्तिः । तस्माद्भावकार्यवृत्तिर्यः कार्यताधर्मः तस्यावच्छेदकसम्बन्धविधयाऽपि नव्यमते समवायसिद्धौ न किमपि दोषं पश्याम इति शम ।

समवायस्यैकत्वे वायौ रूपप्रतीतिमाशङ्क्य खण्डयितुमाह—नचेति । रूपवत्ताबुद्धेरिति—रूपवत्ताप्रतीतेः प्रमात्वप्रसङ्ग इत्यर्थः रूपत्वसमवायो योऽस्ति वायौ यश्च रूपसमवायोऽस्ति पृथिव्यादिषु सर्वेक एव यत इत्याक्षेप्तुराकूतकम् । तत्रेति—वायौ । रूपाभावादिति—नहि समवायसत्तामात्रेण रूपवत्ताप्रतीतिः किन्तु रूपप्रतियोगिकसमवाय एव रूपवत्ताप्रतीतिहेतुः, वायौ च रूपाद्यन्ताभावान्न रूपप्रतियोगिकः समवाय इति समाधातुराकूतकम् ।

न चैवमभावस्य वैशिष्ट्यं संबन्धान्तरं सिध्येति वाच्यम्, तस्य नित्यत्वे भूतले घटानयनानन्तरमपि घटाभावबुद्धिप्रसङ्गात् । घटाभावस्य तत्र सत्त्वात् । तस्य नित्यत्वात्, अन्यथा देशान्तरेऽपि तत्प्रतीतिर्न स्यात् । वैशिष्ट्यस्य च तत्र सत्त्वात् । मम तु घटे पाकरक्ततादशायां श्यामरूपस्य नष्टत्वान्न तद्वत्ताबुद्धिः । वैशिष्ट्यस्यानित्यत्वे त्वनन्तवैशिष्ट्यकल्पने तत्रैव गौरवम् । इत्थं च तत्तत्कालीनतत्तद्भूतलादिकं तत्तदभावानां संबन्धः ११

एवमतिरिक्तसमवायसिद्धौ तद्वत् भूतलादिषु वैशिष्ट्याख्य-सम्बन्धान्तरसिद्धिप्रसङ्गमाशङ्क्य विकल्पद्वयं कृत्वा परिहरति—नचेत्यादिग्रन्थेन । अभावस्य वैशिष्ट्यं सम्बन्धान्तरं सिद्धयेद् इति पूर्वपक्षिणो ग्रन्थः ।

सिद्धान्ती आह—'घटाभाववद्भूतलम्' इत्यत्र वैशिष्ट्यं यदि सम्बन्धान्तरं तत् किं नित्यमनित्यं वा ? नाद्यः तस्य वैशिष्ट्यस्य नित्यत्वे, घटानयनान्तरमपि घटानयनदशायामपि । घटाभावबुद्धि-प्रसङ्गात् 'घटाभाववद्भूतलम्' इत्याकारकप्रतीतिप्रसङ्गात् ।

नच वैशिष्ट्यस्य सत्त्वेऽपि घटानयनकाले भूतले घटाभावाभा-वादेव न घटाभावविषयिणी बुद्धिरिति वाच्यम्, तस्य घटाभावस्य नित्यत्वात् । अत एव तत्र भूतले । घटाभावस्य घटप्रतियोगिकाभा-वस्य सत्त्वात् । विपक्षे दण्डमाह—अन्यथेति । यदि घटाभावो नित्यो न स्यात् तदा देशान्तरेऽपि घटशून्यदेशेऽपि, तत्प्रतीतिः [illegible] करत्वादेव अनित्य- [illegible] स्यादिति भावः । [illegible] वैशिष्ट्याख्यस्य सम्बन्धस्य, नित्यतया घटानयनदशायामपि सत्त्वात् विद्यमानत्वात् स्यादेव घटाभावबुद्धिरिति शेषः ।

ननु तथापि सिद्धान्तिनो मते यत्र पाकेन ( विजातीयतेजः संयोगेन ) घटो रक्तो जातः तत्र श्यामरूपस्यापि समवायो ( नित्यः सम्बन्धो ) वर्त्तते, परं श्यामरूपवत्ताबुद्धिर्न जायते यथा, तथा ममापि वैशिष्ट्यस्य नित्यत्वे घटवत्तादशायां न घटाभावबुद्धिर्भवतीति समानौ चोद्यपरिहारौ किमित्यहमेवोपालभ्य इत्यत आह—ममापीति ।

अयमाशयः—नहि रक्तरूपोत्पत्तिकाले श्यामरूपं विद्यते येन श्यामरूपवत्ताप्रतीतिः स्यात्, समवायस्यैक्येऽपि तत्तद्रूपनिरूपित-स्यैव तस्य तथाविधधीजनकत्वादिति समाधानमत्रोचितमेव, तव तु अभावस्य वैशिष्ट्यं नित्यं तेन स्यादेव घटवत्ताकालेऽपि घटाभाव-प्रतीतिरिति महद्वैषम्यम् ।

द्वितीयकल्पे दोषमाह—वैशिष्ट्यस्यानित्यत्व इति । तथा चोत्पत्तिविनाशकल्पनया अनन्तवैशिष्ट्यकल्पने तत्रैव गौरवमिति भावः ।

ननु—यदि घटाभावभूतलयोर्न वैशिष्ट्यं सम्बन्धस्तर्हि कथं 'घटाभाववद्भूतलमिति' भूतले घटाभाववत्ताप्रत्ययः, स्वरूपसम्बन्ध स्वीकारे तु घटाभावकाल इव घटसत्ताकालेऽपि भूतले घटाभावप्रतीति स्तथापि मते प्रसङ्गेन द्वयोः स्वरूपसम्बन्धस्य सत्त्वादित्याशङ्कायां सम्भाव्यमानायां समाधानमाह—एवञ्चेति । अयमत्र सिद्धान्ति-ग्रन्थस्याऽभिप्रायः—

यत्र घटात्यन्ताभावबुद्धिर्जायते तत्र तत्क्षणविशिष्ट एवाभावो भासते न तु केवलः, अर्थात् अभावप्रत्ययकाले अभावप्रत्ययान्तः-पाती तत्तत्क्षणात्मक कालोऽप्यस्माकमभिमतः । यद्यपि घटात्यन्ता-भावः स्वरूपेण भूतलादौ नित्यः तेन घटसत्ताकालेऽपि 'घटाभाव-वद्भूतल' मित्याकारो प्रत्ययेन भाव्यम्, तथापि प्रदर्शितज्ञानकालिक क्षणात्मकविशेषणाभावान्न घटसत्ताकाले घटाभावधीः समुत्पद्यते, तादृशक्षणात्मकविशेषणाभावादेव विशेषणाभावप्रयुक्तविशिष्टाभाव-( घटात्यन्ताभावाभावो ) मापन्नोतुं शक्यते, तेन तस्य नित्यत्वेऽपि न घटकाले घटाभावधीरिति नव मम मते दोषलेशोऽपि । एवञ्च घटा-भावभूतलयोर्न स्वरूपमात्र सम्बन्धः किन्तु क्षणात्मकविशेषणावि-शिष्टस्वरूपविशेष एवेति भावः ।

एवञ्चेत्यादिफक्किकार्थस्तु-तत्तत्कालीनतत्तद्भूतलादिकम् घटाभाववद्भूतलमितिज्ञानकालीनभूतलादिकम् ।, तत्तद्भावानाम् यस्य यस्याभावस्य बुद्धिः तस्य तस्याभावस्य सम्बन्धः अर्थात् भूतलेन सहाभावीयसम्बन्धः ज्ञेय इति शेषः ।

केचित्तु भूतलं घटविशिष्टं घटाभावविशिष्टं चेति प्रत्ययबलाद् *यत्र यस्य यः सम्बन्धः स एव तत्र तस्य* वैशिष्ट्यम् यथा चोक्तज्ञाने घटसम्बन्धः घटाभावसम्बन्धो वा भूतलेऽवगम्यते स एव तयो

शेषितत्वम्, यथा वा दण्डी पुरुष इति ज्ञाने दण्डसम्बन्ध पुरुष इत्याहुः। अधिकं रामरुद्र्यादिषु द्रष्टव्यम्।

अभावं विभजते—

**अभावस्तु द्विधा संसर्गान्योन्याभावभेदतः।**
**प्रागभावस्तथा ध्वंसोऽप्यत्यन्ताभाव एव च ॥१२॥**
**एवं त्रैविध्यमापन्नः संसर्गाभाव इष्यते।**

अभावत्वं द्रव्यादिषट्कान्योऽन्याभाववत्त्वम्। संसर्गाभावान्योन्याभावभेदादित्यर्थः। अन्योन्याभावस्यैकविधत्वात्तद्विभागाभावात्संसर्गाभावं विभजते। **प्रागभाव इति**। संसर्गाभावत्वम्, अन्योन्याभावभिन्नाभावत्वम्। अन्योन्याभावत्वं तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकाभावत्वम्। विनाश्यभावत्वं प्रागभावत्वम्। जन्याभावत्वं ध्वंसत्वम्। नित्यसंसर्गाभावत्वम्-अत्यन्ताभावत्वम्।

अभावस्त्विति। अभावं लक्षयति—अभावत्वमिति। नञनुल्लिखितधीविषयको भाव तद्भिन्नोऽभाव नञुल्लिखितप्रतीतिविषयक इत्यर्थः। किं वा * प्रतियोगिज्ञानाधीनज्ञानविषयत्वमभावत्वम् तद्भिन्न भावत्वम्। अभावो द्विधा द्विप्रकारमभिनीय दर्शयति-संसर्गेत्यादिना। कारिकायां संसर्गेति—संसर्गश्च अन्योन्यश्च तयोरभाव, स चासौ भेद, तस्मात् संसर्गान्योन्याभावभेदत पञ्चम्यास्तसिल् एतदभिप्रायेण मुक्तावल्यां व्याख्यातं संसर्गाभावान्योन्याभावभेदादित्यर्थं इति। क्रमेण द्वयोरभावयोर्मध्ये प्रथम संसर्गाभाव लक्षयति—संसर्गाभावत्वमिति। अन्योन्याभावेऽतिव्याप्तिवारणाय

---

* इह कपाले घटो भविष्यति, इह तन्तुषु पटो भविष्यति इति प्रत्ययगोचर प्रागभाव घटो ध्वस्त पटो ध्वस्त इत्याकारकप्रतीतिविषयो ध्वंसाभाव एतौ च [illegible] —प्रतियोगिज्ञानेति।

अन्योन्याभावभिन्नेति । घटपटादिभावपदार्थेष्वतिव्याप्तिवारणाय अभावपदमुपात्तम् ।

अयं भावः—यद्यपि संसर्गो नाम सम्बन्धमात्रम्, तथापि प्रकृते वृत्तिनियामकसम्बन्ध एव संसर्गपदेन गृह्यते वृत्तिराधेयता, येन सम्बन्धेन आधेयपदार्थः स्वाधारे वर्तते स सम्बन्धो वृत्तिनियामक इत्युच्यते स च संयोग समवाय स्वरूप कालिक दैशिक विशेषणतादि-रूपोऽनेकविधः एतद्भिन्ना वृत्त्यनियामकाः ते च गगनादिसंयोगा-ङ्गुलिद्वयसंयोगविषयत्व-विषयित्वानुयोगित्व-प्रतियोगित्व-निरूपकत्व निरूप्यत्व तादात्म्य*स्वरूपादयोऽनन्ता एव ।

एवञ्च संसर्गावच्छिन्न ( वृत्तिनियामकसम्बन्धावच्छिन्न ) प्रतियोगिताकोऽभावः संसर्गाभावः । यस्याभावः स तस्य प्रतियोगी प्रतियोगिनोऽभावप्रतियोगिता, प्रतियोगितायाश्चावच्छेदको धर्मः सम्बन्धश्चेतद्द्वयं भवति, धर्मसम्बन्धाभ्यां हि प्रतियोगितावच्छिद्यते अर्थात् विशिष्यते अत एव सा तदवच्छिन्नेत्यभिधीयते, तत्र प्रति-योगितायाः समनियतो धर्मः स प्रतियोगितावच्छेदकः । प्रतियोगी स्वाधिकरणे येन सम्बन्धेन वर्तते स सम्बन्धः प्रतियोगितावच्छेदक-सम्बन्धः, प्रतियोगी येन धर्मेण अवच्छिद्यते विशिष्यते ( इतरेभ्यो व्यावर्त्यते ) स धर्मः प्रतियोगितावच्छेदकधर्मः यथा 'भूतले घटो नास्ति' इत्यत्र घटत्वं प्रतियोगितावच्छेदकधर्मः घटभूतलसंयोगश्च प्रतियोगितावच्छेदकसम्बन्धः एवञ्चैतद्द्वयमेव घटनिष्ठप्रतियोगितावच्छेदकम् ।

इदञ्च—'नास्ति घटो गेहे इति सतो घटस्य गेहसंसर्ग-प्रतिषेधः' ( वै० ९ । १ । १० ) इति कणादसूत्रमूलकमेव, सूत्रार्थ-स्तु—गेहे घटस्य यः संसर्गः संयोगस्तस्य प्रतिषेधोऽभावः, स च यदि कदाचिदपि गेहे न घटः तदा तदत्यन्ताभाव एव, भविष्यतो घटस्य ( स्वाधिकरणे कपालादौ ) प्रागभावः भूतस्य तस्यैव प्रध्व-

* कार्यकारणयोस्तादात्म्यं सांख्यादिमते तादात्म्यं वृत्तिनियामकमपि ।

साभाव. इति । इत्थञ्च तादात्म्यातिरिक्तसम्बन्धावच्छिन्नप्रतियोगिताकाभावः *संसर्गाभाव इति लक्षणं फलति ।

अन्योन्याभावं लक्षयति—अन्योन्याभावत्वमिति । अन्योन्यस्मिन् तादात्म्येनाऽभवनमित्यन्योन्याभाव इत्यर्थः । तादात्म्यमिति तस्यात्मा स्वरूपं तदात्मा तदात्मनोभाव. तादात्म्यम् अभेद इत्यर्थः । तादात्म्यञ्च प्रतियोगितायाः अवच्छेदकोधर्म., न च 'घटो न पटः' इत्यादौ पटत्वादिरेव, घट पटो न भवतीत्यादौ घटात्मा पटो न भवतीत्यर्थो लभ्यते, पटञ्च घटतादात्म्यस्याभाव अर्थात् घटतादात्म्येनावच्छिन्ना या घटनिष्ठा प्रतियोगिता तन्निरूपको भेद पटे वर्तते इति सिद्ध भवति ।

इदन्तु बोध्यम्—नञ्पदेन विना यत्र यस्य प्रतीति तत्रैव नञ्पदसमभिव्याहारे तस्य निषेधप्रतीतिर्भवतीति नियम, यथा 'घट पट ' इत्यत्र 'नीलोघट इतिवत् समानविभक्तिकत्वादभेदसंसर्गप्रतीति, तस्या घटोभयो' पदयोर्मध्ये 'घटो न घट ' इति नञा निवेशेन निषेध क्रियते सोऽयमभेदसंसर्गनिषेधकोऽभावोऽन्योन्याभाव इत्यर्थो निर्गच्छति ।

अत्रेदमाभाति—नहि कश्चिदभाव प्रति येन केनापि सम्बन्धेन प्रतियोगिनो विरोध, किन्तु प्रतियोगितावच्छेदकसम्बन्धेनैव प्रतियोगी अभावस्य विरोधी, तथाच अन्योन्याभावस्य प्रतियोगिताव-

---

* संसर्गेण सम्बन्धेन (तादात्म्यातिरिक्तेन) अवच्छिन्नप्रतियोगिताकोऽभाव संसर्गाभाव इति म ध्यमपदलोपी समास शाकपार्थिववत् यतत्र द्वन्द्व समासं यमक्लेश ।

इदमपरमावश्यक वाच्यम्—संसर्गाभावो नञादिना तत्र धातुना च बोध्यते । तत्र निपातेन प्रागभावादिष्वभावस्य बोधः अनुयोगिनि सप्तम्यन्तता यथा—'गेहे घटो नास्ति' इत्यादौ । विभक्त्यर्थसमानाधिकरणं धात्वर्थे बोधने तु—नाद नियम, यथा—गगन न पश्यति, न कलञ्ज भक्षयेत् इत्यादौ दर्शने गगनकर्मत्वस्य, कलञ्जभक्षणे च बलवदनिष्टसाधनत्वस्य नञा संसर्गाभावस्य बोधनात् न तत्र व्यभिचारः ।

विनाशीति। इह कपाले घटो भविष्यति, इह तन्तुषु पटो भविष्यतीति प्रत्ययसाक्षिकः उत्पत्तेः पूर्वं कार्यस्याभावो यः स प्रागभावः, कार्यस्योत्पत्तेः प्राक् स्वप्रतियोगिसमवायिकारणवृत्तिः, अनादिः, सान्त इत्युच्यते।

ध्वंसाभावं लक्षयति—जन्याभावमिति। प्रागभावेऽतिव्याप्तिवारणाय जन्येति। स च घटो ध्वस्तः, पटो ध्वस्तः इतिप्रत्ययविषयः कार्यस्योत्पत्त्यनन्तरं स्वप्रतियोगिसमवायिकारणे वर्त्तते, सोऽयं सादिरनन्तो भवति। यदि ध्वंसस्याप्यन्तः स्यात् तर्हि विनष्टस्य घटादेः पुनरप्युन्मज्जनं भवेत् अतोऽनन्त एव।

अत्यन्ताभावं लक्षयति—नित्येति। ध्वंसादिवारणाय नित्यपदम्।

*अत्यन्ताभावः अर्थात् त्रैकालिको यो नित्योऽभावः।* किमुक्तम्? योऽभावः वस्तुसत्तायाः पूर्वमप्यासीत्, पश्चादपि भविष्यति, वस्तुसत्ताकालेऽपि वर्त्तते परन्तु प्रत्यायकसम्बन्धाभावात्सत्तां न भाति सोऽभावोऽत्यन्ताभावः। त्रैकालिकत्वे सति संसर्गावच्छिन्नप्रतियोगिताक इत्यर्थः। यथा—'भूतले घटो नास्ति' इति। एवं निष्कृष्टे लक्षणे ध्वंसप्रागभावयोरतिव्याप्तिवारणाय 'त्रैकालिक' विशेषणनिवेशः, भेदे (अन्योन्याभावे) अतिव्याप्तिवारणाय 'संसर्ग' पदोपादानमिति बोध्यम्।

यत्र तु भूतलादौ घटादिकमपसारितं पुनरानीतं च तत्र घटकालस्य संबन्धाघटकतया अत्यन्ताभावस्य नित्यत्वेऽपि घटकाले न घटात्यन्ताभावबुद्धिः। तत्र उत्पादविनाशशाली चतुर्थोऽयमभाव इति केचित्। अत्र ध्वंसप्रागभावयोरधिकरणे नात्यन्ताभाव इति प्राचीनमतं, श्यामघटे रक्तो नास्तीति रक्तघटे श्यामो नास्तीति धीश्च प्रागभावं ध्वंसं चावगाहते न तु तदत्यन्ताभावम्। नव्यास्तु तत्र विरोधे मानाभावात् ध्वंसादिकालावच्छेदेनाप्यत्यन्ताभावो वर्तत इति प्राहुः।

यत्र कालत्रयेऽपि प्रतियोगी न स्यात् तत्रैव अत्यन्ताभावव्यवहारः अतो नवीनमते घटवद्देशेऽत्यन्ताभावव्यवहारवैयर्थ्यं स्पष्टमेवेत्याशङ्कामुद्धृत्य अत्यन्ताभावस्य केषाञ्चिन्मतेन व्यवस्थापयन्नाह—यत्रेति । तथा च भूतलविशिष्टघटकालसंयोग एव विद्यमानस्याप्यत्यन्ताभावस्य प्रतीतेः प्रतिबन्धकः, तेन घटानयनानन्तरं न घटात्यन्ताभावबुद्धिः अर्थात् घटात्यन्ताभाववद्देशे घटानयनानन्तरं घटकालो भूतलघटात्यन्ताभावयोः सम्बन्धतां विघटयति, अतएव 'इह भूतले घटो नास्ति' इति प्रतीतिर्न जायते ननु तत्र अत्यन्ताभाव एव नास्तीति मन्तव्यम् तस्य नित्यत्वात् केवलान्वयित्वाच्चेति भावः। मतान्तरमाह—तत्रेति । चतुर्थोऽयमभाव इति—सामयिकाभाव इत्यर्थः । कालविशेषविशिष्टस्वरूपस्य संसर्गत्वोपगमात् घटवति 'घटो नास्ति' इति प्रतीत्युपपत्तौ चतुर्थसंसर्गाभावे (सामयिकाभावनामनि अभावे) मानाभाव इत्यस्वरसः केचिदित्यनेन सूचितः । ध्वंसप्रागभावयोरत्यन्ताभावस्य च भिन्नाधिकरणत्वादिति प्राचां मतमाह—अत्रेति । श्यामे घटे 'रक्तो नास्ति' रक्ते घटे 'श्यामो नास्ति' इति प्रतीतिद्वयं नात्यन्ताभावं विषयीकरोतीत्याह——श्यामघट इति ।

अयमाशयः—नहि 'नास्ति' इत्याकारा प्रतीतिः अत्यन्ताभावमेव विषयीकरोतीति नियमः, किन्तु प्रागभावध्वंसाभावाधिकरणेऽप्यन्यत्र, उक्ताकारा प्रतीतिः अत्यन्ताभावविषयिणी प्रागभावध्वंसाभावाधिकरणे तु सा प्रागभावं ध्वंसं वा यथायोगं विषयीकरोति नात्यन्ताभावं, प्रागभावध्वंसाभावाभ्यां सहात्यन्ताभावस्य विरोधात् अन्यथा घटो रूपमिव प्रागभावध्वंसाभावाधिकरणे कालत्रयेऽपि प्रतियोगिप्रत्ययो न स्यात् इति प्राचां नैयायिकानां मतम् ।

एतद्विरुद्धं नव्यमतमाह—नव्यास्त्विति । तत्र ध्वंसप्रागभावयोः । अत्यन्ताभावेन सह न विरोधः । ध्वंसादिकालावच्छेदेन ध्वंसादिसमानकालिकत्वस्वीकारात्. यस्मिन्काले ध्वंसः प्रागभावो वा तस्मिन् कालेऽपीत्यर्थः, तथा च ध्वंसप्रागभावाभ्यां सह नात्य-

न्ताभावविरोध इति नव्यमतसारः ।

नन्वस्तु अभावानामधिकरणात्मकत्वं लाघवादिति चेन्न, अनन्ताधिकरणात्मकत्वकल्पनापेक्षयातिरिक्तकल्पनाया एव लघीयस्त्वात् । एवं च आधाराधेयभावोऽप्युपपद्यते । एवं च तत्तच्छब्दगन्धरसाद्यभावानां प्रत्यक्षत्वमुपपद्यते । अन्यथा तत्तदधिकरणानां तत्तदिन्द्रियाणामग्राह्यत्वादप्रत्यक्षत्वं स्यात् । एतेन ज्ञानविशेषकालविशेषाद्यात्मकत्वमप्यत्यन्ताभावस्येति प्रत्युक्तमप्रत्यक्षत्वापत्तेः ।

'अभावोऽधिकरणस्वरूप' इति मन्वानः प्राभाकर ( मीमांसकः ) शङ्कते—नन्विति । तथा च कथञ्चिदप्यधिकरणस्वरूपाद् नाभावः पृथक् पदार्थ इति मीमांसकाभिप्रायः ।

सिद्धान्ती निषेधति—इति चेन्नेति । अनन्तान्यधिकरणानि सन्ति, तथा चैकैकस्य रूपाद्यभावस्यानन्ततेति महद् गौरवं मीमांसकमते । 'अधिकरणातिरिक्तस्वरूपोऽभाव' इतिकल्पनायां तु लाघवमेव परम् । अतिरिक्तेति—भावातिरिक्तेत्यर्थः । अधिकरणातिरिक्ताभावस्वरूपपक्षे हेत्वन्तरमभावोऽस्तीत्याह—एवञ्चेति । अस्यायमर्थः—अधिकरणापेक्षयाऽभावस्य अतिरिक्तत्वे च आधाराधेयभाव अर्थात् भूतलमाधारः घटाभाव आधेय तौ भेदवन्तौ स्यातां तदैव तयोः उक्तः सम्बन्धोऽपि सम्पत्तुमर्हति । यदि भूतलमेव घटाभावस्वरूपं तर्हि कथमुक्तः सम्बन्धः स्यात्, नह्यभेदे आधाराधेयभावसम्बन्ध इति भावः ।

अधिकरणातिरिक्तपक्षे घटाभावस्य प्रत्यक्षं व्यवस्थापयन् मीमांसकमते तु तस्यासम्भवमेवेति सूचयन्नाह—एवञ्चेति ।

---

*अत्र विषयो विस्तरेण मत्प्रणीतायाम्—"अभावदीपिकायां" द्रष्टव्यः

अथवा यथा न्यायमते 'घटाभावो गन्धाभाववान्' इति प्रतीतौ घटाभावो गन्धाभावाधिकरणतया प्रत्यक्षं भासते, अर्थात् घटाभावस्वरूप मेव गन्धाभाव, अथ च तयोरस्त्याधाराधेयभावकल्पना तथाऽस्मन्मतेऽधिकरणस्वरूपस्याभावस्य आधाराधेयभावे न बाधक पश्याम इति मीमांसकेन स्वसिद्धान्ते स्थापिते दूषणान्तरमाह—एवञ्चेति ।

येनेन्द्रियेण यद् ( या व्यक्ति ) गृह्यते तेनेन्द्रियेण तन्निष्ठा जाति, तद्गुण, तदभावश्च गृह्यत इत्यस्ति नियमः । तेन श्रोत्रग्राह्यस्य शब्दस्य तदभावस्य च श्रोत्रेणैव ग्रह ( ज्ञानम् ), घ्राणग्राह्यस्य गन्धस्य तदभावस्य च घ्राणेन, रसनाग्राह्यस्य रसस्य तदभावस्य रसनयैव ग्रह इत्यादि मतेन बोध्यम् ।

यदि त्वभावोऽधिकरणस्वरूप एव स्यात्तर्हि भूतलस्वरूपस्य शब्दाभावस्य श्रोत्रेन्द्रियेण प्रत्यक्षं स्यात्, नच तथा दृश्यते, सोऽप दोषोऽधिकरणातिरिक्ताभाववादिनो मम मते नास्ति, परं मीमांसकमते एव प्रसज्यत इति नाधिकरणस्वरूपोऽभाव इति स्वमतमभिप्रेत्य 'तत्तच्छब्दे' त्यारभ्य 'स्याद्' इत्यन्तो ग्रन्थो लिखित ।

केचित्तु—ज्ञानविशेषस्वरूपोऽभावः, कालविशेषस्वरूपो वाऽभाव इति मन्यन्ते तन्मतं दूषयितुमाह—एतेनेति । वक्ष्यमाणदूषणेनेत्यर्थः ।

अप्रत्यक्षत्वापत्तेरिति ।

अयमाशय —ज्ञानं न बहिरिन्द्रियेण प्रत्यक्षं कर्तुं शक्यते यतस्तत् आत्मधर्मः इच्छादिवत् इच्छाद्यात्मविशेषगुणानान्तु मनसा प्रत्यक्षं 'सुखदुःखाद्युपलब्धिसाधनमिन्द्रियं मन' इति तल्लक्षणात्, यदि गन्धाभावो ज्ञानस्वरूपं तर्हि आत्मधर्मत्वात् मनसैव वेद्य स्यात्, नचैव दृश्यते, घ्राणग्राह्यस्य गन्धस्य योऽभावः तस्यापि घ्राणेनैव प्रत्यक्षनियमात् । तस्मात् 'ज्ञानविशेषस्वरूपोऽभाव' इति वादी व्युदस्त ।

कालोऽपि न कस्यचिदिन्द्रियस्य विषय, एतत्तु अग्रे कालग्रन्थे स्फुटीभविष्यति प्रथमभावस्य कालविशेषस्वरूपत्वेऽपि पूर्ववदत्र गन्धाद्यभावानामप्रत्यक्षत्वापत्तिर्दोषो बोध्य ।

भवन्ति चात्र ( अभावपदार्थे ) पारमर्षाणि सूत्राणि—

क्रियागुणव्यपदेशाभावात् प्रागसत् । वै० ९ । १ । १ उत्पत्त्यनन्तरं घटादिकार्यजातस्य भवति गच्छति तिष्ठतीति क्रियया नीलो रक्तः पीत इति गुणैश्च व्यपदेशो व्यवहारः, स च प्राग् उत्पत्तेः पूर्वमसदिति प्रागभावः ।

सदसत् । २ । सद् विद्यमानमथ च मुद्गरादिप्रहारेण असत् ध्वस्त इति प्रत्ययवेद्यो ध्वंसाभावः ।

सच्चासत् । ४ । 'घटः पटो नेति प्रतीतिवेद्य योऽसौ अन्योन्याभावः अर्थात् सदेव घटादिपदार्थं असदिति व्यवह्रियते पटादिरूपेण तत्र घटादौ पटादेः तादात्म्याभावः स एवान्योन्याभावः ।

यच्चान्यदसदतस्तदसत् । ५ । यथोक्ताभावत्रितयादन्य असत् वायौ रूपं नास्तीति त्रैकालिकोऽपि वायुरूपाधिकरणे रूपसंसर्गं निषेधति तदसत् अत्यन्ताभावो बोध्य ।

एतच्च प्रागभावस्योत्तरावधि, ध्वंसाभावस्य पूर्वावधि, अन्योन्याभावः प्रतियोगिसमानाधिकरणः अत्यन्ताभावस्तु उक्तत्रितयविधर्मा, नास्य पूर्वोत्तरावधी अनाद्यनन्तत्वात् नापि चायं प्रतियोगिसमानाधिकरणः ॥

इति—प्रभासहितायां मुक्तावल्यां
पदार्थसामान्यनिरूपणनाम्नी
प्रथमा मुक्ता ।

इदानीं पदार्थानां साधर्म्यं वैधर्म्यं च वक्तुं प्रक्रमते—

**सप्तानामपि साधर्म्यं ज्ञेयत्वादिकमुच्यते ॥ १३ ॥**

समानो धर्मो येषां ते सधर्माणः तेषां भावः साधर्म्यं समानो धर्म इति फलितार्थः । एवं विरुद्धो धर्मो येषां ते विधर्माणः तेषां भावो वैधर्म्यं विरुद्धो धर्म इति फलितार्थः । ज्ञेयत्वं ज्ञानविषयता सा च सर्वत्रैवास्ति ईश्वरादिज्ञानविषयतायाः केवलान्वयित्वात् । एवमभिधेयत्वप्रमेयत्वादिकं बोध्यम् ॥१२,१३

सामान्यतः पदार्थान्निरूप्य अथ तेषामेव परस्परभेदकत्वं ज्ञापयितुं साधर्म्यं वैधर्म्यञ्च विवेचयितुमाह—इदानीमिति । पदार्थनिरूपणानन्तरमित्यर्थः । समानो धर्म इतीति—भावप्रत्ययेन स्वप्रकृत्यर्थविशेषणीभूतो जात्यादिरूपोऽर्थं उच्यते प्रकृतिजन्यबोधे प्रकारो भावः, समानधर्मत्वमित्यत्र च समानधर्म एव प्रकार ।

ज्ञानविषयतेति—ज्ञानेन निरूपिता विषयता विषयं निरूप्य ज्ञानं निरूपकमिति नियमात् अयमेव ज्ञानविषययोर्निरूप्यनिरूपकभावसम्बन्धः प्रकारप्रकारकभावसम्बन्ध इति चाच्यते । केवलान्वयित्वादिति—यद्यपि सन्ति घटपटादिभेदेन नानाविषया, तन्निष्ठा विषयता अपि नाना सन्ति, अन्या हि घटज्ञानीयविषयता अन्या च पटज्ञानीयविषयता । आद्या घटनिष्ठा परा पटनिष्ठा एवमन्यत्राप्यूह्यम् तथापि विषयतात्वेन रूपेण सा एकैव विषयमात्रस्य सर्वविषयतासु अनुगमत्वात् । एवमीश्वरज्ञानीयविषयता केवलान्वयिनी नह्येकोऽपि पदार्थ एवंविधो वर्तते यमीश्वरज्ञानं न विषयीकरोति, किन्तु सर्वे पदार्थाः सर्वज्ञस्य तस्य भगवतो नित्यज्ञानगोचराः, एतदेव केवलान्वयित्वं तस्या यदत्यन्ताभावाप्रतियोगित्वम् अर्थात् ईश्वरीयज्ञानविषयताया न कुचिदत्यन्ताभाव इत्यभिप्रायेणाह—केवलान्वयित्वादिति । एवमग्रे—आदिना अभिधेयत्व प्रमेयत्वम् [illegible] ।

ज्ञानविषयत्वं ज्ञेयत्वं, अभिधाविषयत्वमभिधेयत्वं प्रमाविषयत्वं प्रमेयत्वं, कालसम्बन्धित्वमस्तित्वमिति सप्तानां पदार्थानां समानो धर्म इत्यर्थः ।

तथाच 'षण्णामपि पदार्थानामस्तित्वाभिधेयत्वज्ञेयत्वानि' इति प्रशस्तपादः ।

अत्रास्तित्वमिति स्वरूपवत्त्वमुक्तं, यस्य वस्तुनो यत्स्वरूपं तदेव तस्यास्तित्वम् इति प्राचां व्याख्यानं हृदि कृत्वा विश्वनाथेन सप्तानामेव साधर्म्यं सङ्गृहीतम् । कालसम्बन्धित्वमस्तित्वमिति तु नव्यानां कुदृष्टिरेवेति सूक्ष्मं निरीक्ष्यम् ।

## द्रव्यादयः पञ्च भावा अनेके समवायिनः ।

द्रव्यगुणकर्मसामान्यविशेषाणां साधर्म्यमनेकत्वं समवायित्वं च । यद्यप्यनेकत्वमभावेऽप्यस्ति तथाप्यनेकत्वे सति भावत्वं पञ्चानां साधर्म्यम् । तथा नानेकभाववृत्तिपदार्थविभाजकोपाधिमत्त्वमिति फलितोऽर्थः । तेन प्रत्येकं घटादावाकाशादौ च नाव्याप्तिः । समवायित्वं च समवायसंबन्धेन संबन्धित्वं न तु समवायवत्त्वं सामान्यादावभावात् । तथाच समवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वमिति फलितोऽर्थः । तेन नित्यद्रव्येषु नाव्याप्तिः ।

सप्तानामभावसाधर्म्यस्य कथनेनैव द्रव्यादीनां पञ्चानां भावत्वसाधर्म्यं सुस्पष्टमिति पुनरधिकभावेन तदुपेक्ष्य पञ्चानां साधर्म्यं वक्ति–द्रव्यगुणेत्यादि । अत्र मूले 'द्रव्यादयः पञ्चे'ति उद्देश्यपदम्, 'भावा अनेके'इति विधेयपदम् । यमुद्दिश्य (लक्ष्यीकृत्य) विधेयस्य प्रवृत्तिर्भवति तदुद्देश्यम् अनुवाद्यमिति यावत्, उद्देश्ये प्रकारतया (विशेषणतया) ज्ञायमानो विलक्षणविषयतावान् पदार्थो विधेय इत्यन्यदेतत् । अनेकत्व इति—समवायेऽतिव्याप्तिवारणाय सत्यन्तम् । अभावे-ऽतिव्याप्तिवारणाय भावत्वमिति ।

ननु प्रत्येकमनेकेषु घटेषु एकैकत्व नास्त्यनेकत्व, आकाशे च अनेकत्व नास्ति तस्यैकव्यक्तिरूपत्वात् भावत्वञ्चोभयत्र तत अनेकत्वे सति भावत्व'मिति साधर्म्यस्य आकाशे, एकस्मिन् घटादिपदार्थे च अव्याप्तिरेवेति तत्परिहाराय परिष्कृत साधर्म्यमाह—अनेकभाववृत्तीत्यादि । अस्यायमर्थः—अनेके ये भावाः=घटपटादिव्यक्तयः तद्वृत्ति=तेषु वर्त्तमानो यः पदार्थविभाजकोपाधिः=पदार्थत्वस्य साक्षाद् व्याप्यो धर्मः द्रव्यत्व तद्वत्त्वविवक्षाया न दोषः, अर्थात् पदार्थत्वस्य साक्षाद्व्याप्य द्रव्यत्व प्रत्येक घटादिषु आकाशे च वर्तते इति नैवाव्याप्तिः ।

समवायिन इति—समवाय एषामस्तीति समवायिनः, मत्वर्थीय इन्प्रत्ययः । सामान्ये विशेषे च किमपि धर्मान्तर समवायसम्बन्धेन न वर्त्तते, तेन तत्राव्याप्तिरेवेति तद्वारणायैव समवायित्वस्य विवक्षितमर्थमाह——समवायित्वञ्चेति । समवायप्रतियोगित्वमेव समवायित्वं विवक्षित सामान्य विशेषाश्च समवायसम्बन्धेन सम्बन्धिनः (वृत्तिमन्तः) तेन नोक्तो दोष इतिभावः ।

एवं पुनरपि नित्याः परमाण्वादयो न कस्मिंश्चिदपि पदार्थे समवायेन सम्बन्धिनः (वृत्तिमन्तः) तेष्वव्याप्तिस्तदवस्थैवेति मत्वा परिष्कृत साधर्म्यस्य (समवायित्वस्य) स्वरूपमाह—समवेतवृत्तीति अयमर्थः—समवेतेषु घटादिषु रूपादिषु च वृत्तिर्वर्त्तनं यस्य, एवम्भूतो यः पदार्थस्य विभाजकोपाधिः पदार्थत्वसाक्षाद्व्याप्यो धर्मः द्रव्यत्वगुणत्वरूप तादृशोपाधिमत्त्व विवक्षितम् ।

एतञ्चानिर्धारितविस्तरेण भूतलादिचतुष्टयपरमाणुषु आकाशादिपञ्चसु च नाव्याप्तिः तत्र निर्वाचितद्रव्यत्वादिधर्मस्य यथायोग वर्त्तमानत्वात् ।

अपिच '*समवेतसमवतत्व इत्यादिचतुर्णां साधर्म्यं बोध्यम्,

* द्रव्यत्वादिपदार्थविभाजकोपाधिमत्त्व तच्च द्रव्यादिषु त्रिषु स्वरूपं कार'

'द्रव्यादीनां पञ्चानां समवायित्वमनेकत्वञ्च' इति प्रश० ।

**सत्तावन्तस्त्रयस्त्वाद्या गुणादिर्निर्गुणक्रियः ॥ १४ ॥**

सत्तावन्त इति द्रव्यगुणकर्मणां सत्तावत्त्वमित्यर्थः । गुणादिरिति । यद्यपि गुणक्रियाशून्यत्वमाद्यक्षणे घटादावव्याप्तं क्रियाशून्यत्वं च गगनादावतिव्याप्तं तथापि गुणत्वद्वृत्तिधर्मवत्त्वं कर्मवद्वृत्तिपदार्थविभाजकोपाधिमत्त्वं तदर्थः । नहि घटत्वादिकं द्रव्यत्वं वा गुणवद्वृत्ति कर्मवद्वृत्ति वा किंतु गुणत्वादिकम् । तथा आकाशत्वादिकं तु न पदार्थविभाजकोपाधिः ॥ १४ ॥

आद्यास्त्रय इति आदौमया द्रव्यगुणकर्माणि सत्तावन्ति इत्यर्थ, सत्तावत्त्वञ्च समवायसम्बन्धेन बोध्यम्, तथाच 'द्रव्यादीनां त्रयाणामपि सत्तासम्बन्धः' इति प्रश० ।

गुणादिरितीति—गुण आदिर्यस्येति तद्गुणसंविज्ञानो बहुव्रीहिः, तेन गुणस्यापि सङ्ग्रहः । तथाच गुणकर्मसामान्यविशेषसमवायाभावा निर्गुणा निष्क्रियाश्चेत्येषां गुणशून्यत्व (गुणात्यन्ताभाववत्त्वं) क्रियाशून्यत्वञ्च (क्रियात्यन्ताभाववत्त्व) साधर्म्यम् । एवमपि घटादौ आकाशादौ च अतिव्याप्तिरायाति । तथाहि :—

'उत्पन्नं द्रव्यं क्षणमगुणं तिष्ठति' इत्यस्त्येको नियमो नैयायिकानाम्, तेन आद्यक्षणे द्रव्यमपि निर्गुणं (गुणशून्यं) आकाशे कालादौ च विभुपदार्थे क्रियैव न जायते, तेन आकाशादिः पदार्थोऽपि निष्क्रिय (क्रियाशून्य), इत्थं गुणादीनामुच्यमानं साधर्म्यं द्रव्येऽप्यतिप्रसक्तमिति भवति शङ्का, तामिमां शङ्कां परिहर्तुं आतिर्वादितवाक्यं विशदतया दर्शयति—गुणवद्वृत्तीति ।

---

त्वादौ समवायसम्बन्धेन वर्तमानेषु घटत्वादिषु समवेता य पदार्थविभाजकोपाधिः पदार्थत्रय साक्षाद्व्याप्यधर्म इत्यत्रगुणत्वादि तद्वत्त्वमित्यर्थः ।

अयमर्थः—गुणोऽस्यास्तीति गुणवत्=द्रव्य, तत्र अवृत्ति ( न वृत्तिर्यस्य स. ) यो धर्मो गुणत्वादिरूप तद्धर्मवन्तः गुणाद्याः तद्वत्त्वं विवक्षितमिति न दोष, अर्थात् गुणत्वधर्मवान् गुण एव कर्मत्वधर्मवन्ति कर्माणीत्येवमादि विवक्षया फलितेऽर्थे घटपटादिद्रव्येऽति-व्याप्तिरव्युदस्ता।

एवमेव कर्मवदवृत्तीति—कर्म ( क्रिया ) यत् द्रव्यमेव तत्र न वृत्तिर्यस्य एवम्भूतो य पदार्थस्य विभाजक पदार्थत्वस्य साक्षाद्व्याप्यः उपाधिर्गुणत्वादिरेव, द्रव्यत्वन्तु पदार्थस्य विभाजक उपाधि तथापि न कर्मवदवृत्ति किन्तु कर्मवद्वृत्ति ( द्रव्यवृत्ति ) एव, आकाशत्वादिधर्मस्तु द्रव्यत्वस्य साक्षाद्व्याप्य, नतु पदार्थत्वस्य साक्षाद्व्याप्यः। अपितु पदार्थत्वव्याप्य द्रव्यत्व, तेन व्याप्यमाकाश-त्वादिकमिति परम्परया पदार्थत्वव्याप्यता, आकाशत्वादिकन्तु न पदार्थविभाजकोपाधिः किन्तु द्रव्यविभाजकोपाधिरितिभाव। इत्यमुपरिदर्शितरीत्या विवक्षाकरणेन आकाशादिष्वपि अतिव्याप्ति-र्वार्यते।

उक्तश्च प्रशस्तपादे—गुणादीनां पञ्चानामपि निर्गुणत्वनिष्क्रि-यत्वे, इति।

## सामान्यपरिहीनास्तु सर्वे जात्यादयो मताः।

सामान्यानधिकरणत्वं सामान्यादीनामित्यर्थः।

सामान्यपरिहीनास्त्विति—सामान्यविशेषसमवायाभावाः सर्वेऽपि सामान्येन जात्या हीना अर्थात् येषु सामान्यं न विद्यते इत्यर्थः। यद्यप्येकार्थसमवायसम्बन्धेन जात्यादयोऽपि सामान्यवन्त एव तथापि तेषु ■ सामान्य निरूपित अधिकरणता *एकार्थसमवा-

---

* एकस्मिन्नर्थे समवायेन सत्त्वमेकार्थसमवाय यथा—'एक रूपम्' इति प्रतीतौ रूपे गुणे ( वस्तुतो निर्गुणेऽपि ) एक सङ्ख्याया भानम्, तत्र न रूपे एकत्व

यस्तु नाधिकरणतायाः नियामकः सम्बन्ध इत्यभिप्रायेण सामान्य-परिहीनत्वस्य परिष्कृतं स्वरूपमाह—सामान्यानाधिकरणत्वमिति। एतच्च 'सामान्यादीनां त्रयाणां...असामान्यविशेषवत्त्व' मितिप्रशस्त-मूलकमेव।

## पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृतम् ॥ १५ ॥

पारिमाण्डल्येति। पारिमाण्डल्यमणुपरिमाणं कारणत्वं तद्भिन्नानामित्यर्थः। अणुपरिमाणं तु न कस्यापि कारणम्। तद्धि स्वाश्रयारब्धद्रव्यपरिमाणारम्भकं भवेत् तच्च न संभवति परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वनियमान्मह-दारब्धस्य महत्तरत्ववदणुजन्यस्याणुतरत्वप्रसङ्गात्। एवं परम-महत्परिमाणमतीन्द्रियसामान्यं विशेषाश्च बोध्याः ॥

पारिमाण्डल्यपदार्थोऽप्रसिद्ध इति कृत्वा निर्वचनेन दर्शयति-पारिमाण्डल्यमणुपरिमाणमिति। अणोः परिमाणं पारिमाण्डल्य-मिति पृषोदरादित्वात्साधु। पारिमाण्डल्यपदं द्व्यणुकपरिमाणस्या-प्युपलक्षणम्, यथा परमाणुपरिमाणं न कारणं तथा द्व्यणुकपरिमा-णमपि न कारणम्। तथा च परमाणुपरिमाणद्व्यणुकपरिमाणभि-न्नेषु कारणत्वं वर्तते तद्भिन्नानां कारणत्वं साधर्म्यमित्यर्थः। यदि अणुपरिमाणं कारणं स्यात् तदा द्व्यणुकमणुतरं भवेत्, द्व्यणुक-परिमाणं चेत् कारणं तदा त्र्यणुकस्य प्रत्यक्षमेव न स्यात्, परिमा-णस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वनियमात् = स्वसमान-जातीय तुल्यजातीयं यत् उत्कृष्टपरिमाणं स्वन्यूनाऽधिकपरिमाणं तदेव

---

सर्वत्र, किन्तु एकार्थसमवायसम्बन्धेन वर्तते अर्थात् यस्मिन् घटादौ रूपं समवायेन तत्रैव एकत्वं समवायेनेति तयोरेकार्थसमवाय सम्बन्धः परमत्र नैव रूपे एकत्वा-धिकरणताया नियामकः। अन्यथा स्वसमवायसमवेतत्वं तत्त्वम्।

सामान्यं स्वतोव्यावृत्तो विशेषपदार्थश्चैतेऽपि न कस्यचित्कारणानि । परमाणुपरिमाण-द्व्यणुकपरिमाणाकाशादिनिष्ठपरममहत्परिमाण-परमाणुगतातीन्द्रियपरमाणुत्वरूपसामान्यभिन्नानां कारणत्व साध-र्म्यमिति समस्तप्रघट्टकार्थः ।

एतश्च 'कारणत्वं चान्यत्र पारिमाण्डल्यादिभ्यः' इतिप्रघट्ट-मूलकम् ।

इदमपि योगिप्रत्यक्षे विषयस्य न कारणत्वम् । ज्ञायमान-सामान्यं न प्रत्यासत्तिः । ज्ञायमानं लिङ्गं नानुमितिकरणमि-त्यभिप्रायेणोक्तम् । आत्ममानसप्रत्यक्षे आत्ममहत्त्वस्य कारण-त्वान्महत्परिमाणं कालादेर्बोध्यम् । तस्यापि न कारणत्वमित्या-चार्याणामाशय इत्यन्ये, तन्न, ज्ञानातिरिक्तं प्रत्येवाकारण-ताया आचार्यैरुक्तत्वात् ॥ १५ ॥

ननु—योगिप्रत्यक्षे विषयरूपत्वेन परमाणुपरिमाणमपि कारणं भवति नहि निर्विषयं किमपि ज्ञानम्, तत्कथं पारिमाण्डल्यभिन्नानां कारणत्वं साधर्म्यमुक्तम् इत्याशङ्कायामाह —इदमपीति । पारिमा-ण्डल्यभिन्नानां कारणत्वस्य कथनमपि । नवीनमताभिप्रायेणोक्तम्, अर्थात् ये योगिप्रत्यक्षे विषयस्य कारणभावं न मन्यन्ते तेषां मतेनोक्तम् ।

एतेषामयमाशयः —*'प्रातिभाद्वा सर्वं' यो० ३ । ३३ । इति योगसूत्रोक्तदिशा योगिनः समाधिभावनाप्रकर्षेण अतीतानागतदूर-विप्रकृष्टसकलवस्तूनां साक्षात्कारं प्रभवन्ति, स्वयं तेषां साक्षात्कारो योगजधर्मप्रत्यासत्त्या जायमानोऽतीतादिपदार्थेषु यथा विषयसत्तां नापेक्षते, एवमेव वर्त्तमानविषयेष्वपि परमाणुपरिमाणादिषु विषय-सत्तानिरपेक्ष एव जायते, तस्मात्तादृशे योगिसाक्षात्कारे परमाणु-परिमाणं न विषयविधया कारणम् ।

---

* यथा सूर्योदयस्य पूर्वस्मिन् प्रभा तद्वद्विवेकज्ञानस्य पूर्वरूपं प्रातिभं ज्ञान-मित्यर्थः स्वप्रतिभोत्थमनौपदेशिकं तारं प्रातिभमित्युच्यते अनेन ज्ञानेन करामलक-वत्सर्वं जानाति योगी ।

स्यादेतत्—माभूत् परमाणुपरिमाणस्य योगिप्रत्यक्षे विषयविधया कारणत्वं सामान्यलक्षणाजन्यज्ञाने अनुमितौ च परमाणुपरिमाणस्यापि यत्र कारणत्वं इति पुनरपि पारिमाण्डल्यभिन्नानां मिलितत्वमसङ्गतं अत आह—ज्ञायमानं सामान्यमित्यादि ।

वर्तमानकालिकं यज्ज्ञानं तद्विषयीभूतं सामान्यं ज्ञायमानसामान्यम् इत्युच्यते एवमेव वर्तमानकालीनज्ञानविषयीभूतं लिङ्गं (हेतुः) 'ज्ञायमानलिङ्गं' भवति ।

एवाऽत्र नव्यानां सिद्धान्तः — नहि पृथिव्यादिपरमाणूनां भेदका विशेषपदार्थाः अपितु विशेषस्य ज्ञानं भेदकम् एवमेव ज्ञायमानसामान्यं न प्रत्यासत्तिः ( अलौकिकसन्निकर्षः ) किन्तु सामान्यज्ञानमात्रं सामान्यलक्षणा प्रत्यासत्तिः इत्थं ज्ञायमानं लिङ्गं नानुमितिकारणम् प्रत्युत लिङ्गज्ञानमात्रमनुमितिहेतुः एतच्च सर्वमग्रे मूल एव स्फुटीभविष्यति ।

प्राचीनास्तु—परमाणुपरिमाणमपि विषयविधया योगिप्रत्यक्षे कारणमाचक्षते । तथाहि 'परमाणुः अणुपरिमाणवान्' इत्याकारकज्ञानानन्तरं सर्वे परमाणवोऽणुपरिमाणवन्तः इत्याकारकमलौकिकं परमाणुपरिमाणविषयकं प्रत्यक्षं सामान्यलक्षणाप्रत्यासत्त्या जायते एतादृशालौकिकसम्बन्धरूपेण परमाणुपरिमाणमपि कारणम् ।

किञ्च 'परमाणुर्द्रव्यमणुपरिमाणात्' इत्याकारानुमितौ अणुपरिमाणस्यापि हेतुत्वं स्पष्टं प्रतीतिरित्यतोऽत्रोक्तिः । एतमर्थं मन्वानाः *नव्यानां सिद्धान्तमाश्रित्यैव निरूपणं प्रदर्शितम् इति ध्येयम् ।

आत्ममनसोरिति— ज्ञानवानहम्, इच्छावानहं, सुखवानहं, दुःखवानहम् इत्याकारके आत्मनो मानसप्रत्यक्षे आत्मनिष्ठपरममहत्परिमाणस्य कारणत्वाभावोऽस्ति यतो द्रव्यीयलौकिकप्रत्यक्षं प्रति समवायेन महत्त्वं कारणमिति नियमः तस्मादात्मनिष्ठं परममहत्परिमाणं विहाय आकाशादिनिष्ठं परममहत्परिमाणं कारणतानाश्रयमिति विज्ञेयम् ।

---

इदं निरस्तम्— [illegible] इति [illegible]
[illegible]

तस्यापीति—आत्ममहत्परिमाणस्यापीत्यर्थः । न कारणत्वमिति—तदपि कारणताधर्मशून्यमिति-आचार्याणां-प्रशस्तपादव्याख्यां कुर्वतामुदयनाचार्याणां किरणावलीग्रन्थ इति शेषः आशयो मतमित्यन्ये ब्रुवते । अर्थात् 'आदिग्रहणात्परममहत्त्वं गृह्यते' इति वदताचार्याणां मते आत्मनिष्ठपरममहत्परिमाणमपि कारणताधर्मशून्यमिति केचित् । मङ्गलरावण्डयति तन्नेति । ज्ञानातिरिक्तमिति—ज्ञानम्प्रति तु आत्मवृत्तिपरममहत्परिमाणं कारणं ज्ञानभिन्नम्प्रति न कारणमित्याचार्याणामाशय इति सिद्धान्तानुयायिन इत्यर्थः ।

ननु कारणत्वं किम् ? अत आह—

**अन्यथासिद्धिशून्यस्य नियता पूर्ववर्तिता ।**
**कारणत्वं भवेत्तस्य त्रैविध्यं परिकीर्तितम् ॥ १६ ॥**
**समवायिकारणत्वं ज्ञेयमथाप्यसमवायिहेतुत्वम् ।**
**एवं न्यायनयज्ञैस्तृतीयमुक्तं निमित्तहेतुत्वम् ॥ १७ ॥**

तस्य कारणत्वस्य ॥ १६ । १७ ॥

पञ्चदशस्यां कारिकायां कारणत्वमुदाहृतमित्युक्तम्, तत्र किं कारणत्वमित्यपेक्षायां कारणत्वं लक्षयति—( परममूले ) अन्यथासिद्धिशून्यस्येति । अत्र निष्ठत्वं षष्ठ्या अर्थः, एवमयमभिसन्धिः—अन्यथासिद्धिशून्यनिष्ठा या नियता=अवश्यम्भाविनी पूर्ववर्तिता=कार्याव्यवहितपूर्वक्षणे कार्याधिकरणवृत्तिता सैव कारणत्वम् । पूर्ववर्तितामात्रः पूर्ववर्तिता, सा च कदाचिद्‌रागत रासभादावप्यस्ति इति तत्रातिव्याप्तिवारणाय नियतेति । नियतपूर्ववर्तिता दण्डत्वादावप्यस्ति दण्डत्वादेरपि नियमत घटादिकार्यपूर्ववर्तित्वादिति दण्डत्वे कारणलक्षणप्रसङ्गो माभूद् अत आह अन्यथासिद्धिशून्यस्येति एवञ्च अनन्यथासिद्धनियतपूर्ववृत्तित्वं कारणत्वं, यथा घटम्प्रति

दण्ड कारणम् इति *निर्गलितार्थः । तद्विभजते—तस्येति । तस्य कारणत्वस्य । त्रैविध्यमिति—तिस्रो विधा अस्येति त्रिविधं तस्य भावः त्रैविध्यं त्रिविधत्वमित्यर्थः । ब्राह्मणादित्वात् ष्यञ् । स्पष्टमन्यत्

**यत्समवेतं कार्यं भवति ज्ञेयं तु समवायिजनकं तत् ।**
**तत्रासन्नं जनकं द्वितीयमाभ्यां परं तृतीयं स्यात् १८**

तत्रेति । समवायिकारणे आसन्नं प्रत्यासन्नं कारणं द्वितीयमसमवायिकारणमित्यर्थः ।

यत्समवेतमिति—यस्मिन् समवेतं समवायसम्बन्धेन वर्त्तमानं सत् कार्यं † भवति जायते तत्समवायिजनकं समवायिकारणं ज्ञेयम् । 'समवायसम्बन्धेन कार्यवत्त्वं समवायिकारणत्व'मिति फलितम् । यथा तन्तवः पटस्य, तन्तुषु समवायेनैव पटस्योत्पत्तेः ।

असमवायिकारणं लक्षयति पद्यमूले तत्रासन्नमिति । तत्र समवायिकारणे आसन्नं सन्निहितं कारणमसमवायिकारणं द्वितीयं कारणमित्यर्थः । तृतीयं कारणं लक्षयति आभ्यामिति ।

अयमर्थः—द्विविधमसमवायिकारणम् । कार्येण सहैकस्मिन्नर्थे समवेतं समवायसम्बन्धेन वर्त्तमानं सत् यत्कारणं तदेकमसमवायिकारणम्, यथा तन्तुसंयोगः पटस्य । अत्र कार्यं पटः, तेन सह एकस्मिन् तन्तौ समवेतः समवायसम्बन्धेन वर्त्तमानः सन् पटात्मककार्यजनकः तन्तुसंयोगोऽतएव कारणमसमवायिकारणम् । [illegible] मिति नियम [illegible] ।

---

* [illegible]—[illegible] [illegible] ।

† अनेकार्था धातव इति स्मर्तव्यम् ।

कारणेन सहैकस्मिन्नर्थे समवेतं सद् यत् कारणं तदसमवायिकारणम्, यथा–तन्तुरूपं पटगतरूपस्य । अत्र पटगतरूपं प्रति कारणं ( समवायिकारणं ) पटः तेन सह एकस्मिन्नर्थे तन्तुरूपेऽर्थे समवेतं समवायसम्बन्धेन वर्त्तमानं सत् तन्तुरूपं, गुणगुणिनोः समवायात् तादृशं यत् तन्तुरूपं तत् पटरूपस्य प्रति * कारणं विद्यते तदसमवायिकारणमेव ।

एवञ्च 'तथाविध'मिति पदेन समवायिकारणादावतिव्याप्तिर्वारिता । पटसमवायिकारणे तन्तौ समवेतं यत्तन्तुरूपं तत्रातिव्याप्तिवारणाय जनकत्वमित्युक्तम्, तन्तुरूपं हि दण्डत्वादिवदन्यथासिद्धमिति न कारणमिति भावः ।

अत्र यद्यपि तुरीतन्तुसंयोगानां पटासमवायिकारणत्वं स्यात् । एवं वेगादीनामभिघाताद्यसमवायिकारणत्वं स्यात् । एवं ज्ञानादिकमपीच्छाद्यसमवायिकारणं स्यात् । तथापि पटासमवायिकारणलक्षणे तुरीतन्तुसंयोगभिन्नत्वं देयम् । तुरीतन्तुसंयोगस्तु तुरीपटसंयोगं प्रत्यसमवायिकारणं भवत्येव । एवं वेगादिकमपि वेगस्पन्दाद्यसमवायिकारणं भवत्येवेति, तत्तत्कार्यासमवायिकारणलक्षणे तत्तद्भिन्नत्वं न देयम् । आत्मविशेषगुणानां तु कुत्राप्यसमवायिकारणत्वं नास्ति तेन तद्भिन्नत्वं सामान्यलक्षणे देयमेव ।

मुक्तावल्याम्–अत्र यद्यपीत्यनेन आक्षिपति । तुरीतन्त्विति–अयमर्थः —यस्य संयोगः स संयोगस्य प्रतियोगी, यस्मिन् संयोगः स संयोगस्यानुयोगीति नियमः । अनेन तुरीतन्तुसंयोगोऽपि अनुयोगितासम्बन्धेन तन्तुसमवेत पटरूपकार्यजनकश्चेति कथितासमवा-

* पटरूपोत्पत्तेः प्राक् तदधिकरणे तन्तौ रूपस्य विद्यमानत्वात् कारणत्वम् ।

यिकारणलक्षणलक्ष्य एव, तस्मादयं ( तुरीतन्तुसंयोग ) अपि तन्तुद्वयसंयोगवत् पटकार्यं प्रत्यसमवायिकारणं मन्तव्यः ।

एवं वेगादीनामिति—वेगः संस्कारभेदः पृथिव्यादिचतुष्टयमनोवृत्तिः द्वितीयपतनाद्यसमवायिकारणम्, आदिना स्पर्शग्रहः । अभिघातादीति—यः संयोगः शब्दस्य निमित्तकारणम्, यज्जनितं कर्म संयोगिनोः परस्परविभागहेतुश्च भवति स संयोगोऽभिघात इत्युच्यते । आदिना नोदनपरिग्रहः । येन संयोगेन जनितं कर्म संयोगिनोः परस्परं विभागहेतुर्न भवति यश्च न शब्दस्य निमित्तकारणं स संयोगविशेषो नोदनमित्युच्यते । एवं वेगोऽभिघाताख्यसंयोगस्यासमवायिकारणं स्यात् स्पर्शश्च नोदनाख्यसंयोगस्यासमवायिकारणं स्यात् ।

एवं ज्ञानादिकमपीति—ज्ञानमात्मगुणः आदिना इच्छापरिग्रहः । तथाचायमर्थः सम्पद्यते ज्ञानमिच्छायाः, इच्छा च प्रवृत्तेः असमवायिकारणं स्यात् । तल्लक्षणस्य तत्र तत्र घटितत्वात् ।

समाधत्ते तथापीति । तन्तुसमवेतत्वे सति तुरीतन्तुसंयोगभिन्नत्वे सति पटकारणं पटासमवायिकारणम्, एवं कपालसमवेतत्वे सति चक्रकपालसंयोगभिन्नत्वे सति यद् घटकारणं तद् घटासमवायिकारणम्, एवं काष्ठखण्डसमवेतत्वे सति यन्त्रकाष्ठखण्डसंयोगभिन्नत्वे सति यत् काष्ठपुत्तलिकाकारणं तत् काष्ठपुत्तलिकाया असमवायिकारणम् इति विशिष्यैवासमवायिकारणलक्षणं कर्तव्यमित्यर्थः ।

इदमुक्तं भवति—प्रत्येककार्यस्यासमवायिकारणलक्षणे निमित्तकारणासमवायिकारणयोर्यः परस्परं संयोगः तद्भिन्नत्वनिवेशः कर्तव्यः ।

अत्र केचिच्छङ्कन्ते—यदि तुरीतन्तुसंयोगः पटासमवायिकारणं स्यात्को दोष इति ?

अपरे समादधते—'असमवायिकारणनाशं कार्यनाशः' इति सिद्धान्त, तद्यदि तुरीतन्तुसंयोग पटस्य असमवायिकारणं स्वीक्रियेत तदा तुरीतन्तुसंयोगनाशे सति पटेन नष्टव्ये, न त्वेवं दृश्यते, तस्मात्प्रदर्शितरीत्या पटासमवायिकारणलक्षणे 'तद्भिन्नत्व' निवेश कर्तव्य एव ।

सम्प्रति तद्भिन्नत्वनिवेशं व्यर्थं मन्यमान आह **तुरीतन्तुसंयोगस्त्विति** । वेगस्पन्दादीति—वेगजन्यक्रियादीत्यर्थः । शिष्टं स्पष्टम् ।

**आत्मविशेषगुणानामिति**—आत्मनो विशेषगुणाः ज्ञानेच्छादयः, तेषामपीति—कमपि जन्यभावस्वरूपेत्यर्थः । **सामान्यलक्षणे** असमवायिकारणसामान्यलक्षणे ।

इदमत्राकूतम्—आत्मना आत्मकविशेषगुणान्प्रति आत्ममनःसंयोगस्य असमवायिकारणता अवश्यमेषितव्या, एवं ज्ञानं प्रति क्लृप्तकारणभावः आत्ममनःसंयोग एवेच्छादिविशेषगुणान्प्रति असमवायिकारणमिति निर्विवादे सति ज्ञानेच्छाद्यात्मविशेषगुणानां परस्परमसमवायिकारणमास्वीकारो निष्फल । इत्थञ्च 'आत्मविशेषगुणभिन्नत्वे सति समवायिकारणप्रत्यासन्नं कारणमसमवायिकारणम्' इत्यसमवायिकारणस्य सामान्यलक्षणं फलितम् । आत्मविशेषगुणभिन्नत्वनिवेशेन ज्ञानादीनामिच्छादीन् प्रति, परामर्शस्य चानुमितिं प्रति नाऽसमवायिकारणत्वमिति बोध्यम् ।

**अत्र** समवायिकारणे प्रत्यासन्नं द्विविधं कार्यैकार्थप्रत्यासत्त्या कारणैकार्थप्रत्यासत्त्या च । **आद्यं यथा** । घटादिकं प्रति कपालसंयोगादिकमसमवायिकारणम् । तत्र कार्येण घटेन सह कारणस्य कपालसंयोगस्यैकस्मिन्कपाले प्रत्यासत्तिरस्ति ।

अत्रेति—अस्मिन्प्रकरणे इत्यर्थः । समवायिकारणे समवायिकारणरूपे अधिकरणे । प्रत्यासन्नं कार्येण सहासमवायिकारणस्य

सामानाधिकरण्यम्। कार्यैकार्थप्रत्यासत्त्या कार्येण सहैकाधिकरण्यसम्बन्धेन। कारणैकार्थप्रत्यासत्त्या कारणेन सहैकाधिकरण्यसम्बन्धेन। क्रमश उदाहरति—आद्यं यथेति। कपालसंयोगादिकमिति—कपालद्वयसंयोगादिरित्यर्थः। एकस्मिन् कपाल इति—कपालात्मके एकस्मिन्नधिकरणे एकार्थसमवेतत्वं सम्बन्धः कपालसंयोगस्येत्यतोऽसौ प्रथममसमवायिकारणस्योदाहरणम्, एवमेव तन्तुसंयोगादावपि योजनीयम्।

**द्वितीयं यथा।** घटरूपं प्रति कपालरूपमसमवायिकारणम्। तत्र स्वगतरूपादिकं प्रति समवायिकारणं घटः तेन सह कपालरूपस्यैकस्मिन्कपाले प्रत्यासत्तिरस्ति।

द्वितीयमुदाहरति—द्वितीयं यथेति। तत्रेति—घटरूपम्प्रति कारणीभूतेन घटेन सह एकस्मिन् कपालात्मकेऽधिकरणे रूपस्य 'एकार्थसमवेतत्व सम्बन्ध' इति द्वितीयासमवायिकारणस्योदाहरणम् एवमेव पटरूपं प्रति तन्तुरूपादावप्युदाहार्यम्।

**तथा च** क्वचित्समवायसम्बन्धेन क्वचित्स्वसमवायिसमवायसंबन्धेनेति फलितोऽर्थः। इत्थं च कार्यैकार्थकारणैकार्थान्यतरप्रत्यासत्त्या समवायिकारणे प्रत्यासन्नं कारणं ज्ञानादिभिन्नमसमवायिकारणमिति सामान्यलक्षणं पर्यवसन्नम्। **आभ्यां** समवायिकारणासमवायिकारणाभ्यां परं भिन्नं कारणं तृतीयं निमित्तकारणमित्यर्थः। १८।

असमवायिकारणताया नियामकं सम्बन्धद्वयं फलितरीत्या दर्शयति—तथा चेति। अयमर्थः—घटप्रति य. कपालसंयोगोऽसमवायिकारणं तन्निष्ठाया. कारणताया नियामकः सम्बन्ध सम-

वायः संयोगस्य गुणत्वात् कपालस्य च द्रव्यत्वात् गुणगुणिनोश्च समवायात्, घटरूपं प्रति यत् कपालरूपमसमवायिकारणं तन्निष्ठायाः कारणताया नियामकः सम्बन्धः स्वसमवायिसमवायसम्बन्धः। अत्र स्व पदेन कपालरूपस्य ग्रहणम्, तस्य समवायी कपाल एव, तस्मिन् कपाले समवायेन घटस्यावस्थितिः अर्थात् रूपकार्यस्य समवायिकारणं घटः समवेतो वर्तते, एवं स्वसमवायिसमवेतत्वसम्बन्धेन कपालरूपं घटे तिष्ठत् घटरूपम्प्रति तद् असमवायिकारणं भवत्येव।

असमवायिकारणस्य द्वयमेव निष्कृष्टं लक्षणं वक्तुमाह—इत्थञ्चेति। निमित्तकारणलक्षणं दर्शयति—आभ्यां परमिति। यथा घटम्प्रति दण्डादिकं, पटम्प्रति तुरीवेमादिकम्। सूत्रयोष्टिता नालिका तुरी, वायदण्डो वेमा यत्र सूत्रं निधाय उभयतः सूत्रसन्तानोपरि व्यापार्यते।

इदानीमन्यथासिद्धत्वमत्र कियतां पदार्थानामत आह—

कारणलक्षणे अन्यथासिद्धिशून्यत्वमुक्तं तत्र भवति जिज्ञासा किमन्यथासिद्धत्वं कानि चान्यथासिद्धानीति तच्छान्त्यै इदानीमित्यादिग्रन्थमुपन्यस्यति।

येन सह पूर्वभावः।

यत्कार्यं प्रति कारणस्य पूर्ववृत्तिता येन रूपेण गृह्यते तत्कार्यं प्रति तद्रूपमन्यथासिद्धमित्यर्थः। यथा घटं प्रति दण्डत्वमिति।

यत्कार्यमिति यद्धर्मावच्छिन्नं कार्यं प्रति यस्य=कारणत्वेनाभिमतस्य दण्डादेर्वा पूर्ववृत्तिता—पूर्वभावः येन रूपेण-दण्डत्वादिना सहैव गृह्यते=ज्ञायते तत्कार्यं प्रति घटत्वादिधर्मावच्छिन्नघटादिकार्यं प्रति तद्रूपं=कारणतावच्छेदकं दण्डत्वादि अन्यथासि-

द्धमित्यर्थः। कारणतावच्छेदकधर्मत्वं प्रथममन्यथासिद्धमिति फलितम्। यथा घटं प्रति दण्डः कारणं, कारणता दण्डनिष्ठा, तदवच्छेदको धर्मो दण्डत्वमिति तदन्यथासिद्धम्।

कारणमादाय वा यस्य।

द्वितीयमन्यथासिद्धमाह। **कारणमिति।** यस्य स्वातन्त्र्येणान्वयव्यतिरेकौ न स्तः किं तु कारणमादायैवान्वयव्यतिरेकौ गृह्येते तदन्यथासिद्धम्। यथा दण्डरूपम्॥

यस्येति—यस्य स्वात्मना कार्यं प्रति पूर्वभावो न भवेत् किन्तु स्वकारणे गृहीत्वैव पूर्वभावः स्यात् सोऽप्यन्यथासिद्धः, कारणमनेन विशेषगुणरूपं द्वितीयमन्यथासिद्धमित्यर्थः, मन्त्रार्थस्तु—यस्य=स्वतन्त्रान्वयव्यतिरेकशून्यस्य स्वातन्त्र्येण=स्वकारणनिरपेक्षतया अन्वयव्यतिरेकौ=स्वाधिकरणे कार्यसत्त्वमन्वयः, स्वाभावाधिकरणे कार्यासत्त्वं व्यतिरेकः तौ न स्तः=न स्यातां किन्तु कारणं=स्वकारणम् आदाय=गृहीत्वैव तौ ज्ञायेते तद् द्वितीयमन्यथासिद्धम्। यथा दण्डरूपम्, दण्डरूपस्य घटं प्रति न स्वतन्त्रतया पूर्वभावः किन्तु दण्डस्य पूर्वभावं गृहीत्वैव दण्डरूपस्यापि घटं प्रति पूर्वभावो गृह्यतेऽतो दण्डरूपं घटोत्पत्तौ पूर्ववृत्ति सदपि अन्यथासिद्धमेव।

अन्यं प्रति पूर्वभावे ज्ञाते यत्पूर्वभावविज्ञानम् १६

तृतीयमाह। **अन्यं प्रतीति।** अन्यं प्रति पूर्ववर्तित्वं गृहीत्वैव यस्य यत्कार्यं प्रति पूर्ववर्तित्वं गृह्यते तस्य तत्कार्यं प्रत्यन्यथासिद्धत्वम्। यथा घटादिकं प्रत्याकाशस्य। तस्य हि घटादिकं प्रति कारणत्वमाकाशत्वेनैव स्यात्। आकाशत्वं हि शब्दसमवायिकारणत्वम्। एवं च तस्य शब्दं प्रति जनकत्वं गृहीत्वैव घटादिकं प्रति जनकत्वं ग्राह्यमतस्तदन्यथासिद्धम्।

चतुर्थमन्यथासिद्धमाह । **जनकं प्रतीति** । यत्कार्यजनकं प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्यं प्रति पूर्ववृत्तित्वं गृह्यते तस्य तत्कार्यं प्रत्यन्यथासिद्धत्वम् । यथा कुलालपितुर्घटं प्रति । तस्य हि कुलालपितृत्वेन घटं प्रति जनकत्वे एवान्यथासिद्धिः । कुलालत्वेन जनकत्वे त्विष्टापत्तिः, कुलालपात्रस्य घटं प्रति जनकत्वात् ॥

चतुर्थमन्यथासिद्धं दर्शयति—जनकं प्रतीति । यस्य यत्कार्यं जनकं प्रति पूर्ववृत्तिता=पूर्वभावः अवच्छेदाय=अगृहीत्वा पूर्वभावो न गृह्यते अपितु गृहीत्वैव पूर्वभावो गृह्यते तस्य तत्कार्यंप्रत्यन्यथासिद्धत्वम् । एककार्यंप्रति गृहीतपूर्ववृत्तित्वे. कार्यान्तरं प्रत्यपि पूर्ववर्तितया गृह्यते तच्चतुर्थमन्यथासिद्धमिति प्रघट्टकार्थं, कालिकसम्बन्धावच्छिन्नकारणतायं चतुर्थं तदिति तु नारवर्यम । यथा—कुलालपितु घटकार्यजनकं कुलालं प्रति पूर्वभावमगृहीत्वा घटं प्रति पूर्वभावो न गृह्यते अतः घटंप्रति कुलालपिता कुलालपितृत्वेन रूपेण अन्यथासिद्धश्चतुर्थ. । कुलालत्वेनेत्यादिग्रन्थस्तु निगदेनैव व्याख्यातः ।

अतिरिक्तमथापि यद्भवेन्नियतावश्यकपूर्वभाविनः २०

पञ्चममन्यथासिद्धमाह । **अतिरिक्तमिति** अवश्यक्लृप्तनियतपूर्ववर्तिन एव कार्यसम्भवे तद्भिन्नमन्यथासिद्धमित्यर्थः । अत एव प्रत्यक्षे महत्त्वं कारणम् अनेकद्रव्यवत्त्वमन्यथासिद्धम् । तत्र हि महत्त्वमवश्यं क्लृप्तं तेनानेकद्रव्यवत्त्वमन्यथासिद्धम् । ननु ; वैपरीत्ये किं विनिगमकमिति वाच्यम् , महत्त्वत्वजातेः कारणतावच्छेदकत्वे लाघवात् ॥ १९ ॥ २० ॥

पञ्चममन्यथासिद्धं दर्शयति—अतिरिक्तमितीति। अत्र नियतः=व्यापकः, आवश्यकः=यदन्तरेण कार्यसिद्धिर्नैव जायते नियतश्चासा-वावश्यक पूर्वभावी चेति कर्मधारय तस्य नियतावश्यकपूर्वभा-विनः, अस्यैव कारिकास्थपदस्यार्थमाह—अवश्यक्लृप्तनियतपूर्व-वर्त्तिन इति। तदन्य तु अतिरिक्तं भिन्नं सर्वमपि अन्यथासिद्धमेव। नियतावश्यकपूर्वभाविभिन्न यत्स पञ्चमोऽन्यथासिद्ध इति, इदमेवा-न्यथासिद्धस्य सामान्यं लक्षणम्, अनेनैव गतार्थत्वे इतरेषां प्रपञ्चः शिष्यबुद्धिवैशद्यार्थः। यथा रासभः, यद्व्यक्तिं ( घट ) प्रति रासभस्य पूर्वभावोऽस्ति तत्रापि सिद्धकारणभावैर्दण्डादिभिरेव तद्घटव्यक्ते-रपि सम्भवोऽतो दैवादागतो रासभो घटोत्पत्तेः पूर्वक्षणे विद्यमानो-ऽपि अन्यथासिद्ध एव। यावद्घटव्यक्तिं प्रति दण्डादीनां कारण-तायां व्यापकत्वादितिभावः।

अत्र अन्यथासिद्धसामान्यलक्षणे यदि 'नियत' इतिपदं न दीयते तदा रासभे, आवश्यकेति नोच्येत तदा आकाशे, पूर्वभावीति न निवेश्येत तदा कार्य्ये ( तद्घटादिव्यक्तौ ) अतिव्याप्ति स्याद् अतस्तत्तद्वारणाय तत्तत्पदनिवेशः।

एवञ्च 'अन्यथासिद्धिशून्यत्वे सति कार्यनियतपूर्ववृत्तित्वं कारणत्व' मिति कारणसामान्यलक्षणं फलितम्। अत्र कारणसा-मान्यलक्षणे अनियतरासभादिवारणाय नियतपदम्। कार्यवारणाय पूर्वेतिपदम्।

पञ्चमान्यथासिद्धेनैव सर्वेषां गतार्थतां स्पष्टयितुमाह—अत-एवेति। अनेकद्रव्यत्वं=अनेकद्रव्यसमवेतत्वं अणुपरिमाणभिन्न-व्यभिन्नद्रव्यत्वमिति यावत्, प्रत्यक्षे महत्त्वमवश्यं क्लृप्तम्, तेन विना प्रत्यक्षानुपपत्तेः।

शङ्कागर्भितं समाधानमन्यमाह—नचेति अत्र अनेकद्रव्यत्व-

मेव प्रत्यक्षं कारणमास्तां महत्त्वमन्यथासिद्धं स्यादुत्कर्षापकर्षमानि काया गुरुत्वाभावादिति पूर्वपक्षः ।

अनेकद्रव्यवत्त्वं चेत् प्रत्यक्षे कारणं तदाऽनेकद्रव्यवत्त्वस्य कारणतावच्छेदकं भविष्यति महत्त्वस्य कारणत्वे तु महत्त्वत्वं कारणतावच्छेदकं लघुभूतं तेन कारणतावच्छेदकस्य शरीरकृतं लाघवमेव महत्त्वस्य कारणत्वे अनेकद्रव्यवत्त्वस्य चान्यथासिद्धत्वे गमकं ( विनिगमकं, एकतरपक्षसाधकं ) विनिगमनमत्रोक्तमन्यथा ।

तथाऽस्तु—'लघुनियतपूर्ववर्तिन एव कार्यसम्भवे तद्भिन्न-मन्यथासिद्धमि' त्युक्तलक्षणेन एकस्यैवान्यथासिद्धत्वसाधकत्वे इतरे प्रकाराः शिष्यबुद्धिवैशद्याय सङ्गृहीताः तत्र प्रकारभेदः प्राचा-मेवेष्ट इति मिश्रम् ।

इदन्तु बोध्यम्—त्रिविधं लाघवं भवति शरीरकृतम्, उपस्थिति-कृतम्, सम्बन्धकृतञ्चेति । तत्र प्रत्यक्षंप्रत्यनेकद्रव्यवत्त्वापेक्षया मह-त्त्वस्य कारणतायां शरीरकृतं लाघवम् । गन्धंप्रति रूपप्रागभावा-पेक्षया गन्धप्रागभावस्य कारणत्वे उपस्थितिकृतं लाघवम्, गन्धस्य प्रतियोगिनं रूपापेक्षया शीघ्रमुपस्थितेः । घटंप्रति दण्डत्वदण्डरूपा-द्यपेक्षया दण्डादेः कारणत्वे सम्बन्धकृतं लाघवम्, दण्डस्य संयोग-सम्बन्धेन प्रथममुपस्थितेः दण्डत्वादीनान्तु स्वाश्रयसमवायिदण्डसंयोग-परम्परा गुरुभूतेति ।

एते पञ्चान्यथासिद्धा दण्डत्वादिकमादिमम्
घटादौ दण्डरूपादि द्वितीयमपि दर्शितम् २१
तृतीयं तु भवेद्व्योम कुलालजनकोऽपरः
पञ्चमो रासभादिः स्यादेतेष्वावश्यकस्त्वसौ २२

रासभादिरिति । यद्यपि यत्किञ्चिद्घटव्यक्तिं प्रति रासभस्य नियतपूर्ववर्तित्वमस्ति, तथापि घटजातीयं प्रति सिद्ध-

कारणभावैर्दण्डादिभिरेव तद्व्यक्तेरपि संभवे रासभोऽन्यथासिद्ध इति भावः । एतेष्विति । एतेषु पञ्चस्वन्यथासिद्धेषु मध्ये पञ्चमोऽन्यथासिद्ध आवश्यकः, तेनैव परेषां चरितार्थत्वात् । तथाहि । दण्डादिभिरवश्यक्लृप्तनियतपूर्ववर्तिभिरेव कार्यसंभवे दण्डत्वादिकमन्यथासिद्धम् । नच वैपरीत्ये किं विनिगमकमिति वाच्यम् , दण्डत्वस्य कारणत्वे दण्डघटितपरम्परायाः संबन्धत्वकल्पने गौरवात् । एवं चान्येषामप्यनेनैव चरितार्थत्वं संभवतीति ॥ २१ ॥ २२ ॥

अन्यथासिद्धानां क्रमेण उदाहरणानि परममूल एव इति । रासभादिरिति—रासभो गर्दभः । आदिना शकटादिपरिग्रहः, यद्यपीत्यादिः सर्वोऽस्य विंशतिकारिकाया मुक्तावलीग्रन्थेनैव प्रकाशितार्थो वेदितव्य इति कृतं पिष्टपेषणया ।

कारणान्यथासङ्गे इदमपरमप्यनुसन्धेयम्—सामान्यतः कारणं द्विविधं साधारणमसाधारणं चेति । कार्यमात्रम्प्रति यत्कारणं तत्साधारणं यथा दिक्कालादृष्टादि । कार्यविशेषम्प्रति यत्कारणं तदसाधारणं यथा पटम्प्रति तन्त्वादि, यथा वा घटम्प्रति कपालादि । अन्योऽपि विशेषः यदेका कारणतासमुदायविश्रान्ता यथा घटम्प्रति दण्डादिनिष्ठा कारणता । इयमेव 'दण्डचक्रादिन्यायेन कारणता' इत्युच्यते दण्डादिष्वन्यतमाभावे घटानुत्पत्ते, एका च प्रत्येकविश्रान्ता यथा वह्निम्प्रति, तृणारणिमणिसंयोगनिष्ठा कारणता, इयमेव तृणारणिमणिन्यायेन कारणता अर्थात् तृणादिष्वन्यतमेनापि वह्निरुत्पद्यते ।

## समवायिकारणत्वं द्रव्यस्यैवेति विज्ञेयम्

सावसरप्रसङ्गात्पुनस्तदेवाह—परममूले समवायिकारणत्वमिति । मुक्तावल्यां 'समवायीति स्पष्ट' मित्युक्तम् । एवशब्दो-

ऽवधारणार्थक तेन समवायिकारणं द्रव्यमात्रस्यैव साधर्म्यमित्युक्तं भवति ।

## गुणकर्ममात्रवृत्ति ज्ञेयमथाप्यसमवायिहेतुत्वम् २३

गुणकर्मेति । असमवायिकारणत्वं गुणकर्मभिन्नानां वैधर्म्यं न तु गुणकर्मणोः साधर्म्यमित्यत्र तात्पर्यम् । अथवा असमवायिकारणवृत्तिसत्ताभिन्नजातिमत्त्वं तदर्थः । तेन ज्ञानादीनामसमवायिकारणत्वविरहेऽपि न क्षतिः ॥ २३ ॥

मूले असमवायिकारणं गुणकर्मणोः साधर्म्यमित्युक्तं, परं तन्न युक्तम् आत्मविशेषगुणस्य न कस्यापि असमवायिकारणता तस्मात् ज्ञानादिविशेषगुणेष्वव्याप्तिः स्यात् ( इति समवायिकारणलक्षणप्रसङ्गे प्रागुक्तम् ) अतो मूलस्यार्थं वैधर्म्यपरतया योजयति— असमवायिकारणत्वमिति ।

साधर्म्यमित्यत्रापि यथा नाव्याप्तिदोषः तथा 'जातिघटित' साधर्म्यमाह-अथवेति । अयमर्थः -असमवायिकारणे गुणे कर्मणि वा वृत्तिर्यस्याः सा सत्ताभिन्ना जातिः सत्ताया व्याप्या अपराजातिः गुणत्वकर्मत्वरूपा तादृशजातिमत्त्वं विवक्षितं गुणकर्मणोः साधर्म्यम् । गुणत्वस्य जातिस्तु ( असमवायिकारणताशून्येष्वपि ) ज्ञानादिषु गुणेषु वर्तते इति नाव्याप्तिदोषगन्धोऽपि इत्यभिप्रायेण व्याचष्टे— तेनेत्यादि ।

असमवायिकारणवृत्तिसत्ताभिन्नजातिमत्त्वम्, अस्य पदकृत्यमित्थं ज्ञेयम्—यदि 'सत्ताभिन्नजातिमत्त्व' मित्येवोच्येत तदा द्रव्येऽतिव्याप्तिः द्रव्यमपि सत्ताभिन्नद्रव्यत्वजातिमत् तत्रातिव्याप्ति वारणाय 'असमवायिकारणवृत्ती' त्युक्तम् द्रव्यत्व जातिर्नासमवायिकारणवृत्तिः किन्तु समवायिकारणवृत्ति । एवं तत्रैवातिव्याप्तिनिवृत्तये 'सत्ताभिन्ने' त्युक्तम् । द्रव्यगुणान्यतरत्वमादाय तत्रैवातिव्याप्ति परास्ताय 'जाती' त्युक्तम् ।

## अन्यत्र नित्यद्रव्येभ्य आश्रितत्वमिहोच्यते

नित्यद्रव्याणि परमाण्वाकाशादीनि विहायाश्रितत्वं साधर्म्यमित्यर्थः । आश्रितत्वं तु समवायादिसंबन्धेन वृत्तिमत्त्वम् । विशेषणतया नित्यानामपि कालादौ वृत्तेः ।

परममूले इहेति—इह सप्तपदार्थमध्ये । नित्यद्रव्येभ्य इति-पृथिव्यप्तेजोवायूनां परमाणव आकाशादि पञ्चकञ्चेति नव नित्यद्रव्याणि । तेभ्योऽन्यत्र तानि विहाय इत्यर्थः । आश्रितत्वमिति—अनित्यद्रव्याणां गुणादीनाञ्च आश्रितत्वं साधर्म्यम् । उक्तञ्च प्रशस्ते—'द्रव्याश्रितत्व चान्यत्र नित्यद्रव्येभ्य इति ।

ननु—कालिकसम्बन्धेन नित्यद्रव्याण्यपि वृत्तिमन्ति तत्कथं तानि विहायेत्युक्तमितीमां शङ्कां परास्यन्नेव आह—आश्रितत्वमित्यादि । सर्वाधारतानियामककालिकविशेषणतादिसम्बन्धातिरिक्तसम्बन्धेन वृत्तिमत्त्वं नित्यद्रव्येतरेषां साधर्म्यमित्यर्थः ।

अयमाशयः—कालो देशश्च ( दिक्च ) एतौ सर्वेषां विशेषणतासम्बन्धेनाधारभूतौ तद्द्वारकः सम्बन्धः सर्वस्य सर्वत्र वर्तते, कालद्वारको यः सम्बन्धः स 'स्वाधिकरणकालवृत्तित्व'मिति दिग्द्वारको यः सम्बन्धः स 'स्वाधिकरणदेशवृत्तित्व' मिति च यथाक्रममुच्यते । तेन नित्यानि द्रव्याणि यद्यपि उक्तोभयसम्बन्धेन वृत्तिमन्ति प्रतीयन्ते परं वस्तुतस्तथा न सन्ति, यतः समवायः संयोगश्चेति द्वावेव सम्बन्धौ मुख्यतया वृत्तिनियामकौ तेनात्र 'आश्रितत्व' पदेन समवायसंयोगान्यतरसम्बन्धेन वृत्तिमत्त्वविवक्षायां न कालिकदैशिकसम्बन्धेन वृत्तिमत्सु नित्येष्वतिव्याप्तिः इति सर्वं हृदि कृत्वा आह—'आश्रितत्व' मित्यादिना 'वृत्ते' रित्यन्तम् ।

---

आश्रयत्वाश्रयान्त ।

उक्तं कारिकायाम् नित्यपिको—परमाण्वो समवायि पावन ।

इदानीं द्रव्यमात्रस्य विशिष्य साधर्म्यं वक्तुमारभते—

**क्षित्यादीनां नवानां तु द्रव्यत्वगुणयोगिता २४**

क्षित्यादीनामिति। तु पदं द्रव्यभिन्नसाधर्म्यप्रकरणभेदकम्। क्षित्यादीनां सर्वेषां द्रव्यत्वं गुणवत्त्वञ्च साधर्म्यमित्यर्थः।

**क्षितिर्जलं तथा तेजः पवनो मन एव च**
**परापरत्वमूर्तत्वक्रियावेगाश्रया अमी २५**

पृथिव्यप्तेजोवायुमनसां परत्वापरत्ववत्त्वं मूर्तत्वं क्रियावत्त्वं वेगवत्त्वं च साधर्म्यम्। नच यत्र घटादौ परत्वमपरत्वं वा नोत्पन्नं तत्राव्याप्तिरिति वाच्यं, परत्वादिसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्। मूर्तत्वमपकृष्टपरिमाणवत्त्वम्, तच्च तेषामेव, गगनादिपरिमाणस्य कुतोऽप्यपकृष्टत्वाभावात्। पूर्ववत् कर्मवत्त्वम्। कर्मसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं, वेगवत्त्वं वेगवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं च बोध्यम् ॥ २४ ॥ २५ ॥

निरुक्तस्य साधर्म्यस्य अव्याप्तिमाशङ्क्य निरस्यति—'नच' इत्यारभ्य 'विवक्षितत्वात्' इत्यन्तेन ग्रन्थेन। अयमर्थः—द्विविधे परत्वापरत्वे दिक्कृते कालकृते चेति गुणप्रस्तावे स्फुटीभविष्यति। तत्र दिक्कृतयोस्तयोः इदमस्मात्सन्निकृष्टम् इत्यपेक्षाबुद्धिर्हेतुः। अयमस्मात् कनिष्ठः (अल्पतरकालसम्बद्धः) अयमस्माज्ज्येष्ठः (बहुतरकालसम्बद्धः) इत्यपेक्षाबुद्धिः कालकृतयोस्तयोर्हेतुः परं यत्र घटादिपदार्थे इयं बुद्धिर्नो जाता (यदि च बुद्धिः घटादिपदार्थं न विषयीकरोति) तदा तत्र परत्वापरत्वयोरभावादव्याप्तिरत्र साधर्म्यलक्षण

स्येतिशङ्काकर्त्तुरयम् । परत्वादीति—परत्वादिसमानाधिकरणा- यत्र परत्वापरत्वे यदाकदाचिदुत्पन्ने तस्मिन्नेवाधिकरणे वर्त्तमाना या द्रव्यत्वस्य साक्षाद्व्याप्या जातिः पृथिवीत्वं तेजस्त्वमित्यादि, तद्वत्त्वं विवक्षितं 'परत्वापरत्ववत्त्व'पदेन इति नाव्याप्तिर्घटादौ, यत्र तादृशापेक्षाबुद्ध्या परिमयोक्रियमाणेष्वपि घटादौ पृथिवीत्वादिजातेर्वर्त्तत एव ।

आत्मन्यतिव्याप्तिवारणाय समानाधिकरणान्तम् । तत्रैव सत्तामादाय अतिव्याप्तिवारणाय द्रव्यत्वव्याप्येति । द्रव्यत्वव्याप्यत्वं नाम द्रव्यत्वापेक्षया न्यूनदेशवृत्तित्व (अपरजातित्व)मित्यर्थः ।

मूर्त्तत्वं निर्वक्ति—मूर्त्तत्वमिति ।

अपकृष्टेति—परिच्छिन्नपरिमाणवत्त्वमित्यर्थः तेन परमाण्वादौ नाव्याप्तिः । नव्यास्तु—क्रियाजनकतावच्छेदको जातिविशेषो मूर्त्तत्वमित्याहुः । इयत्तापरिच्छिन्नपरिमाणयोगो मूर्त्तत्वमिति तु प्राञ्चः । गगनादिषु मूर्त्तत्वव्यवहारं वारयितुमवधारयति—तेषामेवेति । यत्र घटादौ क्रिया नोत्पन्ना कन्दुकादौ वा वेगो नोत्पन्नस्तत्राव्याप्तिवारणाय पूर्वोक्तं जातिघटितसाधर्म्यलक्षणप्रकारमतिदिशति—पूर्ववदिति । विवरणप्रकारः पूर्ववदूहनीयः, ग्रन्थगौरवभयान्न प्रतानितः ।

## कालखात्मदिशां सर्वगतत्वं परमं महत्

कालाकाशात्मदिशां सर्वगतत्वं सर्वमूर्तसंयोगित्वं परममहत्त्वं च, परममहत्त्वं जातिविशेषः, अपकर्षानाश्रयपरिमाणत्वं वा ।

कालेति—कालादीनां सर्वगतत्वं परममहत्त्वञ्च साधर्म्यम् । स्पष्टमन्यत् ।

क्षित्यादीनि पञ्च भूतानि-

क्षित्यादीति । पृथिव्यप्तेजोवाय्वाकाशानां भूतत्वम् । तच्च बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम् । अत्र ग्राह्यत्वं लौकिकप्रत्यक्षस्वरूपयोग्यत्वं बोध्यम् । तेन 'ज्ञातो घट' इत्यादिप्रत्यक्षे ज्ञानस्याप्युपनीतभानविषयत्वात्तद्वति आत्मनि नातिव्याप्तिः । नवा प्रत्यक्षाविषयरूपादिमति परमाण्वादावव्याप्तिः, तस्यापि स्वरूपयोग्यत्वात् । महत्त्वलक्षणकारणान्तरासन्निधानाच्च न प्रत्यक्षम् । अथवा आत्मवृत्तिविशेषगुणवत्त्वं तत्त्वम् ।

क्षित्यादीति—पृथिव्यादिपञ्चानां भूतत्वं साधर्म्यमित्यर्थः । भूतत्वं लक्षयति—तच्चेति । बहिरिन्द्रियाणि घ्राणरसनचक्षुस्त्वक्श्रोत्राणि पृथिव्यादिपञ्चभूतकार्याणि, तेषां ग्राह्यो विषयो यो विशेषगुणः यथाक्रमं गन्धादिरेव, तादृशविशेषगुणवत्त्वमेव भूतत्वम् । पृथिव्याः गन्धः, अपां रसः, तेजसो रूपम्, वायोः स्पर्शः, आकाशस्य शब्दो विशेषगुणः इत्यग्रे मूल एव स्फुटीभविष्यति । केचित्सामान्यगुणाः केचित् विशेषगुणा इत्यप्यग्र एव विशदम् ।

भूतलक्षणे 'ग्राह्य' पदं दत्तं, तेन यदि ज्ञानविषयमात्रं विवक्षितं तदात्मनि अतिव्याप्तिः, कथमिति चेत् ? शृणु—'अयं घटः' इति ज्ञानोत्तरं भवति हि 'मया घटो ज्ञातः' इत्याकारकं ज्ञानमपि, आद्यं व्यवसायज्ञानं द्वितीयमनुव्यवसायज्ञानमित्युच्यते । यदाद्यं ( 'अयं घट' इत्याकारकं ) व्यवसायज्ञानं तद् द्वितीयस्मिन् ( अनुव्यवसायज्ञाने= 'ज्ञातो घट' इत्याकारके ) प्रकारीभूतं ( विशेषणभावं प्राप्तं ) भवति, आद्यस्य द्वितीयेन विषयीक्रियमाणत्वात्, द्वितीयस्य च आद्येन व्या[illegible] परन्तु यदाद्यम् 'अयं घट' इत्याकारकं तल्लौकिकेन संयोगसन्निकर्षेण चक्षुरिन्द्रियजन्यमपि

'चक्षुः * संयुक्तमन संयुक्तात्मसमवेतज्ञानविषयत्वेन' ( अलौकिकेन अपि सम्बन्धेन ज्ञानलक्षणाख्येन ) घटांशे प्रत्यक्षरूपतया भासते, तादृशज्ञानात्मकविशेषगुणवांश्चात्माऽपि 'भूत' पदवाच्यः स्यात् यतोऽलौकिकेन सम्बन्धेनापि घटज्ञानं बहिरिन्द्रियजन्यमेव तद्वांश्चात्मा विशेषगुणवान् शक्यतेऽभिधातुम् इतिस्यादेव भूतलक्षणस्यात्मन्यति-व्याप्तिः, अस्याः परिहाराय लक्षणान्तःपाति 'ग्राह्य' पदस्य विवक्षि-तमर्थमाह—ग्राह्यत्वमित्यादिना ।

लौकिकं यत्प्रत्यक्षं चक्षुरादिभिर्लौकिकैः सन्निकर्षैः ज्ञानलक्षणाद्यलौकिकप्रत्यक्षतोऽप्यतिरिक्तं तत्स्वरूपयोग्यत्वं ( तद्विषयत्वं ), मेव ग्राह्यत्वम्, अर्थात् बहिरिन्द्रियजन्यमपि यदि लौकिकेन संयोग-संयुक्तसमवायादिसन्निकर्षेण जन्यं भवति तदेव ( तद्वैव ) ग्राह्यत्व-पदेन विवक्षितं ( विवक्ष्यते ) नत्वलौकिकसन्निकर्षजन्यमपीतिभावः ।

ग्रन्थाक्षराण्येवं योजयितव्यानि—'ज्ञातो घटः' इत्याकारक-ज्ञानस्यापि उपनीत† भानविषयत्वात् उपनीतस्य ज्ञानलक्षणासन्निकर्षेण ज्ञातस्य यद् भानं विषयिता तद्विषयत्वात् तन्निरूप्यत्वात्, तद्वति तादृशालौकिकसन्निकर्षजन्यघटज्ञानविषयकज्ञानवति आत्मनि प्रमातरि ( समवायेन ज्ञानाधिकरणे ) नातिप्रसङ्गः नातिव्याप्तिः ।

---

* घटसंयुक्तं चक्षुः, तत्संयुक्तं मनः, तादृशघटसंयुक्तचक्षुःसंयुक्तमनः संयुक्तो य आत्मा, तस्मिन्नात्मनि समवेतं समवायसम्बन्धेन वर्तमानं यज्ज्ञानं 'ज्ञातो घटः' इत्याकारकं घटज्ञानविषयकमनुव्यवसायात्मकं ज्ञानं तादृशस्य ज्ञानस्य विषयता घटेऽपि वर्त्तत इत्ययमलौकिको ज्ञानलक्षणासन्निकर्षोऽपि मूल एव निरूपितः तद्व्याख्यावसरे अधिकं स्पष्टीकरिष्यामः ।

† उपनीयते उपस्थाप्यते ज्ञानविषयतामापद्यते ज्ञानमनेनेति उपनीतम्, अलौकिको ज्ञानलक्षणासन्निकर्षः ( सम्बन्धः ) । इदमोपनीतभानं प्रत्यक्ष एव तिष्ठति नानुमित्यादाविरत्यपि न विस्मर्तव्यम् ।

जाति पृथिवीत्वादिरूपा तादृशजातिमत्त्वं विवक्षितं, तच्च घटादावपि वर्त्तत एवेति नाव्याप्तिगन्धोऽपीत्यर्थः ।

**अथाकाशशरीरिणाम् ।**
**अव्याप्यवृत्तिः क्षणिको विशेषगुण इष्यते ॥२७॥**

**आकाशशरीरिणामिति ।** आकाशात्मनामव्याप्यवृत्तिक्षणिकविशेषगुणवत्त्वं साधर्म्यमित्यर्थः । आकाशस्य विशेषगुणः शब्दः, स चाव्याप्यवृत्तिः यदा किञ्चिदवच्छेदेन शब्द उत्पद्यते तदान्यावच्छेदेन तदभावस्यापि सत्त्वात् ।

आकाशशरीरिणामिति—अस्यार्थं दर्शयति–'आकाशात्मना'मिति, अर्थात् कारिकास्थ 'शरीरि' पदमात्मसामान्यार्थकमवबोध्यम् । अव्याप्यवृत्तिरित्यादेरयमर्थः—अव्याप्य वर्त्तत इति अव्याप्यवृत्ति, तथा च क्षणिक विशेषगुणो बुद्ध्यादि एतच्च 'बुद्ध्यादिषट्कं स्पर्शान्ता स्नेह सांसिद्धिको द्रव । अदृष्टभावनाशब्दा अमी वैशेषिका गुणाः' इति ९७ कारिकायां वक्ष्यते । तथाच अव्याप्यवृत्तिविशेषगुणवत्त्व क्षणिकविशेषगुणवत्त्वञ्च आकाशात्मनां साधर्म्यमिति विविक्तार्थ । एतदेवस्पष्टीकरोति—आकाशस्येत्यादिना ।

स्वात्यन्ताभावसमानाधिकरणत्वमव्याप्यवृत्तित्वम्, अर्थात् स्वस्य अत्यन्ताभावस्य यदधिकरणम् तस्मिन्नेव स्वात्यन्ताभावाधिकरणे वर्त्तमानत्वं यत्, तदव्याप्यवृत्तित्वम् ।

अयमत्राशय—'अग्रे वृक्षः कपिसंयोगवान् न मूले' इति प्रतीत्या एकस्मिन्नप्यधिकरणे (वृक्षात्मके) शाखायां कपिसंयोगो वर्त्तते अथ मूलदेशे तस्यैव कपिसंयोगस्यात्यन्ताभावोऽपि विद्यत इति कपिसंयोगोऽव्याप्यवृत्तिरिति कथितुं शक्यते एवमेव यदाकाशे घटादेशे शब्दो वर्त्तते तदा अन्यप्रदेशे तस्मिन्नेव शब्दाधिकरणे आकाशे

शब्दाश्रयस्याभावोऽपि विद्यत इति भवति शब्दो विशेषगुणः अव्याप्य-वृत्तिः । आकाशीयसकलदेशेऽभावात् ।

क्षणिकत्वं च तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वम् । योग्य-विभुविशेषगुणानां स्वोत्तरवर्तिगुणनाश्यत्वात्प्रथमशब्दस्य द्वि-तीयशब्देन नाशः । एवं ज्ञानादीनामपि ज्ञानादिकं यदात्मनि विभौ शरीराद्यवच्छेदेनोत्पद्यते तदा घटाद्यवच्छेदेन तदभावो-ऽस्त्येव । एवं ज्ञानादिकमपि क्षणद्वयावस्थायि । इत्थं चाव्या-प्यवृत्तिविशेषगुणवत्त्वं क्षणिकविशेषगुणवत्त्वं चार्थः । पृथिव्या-दौ रूपादिविशेषगुणोऽस्तीत्यतोऽव्याप्यवृत्तीत्युक्तम् । पृथिव्या-दावव्याप्यवृत्तिः संयोगादिरस्तीत्यतो विशेषगुणेत्युक्तम् ।

बौद्धमते सर्वे भावा द्वितीयक्षणे नश्यन्तीति क्षणिका उच्यन्त इति तेषां मताद्भेदं दर्शयितुं स्वमते 'क्षणिकत्व' लक्षयति—तृतीय-क्षणेति । स्वोत्पत्तितृतीयक्षणे वृत्तिर्यस्य एवंविधो यो ध्वंसः नाशः ( साधनन्तोऽभाव ) तस्य प्रतियोगित्वमेव क्षणिकत्वम् । अर्थात् योग्यविभुविशेषगुणाः 'प्रथमक्षणे उत्पद्यन्ते, द्वितीयक्षणे तिष्ठन्ति, तृतीयक्षणे नश्यन्ति' इतिनियमः, तेन यस्तेषां तृतीयक्षणे विनाश स्वभावः तदेव क्षणिकत्वं ज्ञेयम् । एतद्दर्शयति योग्यविभ्विति ।

ज्ञानस्यापि शब्दवत् अव्याप्यवृत्तित्वं क्षणिकत्वञ्च स्पष्टी-करोति—एवमित्यादिना । उक्तसाधर्म्यस्य पदकृत्यं दर्शयति—पृथिव्यादाविति । यद्यपि रूपादि शब्दादिवद् विशेषगुणा एव, नासावव्याप्यवृत्ति किन्तु स्वाश्रय घटादौ सर्वदेशावच्छेदेन वर्त्तते, इत्यर्थः । शिष्टं स्पष्टम् ।

नच रूपादीनामपि कदाचित्तृतीयक्षणे नाशसंभवात् क्षणि-कविशेषगुणवत्त्वं क्षित्यादावतिव्याप्तमिति वाच्यं, चतुःक्षण-

वृत्तिजन्यावृत्तिजातिमद्विशेषगुणवत्त्वस्य तदर्थत्वात् । अपेक्षा-
बुद्धिः क्षणत्रयं तिष्ठति, क्षणचतुष्टयं तु न किमपि जन्यज्ञाना-
दिकं तिष्ठति । रूपरसादिकं तु क्षणचतुष्टयस्थायिन्यपि रूपादौ
वर्तते इति तद्व्युदासः । ईश्वरज्ञानस्य चतुःक्षणवृत्तित्वाज्ज्ञान-
त्वस्य तद्वृत्तित्वाज्जन्येत्युक्तम् । यद्याकाशजीवात्मनोः साधर्म्यं
तदा जन्येति न देयं, द्वेषत्वादिकमादाय लक्षणसमन्वयात्,
परममहत्त्वस्य तादृशगुणत्वाच्च चतुर्थक्षणे द्वित्वादीनामपि
नाशाभ्युपगमाद्द्वित्वादीनामपि तथात्वात्तद्वारणाय विशेषेति ।
त्रिक्षणवृत्तित्वं वा वाच्यम् । द्वेषत्वादिकमादायात्मनि लक्षणस-
मन्वयः ॥ २७ ॥

यदा कदाचिद् यस्य कस्यापि रूपादिविशेषगुणस्य तृतीयक्षणे
नाशो जात तदा तादृशक्षणिकविशेषगुणवत्त्व पृथिव्यादावप्यायात-
मिति तत्रातिव्याप्तिमाशङ्क्य समाधत्ते 'नच इत्यारभ्य तदर्थत्वात्'
इत्यन्तेन ग्रन्थेन । चतुःक्षणवृत्तीति—अस्यायमर्थः—चतुःक्षण-
वृत्तीनि यानि जन्यानि घटादीनि रूपरसादीनि च तेषु अवृत्तिः (न
वर्तमाना) या जातिः 'शब्दत्व' 'ज्ञानत्वम्' इत्याकारा जातिः तादृश
जातिमान् यो विशेषगुणः शब्दो ज्ञानं वा, तद्वान् यथाक्रमम् आकाश
आत्मा चेत्यनयोः स्थिरत्वाया न पृथिव्यादिष्वतिव्याप्तिगन्धोऽपि । चतुः
क्षणवृत्तित्वस्य आधिक्यकालोपलक्षणता नतु चतुःक्षणमात्रवृत्तित्वमेव
ग्राह्यम् तेन पञ्चक्षणवृत्तिघटादिपदार्थेष्वपि तादृशजातेरभाव एवेति
कदापि पृथिव्यादिषु नातिव्याप्तिः ।

चतुःक्षणवृत्तिजन्येत्यादि पदत्रयं दर्शयितुं 'अपेक्षाबुद्धि'
रित्यादिमग्रन्थमवतारयति ।

'अयमेकः अयमेकः इमौ द्वौ' इत्याकारा द्वित्वविषयिणी बुद्धिरपेक्षाबुद्धिः, एतामन्तरा अन्यत् किमपि जन्यधर्मं न त्रिक्षणपर्यन्तस्थायि भवति, चतुर्थक्षणे अपेक्षाबुद्धेर्नाशो जायते ।

रूपत्वादिका जातिस्तु चक्षुःसंयोगपर्यालोचनाधिककालपर्यन्तस्थायिष्वपि रूपादिषु वर्तते इति 'चक्षुर्ग्राह्य' पदेन तद्वारणं बोध्यम् ।

'जन्य'पदन्तु ईश्वरज्ञानसंग्रहार्थम् । ईश्वरज्ञानमपि चक्षुःसंयोगोपलक्षितनिखिलकालवर्ति नित्यत्वात् यदि 'जन्य' पदं न निवेशयेत तदा ईश्वरेऽव्याप्तिः स्यात् ।

यदि तु कारिकास्थ 'यदीति' पदेन औपाधिकरूप पदार्थोऽभिप्रेतः तदा 'जन्य' पदनिवेशो न कार्य इत्याशयेनाह—यद्वेति ।

अथ भावः — चक्षुर्ग्राह्यवृत्तिजातिमद्विशेषगुणवत्त्वं' चाक्षुषविशेषगुणवत्त्वं विवक्षितम्, चक्षुर्ग्राह्यवृत्तीनि यानि घटादीनि रूपादीनि च तद्वृत्तिर्या जातिः द्रव्यत्वादि, तद्वान् यो विशेषगुणो द्वेषादि तद्वत्त्वमाकाशादीनामात्मनामेव यथायोगमिति न पृथिव्यादिष्वतिप्रसक्तिः इत्यभिप्रायेणाह द्वेषत्वादिकमादाय लक्षणसमन्वयात् इति

'विशेष' पदप्रयोजनमाह—परममहत्त्वस्येत्यादिना । परममहत्त्वस्य सामान्यगुणत्वात्—इत्यस्यार्थः चक्षुर्ग्राह्यवृत्तिजन्यावृत्तिजातिमद्गुणत्वात् ॥

अयमाशयः—चक्षुर्ग्राह्यवृत्तीनि यानि जन्यानि घटादीनि, तद्वृत्तिर्या जातिः परममहत्त्वरूपा, तद्वान् गुणः परममहत्त्वमेव तादृशगुणवत्त्वं कालेऽपि वर्तते इत्याकाशादावसाधर्म्यस्य कालेऽप्यतिप्रसक्तिः, तद्वारणाय 'विशेष' पदं दत्तम् । परममहत्त्वं सामान्यगुणो न विशेषगुण इत्यर्थः ।

एवमेव द्वित्वादिष्वप्यतिव्याप्तिरनेन पदेन वारणीया, तथाहि-चक्षुर्ग्राह्यवृत्तिजन्यघटादिवृत्तिर्या जातिः द्वित्वत्वादि, तद्वान् गुणो द्वित्वादिः, तादृशगुणवत्त्वात् घटादावपि तेष्वतिव्याप्तिः । 'विशेष' पदनिवेशे तु नैव दोषः द्वित्वादीनां सामान्यगुणत्वात् ।

उपस्थितिकृतं लाघवमभिप्रेत्य 'चतु-क्षणवृत्ति-द' स्थाने 'त्रिःक्षणवृत्तित्व' पदं मत्वान आह त्रिःक्षणवृत्तित्वमिति। ज्ञानत्वजाति-स्थाने द्वेषत्वादिजातिग्रहणं कृत्वा लक्षणं समन्वेतव्यम्।

## रूपद्रवत्वप्रत्यक्षयोगिनः प्रथमास्त्रयः।

पृथिव्यप्तेजसां रूपवत्त्वं, द्रवत्ववत्त्वं, प्रत्यक्षविषयत्वं चेत्यर्थः। न च चक्षुरादीनां भर्जनकपालस्थवह्नेरूष्मणश्च रूपवत्त्वे किं मानमिति वाच्यं, तत्रापि तेजस्त्वेन रूपानुमानात्। एवं वाय्वानीतपृथिवीजलतेजोभागानामपि पृथिवीत्वादिना रूपानुमानं बोध्यम्। नन घटादौ द्रुतसुवर्णादिभिन्ने तेजसि च द्रवत्ववत्त्वमव्याप्तमिति वाच्यं, द्रवत्ववद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्। घृतजतुप्रभृतिषु पृथिवीषु, जलेषु, द्रुतसुवर्णादौ तेजसि च द्रवत्वसत्त्वात्तत्र च पृथिवीत्वादिसत्त्वात्तदादाय सर्वत्र लक्षणसमन्वयः। न च प्रत्यक्षविषयत्वं परमाण्वादावव्याप्तमतिव्याप्तं च रूपादाविति वाच्यं, चाक्षुषप्रत्यक्षविषयवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्। आत्मन्यतिव्याप्तिवारणाय चाक्षुषेति।

परममूले-रूपेति। द्वन्द्वान्ते श्रूयमाणस्य योगिपदस्य प्रत्येकमन्वयः, रूपयोगित्वं, द्रवत्वयोगित्वं, प्रत्यक्षयोगित्वञ्च पृथिव्यादित्रयाणां साधर्म्यमित्यर्थः। तदेतद्व्याख्याति—पृथिव्यप्तेजसामित्यादिना। चक्षुरादिषु रूपवत्त्वे शङ्कामुत्थाप्य समाधानमाह—'न च' इत्यारभ्य 'रूपानुमानाद्' इत्यन्तेन ग्रन्थेन। निगदव्याख्यातो ग्रन्थः। अनुमानप्रकारश्चायम्—चक्षुरिन्द्रियं रूपवत्, तेजस्त्वात्, सूर्यवत्। भर्जनकपालस्थो वह्निः रूपवान् तेजस्त्वाद्, इत्यादि ज्ञेयम्। वाय्वानीतपृथिव्याद्यंशेषु रूपवत्त्वानुमानमतिदिशन्ति एवमिति। वाय्वानीतः पार्थिवभागो 'रूपवान्

न च घ्राणेन्द्रियादीनां वाय्वानीतपार्थिवादिभागानां च रसा-
दिमत्त्वे किं मानमिति वाच्यं, तत्रापि पृथिवीत्वादिना तदनु-
मानात्।

परममूले द्वे इति। पृथिव्यप्सु द्वे द्रव्ये इत्यर्थः। पृथिवीजल-
योरिति—साधर्म्यमिति शेषः। न च घ्राणेन्द्रियादीनामिति ग्रन्थः
स्पष्टार्थः, अनुमानप्रकारोऽपि पूर्ववत् अर्थात् घ्राणेन्द्रियं रसादिमत्
पृथिवीत्वात् जम्बीरफलवत् इत्यादि स्वयमूहनीयम्।

द्वयोर्नैमित्तिको द्रवः २८

द्वयोरिति। पृथिवीतेजसोरित्यर्थः। न च नैमित्ति-
कद्रवत्ववत्त्वं घटादौ वह्न्यादौ चाव्याप्तमिति वाच्यं, नैमि-
त्तिकद्रवत्वसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षि-
तत्वात्॥ २८॥

द्वयोरितीति। पृथिवीतेजसोर्नैमित्तिकद्रवत्ववत्त्वं साधर्म्य-
मित्यर्थः। उक्तसाधर्म्यस्य घटादिषु अव्याप्तिं जातिघटितलक्षणेन
वारयन् 'न च' इत्यादि शङ्कासमाधानतया प्रभाति। नैमित्तिकद्रवस्य
घृतलाक्षादिपृथिव्यां वर्तते तत्रैव पृथिवीत्वादि जातिरपि। एवं
तादृशद्रवत्वसमानाधिकरणा या द्रव्यत्वस्य साक्षाद्व्याप्या जातिः
पृथिवीत्वादिः तादृशजातिमत्त्व घटादावप्यस्तीति नाव्याप्तिदोषलेशः।

आत्मानो भूतवर्गाश्च विशेषगुणयोगिनः।

पृथिव्यप्तेजोवाय्वाकाशात्मनां विशेषगुणवत्त्वमित्यर्थः।
आत्मान इति सर्वं सुस्पष्टम्।

यदुक्तं यस्य साधर्म्यं वैधर्म्यमितरस्य तत् २९

ज्ञेयत्वादिकं विहायेति बोध्यम् । तत्तु न कस्यापि वैधर्म्यं केवलान्वयित्वात् ॥ २९ ॥

इत्थं साधर्म्यमुक्त्वा सम्प्रति अल्पेनैव प्रकारेण वैधर्म्यमाचष्टे-यदुक्तमिति । यथा-सत्तावत्त्वं द्रव्यादित्रयादन्येषां वैधर्म्यम् ।

मुक्तावल्यां ज्ञेयत्वादिकमिति—ज्ञेयत्वमभिधेयत्वं प्रमेयत्वं तु न कस्यापि वैधर्म्यम्, सर्वस्य ज्ञेयत्वात् अभिधेयत्वाच्च, अर्थात् ज्ञेयत्वादयः केवलान्वयिनो धर्माः। केवलान्वयित्वन्तु अत्यन्ताभावाप्रतियोगित्वम् । यस्य क्वचिदप्यत्यन्ताभावो न स्यात् स धर्मः केवलान्वयी भवति, जगत्यां कश्चिदप्येवंविधः पदार्थो न वर्त्तते यः कस्यचित् ज्ञेयो न स्यात्, यश्चास्मदादीनां न ज्ञेय स योगिनामूर्ध्वलोकानान्तु ज्ञेय एव, तेषामप्यज्ञेयस्तु ईश्वरीयज्ञानविषयः, एवमेवाभिधेयत्वादिकं बोध्य, सर्वस्यैव अभिधावृत्तिविषयत्वात्, तेन ज्ञेयत्वादिकं कस्यचिदपि न वैधर्म्यमिति युक्तमुक्तं ज्ञेयत्वादिकं विहायेति ।

स्पर्शादयोऽष्टौ वेगाख्यः संस्कारो मरुतो गुणाः
स्पर्शाद्यष्टौ रूपवेगौ द्रवत्वं तेजसो गुणाः ३०
स्पर्शादयोऽष्टौ वेगश्च गुरुत्वं च द्रवत्वकम्
रूपं रसस्तथा स्नेहो वारिण्येते चतुर्दश ३१
स्नेहहीना गन्धयुताः क्षितावेते चतुर्दश
बुद्ध्यादिषट्कं संख्यादिपञ्चकं भावना तथा ३२
धर्माधर्मौ गुणा एते ह्यात्मनः स्युश्चतुर्दश
संख्यादिपञ्चकं कालदिशोः शब्दश्च ते च खे ३३

**संख्यादयः पञ्च बुद्धिरिच्छा यत्नोऽपि चेश्वरे**
**परापरत्वे संख्याद्याः पञ्च वेगश्च मानसे ३४**

ते च ते आकाशे ॥ ३० । ३१ । ३२ । ३३ । ३४ ॥
साधर्म्यवैधर्म्ये निरूप्य सम्प्रति प्रत्येकं पृथिव्यादिकं निरूपयति–

वाय्वोर्नवैकादश तेजसो गुणा जलक्षितिप्राणभृतां चतुर्दश ।
दिक्कालयोः पञ्च षडेव चाम्बरे महेश्वरेऽष्टौ मनसस्तथैव ॥

इति प्राचीनां कारिकामाश्रित्य वाय्वादीनां द्रव्याणां गुणानाह—स्पर्शादय इति । एतेन उद्देशक्रमानुसारेण पृथिव्यादीनां गुणा नोक्ता इति शङ्का व्युदस्ता । स्पर्शसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वानि वेगाख्य संस्कारश्चेति नव वायोर्गुणाः । तेजसो गुणानाह—स्पर्शाद्यष्टाविति । जलगुणानाह—स्पर्शादयोऽष्टाविति । पृथिव्या गुणानाह—स्नेहहीना इति । आत्मनो गुणानाह—बुद्ध्यादिषट्कमिति । कालदिशोर्गुणानां समत्वादाह—सङ्ख्यादिपञ्चकमिति । आकाशगुणानाह—शब्दश्चेति । ईश्वरगुणानाह—सङ्ख्यादीति । शिष्टं स्पष्टम् ।

इति सप्रभायां मुक्तावल्यां
साधर्म्यवैधर्म्यनिरूपणनाम्नी
द्वितीया मुक्ता ।

---

**तत्र क्षितिर्गन्धहेतुः**

**गन्धहेतुरिति** गन्धसमवायिकारणमित्यर्थः । यद्यपि गन्धवत्त्वमात्रं लक्षणमुचितं, तथापि पृथिवीत्वजातौ प्रमाणोपन्यासाय कारणत्वमुपन्यस्तम् । **तथाहि** । पृथिवीत्वं हि गन्ध-

समवायिकारणतावच्छेदकतया सिद्ध्यति, अन्यथा गन्धत्वावच्छिन्नस्याकस्मिकत्वापत्तेः। न च पाषाणादौ गन्धाभावादव्याप्तिरिति वाच्यं, तत्रापि गन्धसत्त्वात्। अनुपलब्धिस्त्वनुत्कटत्वेनाप्युपपद्यते। कथमन्यथा तद्भस्मनि गन्ध उपलभ्यते। भस्मनो हि पाषाणध्वंसजन्यत्वात्पाषाणोपादानोपादेयत्वं सिद्ध्यति। यद्द्रव्यं यद्द्रव्यध्वंसजन्यं तत्तदुपादानोपादेयमिति व्याप्तेः। दृष्टं चैतत्खण्डपटे महापटध्वंसजन्ये। इत्थं च पाषाणपरमाणोः पृथिवीत्वात्तज्जन्यस्य पाषाणस्यापि पृथिवीत्वं तथा च तस्यापि गन्धवत्त्वे बाधकाभावः

पदार्थानां साधर्म्यवैधर्म्ये निरूप्य, सम्प्रति प्रत्येकं पृथिव्यादिकं निरूपयन् दौ पृथिवीं लक्षयति तत्रेति। मूले गन्धहेतुरितीति—अस्यार्थः—गन्धेत्यादिरिति। कालादीनां कार्यमात्रं प्रति कारणतासम्भवात् तथा च पृथिवीलक्षणस्य तत्र २ अतिव्याप्तिमिति शङ्कमानस्यापि 'हेतु' पदस्यार्थमाह गन्धसमवायिकारणमिति। समवायेन गन्धकारणं पृथिवीलक्षणमित्यर्थः। कालः कालिकसम्बन्धेन गन्धहेतुः दिशा दैशिकसम्बन्धेन गन्धहेतुः नेतु समवायसम्बन्धेनेति नातिव्याप्तिः। ननु सुरभ्यसुरभिकपालारब्धे निर्गन्धे घटे (आदिक्षणावच्छिन्ने) लक्षणाव्याप्तिरिति चाच्यम्, गन्धवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वविवक्षायां दोषाभावो यत। अर्थात् गन्धवन्तो ये कपालाद्या, तद्वृत्तिर्या द्रव्यत्वस्य साक्षाद्व्याप्या जातिः पृथिवीत्वम्, तादृशजातिमत्त्वं गन्धवत्पदेन विवक्षितम् तेनादिक्षणे निर्गन्धेऽपि घटादिपदार्थे पृथिवीत्वसत्त्वाल्लक्षणसमन्वयो नाव्याप्तिदोषलेशोऽपि। अयमेव लक्षणसमन्वयप्रकारो यथायथं जलादिलक्षणेष्वपि बोध्यः। 'गन्धवत्त्वं पृथिवीत्व'मिति लघुलक्षणेनापि निर्वाहे सति 'गन्धसमवायिकारण'मिति गुरुलक्षणकरणे प्रयोजनमाह—सत्यपीत्या

दिना। पृथिवीत्वं द्वीति–अस्य अन्वयस्यायमाशय–समवायसम्बन्धा-
वच्छिन्नगन्धत्वावच्छिन्नगन्धकार्यतानिरूपिता तादात्म्यसम्बन्धा-
वच्छिन्नपृथिवीत्वावच्छिन्नपृथिवीनिष्ठा या समवायिकारणता, सा
किञ्चिद्धर्मावच्छिन्ना कारणतात्वात्, घटनिष्ठकार्यतानिरूपितकपाल-
गतकारणतावत् इत्यनुमानं पृथिवीत्वजातौ प्रमाणमिति दर्शयितु-
मेव लक्षणे कारणपदनिवेश इति। विपक्षे दण्डमाह—अन्यथेति।
गन्धत्वावच्छिन्नस्य गन्धमात्रस्य कार्यस्य। आकस्मिकत्वापत्तेः कारणं
विनापि जन्यत्वापत्तेः। परन्तु नहि कारणं विना कार्यं भवति, यदि
तथा स्यात् तदा पानीयमन्तरापि पिपासोपशमः स्यात्, एवं यद्
गन्धस्य कारणं सा पृथिवी, सा च न निरवच्छिन्ना किन्तु केनचि-
द्धर्मेणावच्छिन्नैव, यश्च धर्मस्तस्या अवच्छेदकः स पृथिवीत्वमिति
पृथिवीत्वजातिसिद्धिः।

पाषाणादावव्याप्तिमाशङ्क्य समाधत्ते 'नच' इत्यारभ्य 'गन्ध-
सत्त्वात्' इत्यन्तेन। तत्रापि पाषाणादावपि। गन्धसत्त्वात् पृथिवी-
त्वेन गन्धानुमानं। तदाकारश्चाय-पाषाणादिर्गन्धवान् पृथिवीत्वात्
घटवत् इति। यदि पाषाणादौ गन्धोऽस्ति तर्हि घ्राणेन्द्रियसंयोगे
ऽपि कथं न तस्योपलब्धिरितीमां शङ्कां परिहरति—अनुपलब्धि-
स्त्विति। उत्कट एव गन्ध उपलभ्यते अनुत्कटस्तु विद्यमानोऽपि
नोपलभ्यते इति भावः। उत्कट उद्भूत न उत्कट अनुत्कटोऽनुद्भूत
इत्यर्थः। अत्र युक्तिं सञ्चारयति—कथमन्यथेति। अन्यथा पाषा-
णादौ पृथिवीत्वानङ्गीकारे। तद्भस्मनि पाषाणभस्मनि।

अयं भावः—पाषाणभस्मनि गन्धः प्रत्यक्षप्रमाणसिद्धः तेन
तत्र पृथिवीत्वमङ्गीकरणीयम् ततो भस्मारम्भकावयवेष्वपि पृथिवी-
त्वसिद्धिरप्रत्यूहा। ये भस्मारम्भकावयवाः त एव पाषाणारम्भका-
वयवाः इति पाषाणस्य पृथिवीत्वे तत्र गन्धसिद्धिः गन्धस्य पृथिवी-
त्वसामानाधिकरण्यनियमात्।

एतदेव 'भस्मनो हि' इत्यादिग्रन्थेन विशदयति । पाषाणो-
पादानोपादेयत्वं पाषाणस्य उपादान समवायिकारणं यत् पाषा-
णारम्भक पार्थिवावयवरूप द्रव्यं, तदुपादेयत्वं कार्यत्वमित्यर्थः ।
अस्मिन्नर्थे व्याप्तिनियममभिलाप्य दर्शयति—यद् द्रव्यमिति । उक्तां
व्याप्तिं दृष्टान्तेन दर्शयितुमाह—दृष्टञ्चैतदिति । यथा महापटध्वं-
सजन्यः खण्डपटः महापटोपादानकारण ( समवायिकारण ) भूतै-
स्तन्तुभिर्जन्य तथा पाषाणध्वंसजन्य पाषाणभस्मापि पाषाणोप-
समवायिकारणजन्यमेवेत्यर्थः । किन्तत् पाषाणस्य समवायिकारण-
मिति जिज्ञासायामुक्त दृष्टान्तं दार्ष्टान्ते सङ्गमयन्नेवाह—इत्यञ्चेति ।

अयमभिसन्धिः—यथा महापटः तन्तुरूपैः स्वसमवायिका-
रणभूतैरवयवैरारब्धः तज्जन्यः खण्डपटोऽपि तदवयवैरेवारब्धः
प्रत्ययात्, नहि महापटस्यान्यत्समवायिकारणं खण्डपटस्यान्यत्सम-
वायिकारणमित्यत्र किञ्चित्प्रमाणं पश्यामः, किन्त्वयमपि तन्तूपा-
दानजन्यत्वधर्मावच्छिन्न एवमेव पाषाणः पृथिवीपरमाणुजन्यत्वात्
पृथिवीत्वधर्मवान् (पार्थिव) पृथिवीपरमाणौ च गन्धसत्त्वात्पाषाणे-
ऽपि गन्धसत्तासिद्धिः अन्यथा तद्भस्मनि कदापि गन्धो नोपलभ्यते
नहि कारणेऽविद्यमानस्य गुणस्य कार्ये उपलब्धिर्दृष्टचरी, कारण-
गुणानां कार्यगतगुणारम्भकत्वे असमवायिकारणत्वात्, तथा च पारमर्षं
सूत्रं 'कारणगुणपूर्वकः कार्यगुणो दृष्टः', 'कारणान्यसमवायिनो
गुणाः' वै० २।१।२२।२४। इति ।

नानारूपवती मता ।

नानारूपेति । शुक्लनीलादिभेदेन नानाजातीयं रूपं
पृथिव्यामेव वर्तते न तु जलादौ, तत्र शुक्लस्यैव सत्त्वात् ।
पृथिव्यां तु एकस्मिन्नपि धर्मिणि पाकवशेन नानारूपसम्भवात् ।

नच यत्र नानारूपं नोत्पन्नं तत्राव्याप्तिरिति वाच्यं, रूपद्वयवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्, रूपनाशवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य वा वाच्यत्वात्। वैशेषिकनये पृथिवीपरमाणौ रूपनाशस्य रूपान्तरस्य च सत्त्वात्। न्यायनये घटादावपि तन्सत्त्वाल्लक्षणसमन्वयः।

परममूले 'नानारूपवती' इति पृथिव्या लक्षणान्तरमेतत्सूत्रम्। एतल्लक्षणभूतायां पृथिव्यां घटयितुं प्रथमतः नानात्वमाह शुक्लनीलादि-भेदेनेति। पाकजत्वेनेति—पाको विजातीयतेजःसंयोगः। यत्र घटादिरूपायां पृथिव्यां नानारूपं नोत्पन्नं तत्राव्याप्तिमाशङ्क्य समाधत्ते 'नचे'त्यारभ्य 'विवक्षितत्वात्' इत्यन्तेन ग्रन्थेन। रूपद्वय-वद्वृत्तीति—रूपद्वयवन्तो ये केऽपि घटाद्याः पदार्थाः तेषु वृत्तिर्या द्रव्यत्वस्य साक्षाद्व्याप्या जातिः पृथिवीत्वं तादृशजातिमत्त्वं नानारूपवत्पदेन विवक्षितं तच्च नानारूपरहितेष्वपि घटादिषु वर्त्तत एवेति नाव्याप्तिः। इदञ्च लक्षणमपेक्षाबुद्धिविशेषविषयकत्वरूपं यद् द्वित्वं तेन घटितम्, तत्राऽन्योन्याश्रयतिप्रसङ्गः गौरवं भातीति तादृशगौरवपरिहाराय ग्रन्थकारः लक्षणान्तरं प्रदर्शयति—रूपनाशवद्वृत्तीति। अस्यायमर्थः यदा आवे आमघटो निक्षिप्यते तदा पाकेन (विलक्षणतेजःसंयोगेन) पूर्वं श्यामरूपं नश्यति परं रक्तं रूपमुत्पद्यते एवमेव सर्वेषु पार्थिवेषु पदार्थेषु पाकेन पूर्वरूपपरावृत्तिर्जायते नात्र कस्यचिद्विवादः, परन्तु पीलुपाकवादिनो वैशेषिकस्य नये पृथिवीपरमाणावेव पूर्वरूपनाशो रूपान्तरोत्पत्तिश्च पाकेन भवति, पिठरपाकवादिनो न्यायनये तु न पृथिवी परमाणौ पाकः किन्तु परमाणुजन्ये घटाद्यवयविन्येव पाकः, तत्र च पूर्वरूपनाशो रूपान्तरोत्पादश्च, सर्वेष्वेव घटादिपदार्थेषु रूपनाशवान् तादृशरूपनाशवति घटादौ वृत्तिर्य-

स्या सा द्रव्यत्वस्य साक्षाद्व्याप्या जातिः पृथिवीत्वमेव, तादृशजातिमत्त्व 'नानारूपवत्त्व' पदेन विवक्षितमिति नाव्याप्ति र्नापि चोपस्थितिकृतं गौरवमिति सर्वथा निर्दुष्टं लक्षणम्। नाशो ध्वंसः। पीलुपाकादि प्रक्रिया अग्रे वक्ष्यते। शिष्टं स्पष्टम्।

षड्विधस्तु रसस्तत्र—

षड्विध इति। मधुरादिभेदेन यः षड्विधो रसः स पृथिव्यामेव। जले च मधुर एव रसः। अत्रापि पूर्ववद्रसवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं लक्षणार्थोऽवसेयः।

षड्विध रसेति—षड्विधरसवत्त्वं पृथिवीत्वमित्यपरं पृथिव्या लक्षणम्, यत्र रसाग्राविफले षड्विधो रसो नोत्पन्नः तत्रापि पूर्ववज्जातिघटितलक्षणनिरुक्त्याऽव्याप्तिपरिहारमतिदिशति—अत्रापीति।

गन्धस्तु द्विविधो मतः ३५

गन्धस्त्विति। द्विविध इति। वस्तुस्थितिमात्रं न तु द्विविधगन्धवत्त्वं लक्षणं द्वैविध्यस्य व्यर्थत्वात्। द्वैविध्यं च सौरभासौरभभेदेन बोध्यम्॥ ३५॥

यथा नानारूपवत्त्वादिकं पृथिवीलक्षणं तथा द्विविधगन्धवत्त्व-मपि लक्षणान्तरं किन्न स्यादिति शङ्कमानं प्रत्याह—द्विविध इति। वस्तुस्थितिमात्रमिति—वस्तुगत्या पृथिव्यां द्विविधो गन्धस्तिष्ठति इति सूचयितुं द्विविधगन्धकथनं न तु द्वैविध्यस्य लक्षणे प्रवेश इत्यर्थः। 'गन्धवत्तु' इति लक्षणेनैवास्य गतार्थत्वान्न लक्षणान्तरमिति भावः।

स्पर्शस्तस्यास्तु विज्ञेयो ह्यनुष्णाशीतपाकजः।

तस्याः पृथिव्याः । अनुष्णाशीतस्पर्शवत्त्वं वायोरपि वर्तत इत्युक्तं पाकज इति । इत्थं च पृथिव्याः स्पर्शोऽनुष्णाशीत इति ज्ञापनार्थं तदुक्तम् । वस्तुतस्तु पाकजस्पर्शवत्त्वमात्रं लक्षणम्, अधिकस्य वैयर्थ्यात् । यद्यपि पाकजस्पर्शः पटादौ नास्ति तथापि पाकजस्पर्शवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमर्थो बोध्यः ।

परममूले स्पर्श इति—तस्याः पृथिव्याः स्पर्शः अनुष्णोऽप्य कोष्णः, अशीतोऽप्यकशीतश्च सत्यामौ पाकजश्चेति द्वौ कर्मधारयः। पयश्च नानारूपवत्त्व वह्निसंयोगस्यत्वस्य, पाकजस्पर्शवत्त्वश्चापि पृथिव्या लक्षणत्रय निष्पन्नम् । सिद्ध स्पष्टम् । ननु—न्यायमते पटावयविनि एव पाकजस्पर्शः पाकेन पटादिदाहोत्पन्नं पटादेरेवोत्पन्नम् कृतस्तेषां स्पर्शं, वैशेषिकमते तु पटावयवभूतेषु परमाणुष्वेव पाको नावयविनि इति पटादौ पाकाभिडव्याप्तिरित्याशङ्कायां समाधातुं 'यद्यपि' इत्यादि ग्रथ्नाति। *पाकजस्पर्शवदिति—पाकजस्पर्शवन्तो ये घटाद्यास्तेषु वृत्तिर्वर्तनं यस्याः सा चासौ जातिः, अर्थात् पृथिवीत्व, तादृशजातिमत्त्वं 'पाकजस्पर्शवत्त्व' पदेन विवक्षितमिति न †पटादौ कुत्रापि कश्चिद्दोष इत्यर्थः ।

**नित्यानित्या च सा द्वेधा नित्या स्यादणुलक्षणा ३६**

---

* सत्तारूपजातिमादाय गगनादावतिव्याप्तिवारणाय द्रव्यत्वव्याप्येति । स्पर्शसमानाधि द्रव्यत्वसमानाधिकरणसत्तामादायातिव्याप्तिवारणाय व्याप्यमाग । पाकजद्रव्यत्वस-करणजलत्वादिकमादाय जलादावतिव्याप्तिवारणाय पाकजेति । पाकजद्रव्यत्वसमानाधिकरणतद्द्रव्यत्वमादाय तादृशाति व्याप्तिवारणाय स्पर्शेति । जलवृत्त्यव्यन्यतरत्वमादाय जलादावतिव्याप्तिवारणाय जातीति ।

† पटादावित्यत्र आदिपदेन वैशेषिकमतेऽत्र तद्विमात्रपरिग्रहः ।

## अनित्या तु तदन्या स्यात्सैवावयवयोगिनी

सा पृथिवी द्विविधा नित्या अनित्या चेत्यर्थः । अणुलक्षणा परमाणुरूपा पृथिवी नित्या । **तदन्या** परमाणुभिन्ना पृथिवी द्वयणुकादिरूपा सर्वाऽप्यनित्येत्यर्थः । सैव अनित्या पृथिव्येवावयववतीत्यर्थः ।

सा पृथिवीत्यादिग्रन्था निगदव्याख्यातार्थः ।

**ननु** अवयविनि किं मानं परमाणुपुञ्जैरेवोपपत्तेः । **न च** परमाणूनामतीन्द्रियत्वाद्घटादेः प्रत्यक्षं न स्यादिति **वाच्यम्**, एकस्य परमाणोरप्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्वात् । यथैकस्य केशस्य दूरेऽप्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्वम् । **नचै**को घटः स्थूल इति बुद्धेरनुपपत्तिरिति **वाच्यम्**, एको महान्धान्यराशिरितिवदुपपत्तेः । **मैवं**, परमाणोरतीन्द्रियत्वेन तत्समूहस्यापि प्रत्यक्षायोग्यत्वात् । **दूरस्थ**केशस्तु नातीन्द्रियः, सन्निधाने तस्यैव प्रत्यक्षत्वात् ।

बौद्ध शङ्कते— ननु इत्यारभ्य 'उपपत्ते' रित्यन्तेन । 'अयं घट' इत्याकाराया प्रतीते निबद्धस्थानविशिष्टै परमाणुभिरेव निर्वाह न तत्साधनाय प्रत्यक्षं प्रमाणमपेक्षणीयमिति शङ्काकर्तुर्हृदयम् । सिद्धान्तिनोऽभिप्रायमुत्थाप्य खण्डयति बौद्ध नचेत्यादिना । यद्यपि परमसूक्ष्मा परमाणवो नैकैकमिन्द्रियगोचराः तथापि तत्समुदायस्तु भवतीन्द्रियगोचर इति 'अयं घट' इत्यादिप्रत्यये नानुपपत्ति । तत्समूहस्य परमाणुसमूहस्य । एतद् दृष्टान्तेन समर्थयति स एव यथेति । तत्समूहस्य केशसमूहस्य, यथा धान्यसमूहस्यैकत्वात् 'एक' इति प्रतीति, एवमेव अयमेकोऽपि एव महदात्मका येन परमाणुपुञ्ज सूक्ष्मेऽपि 'महान् घट' इत्याकारा प्रतीतिरितिभाव । पुनराशङ्क्य स्वपक्ष स्थापयति परमाणुपुञ्जवादी ( बौद्ध ) 'नच' इत्यादिना ।

सिद्धान्ती ( अवयविवादी ) समाधत्ते 'नैवम्' इत्यादिना । परमाणुः परमसूक्ष्म आदिरवयवः स्वयं निरवयवः अतीन्द्रियो नित्यः इति नैयायिकवैशेषिकाणां सिद्धान्तः ।
उक्तञ्च—

जालसूर्यमरीचिस्थं सूक्ष्मं यद्दृश्यते रजः ।
तस्य षष्ठतमो भागः परमाणुः स उच्यते ॥

केचित् 'षष्ठितमो भाग' इति पठन्ति †। अत्र युक्ताऽयुक्तत्वं सुधियो विवेचयन्तु । मूर्तत्वे सति निरवयवत्वं परमाणुत्वमित्यत्र तु न परमाणुवादिनां विवादः अन्ते बौद्धसिद्धान्तात्, तेषां मते उत्पत्तिविनाशवन्तः क्षणभंगुराश्च परमाणवः ( आस्तां तावदियं चिन्ता प्रकृतमनुसराम )।

एवम्भूत परमाणुरतीन्द्रियः तत्समूहोऽपि अतीन्द्रिय एव यथैकस्य परमाणोरतीन्द्रियत्वेन प्रत्यक्षं न जायते तत्समूहस्यापि प्रत्यक्षत्वेऽयोग्यतैव, यत्तु एकस्य दूरस्थकेशस्याप्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्ववत्परमाणुसमूहप्रत्यक्षकथनं बौद्धस्य तदविचारिताभिधानं, दूरस्थकेशस्तु स्वभावतो नातीन्द्रियः सन्निधाने ( सामीप्ये ) तस्यैव प्रत्यक्षत्वात्, एतदाशयेनाह—परमाणोरतीन्द्रियत्वेनेत्यादि। एवञ्च प्रत्यक्षयोग्यतावतः केशस्य दूरत्वप्रतिबन्धकतया तदा न प्रत्यक्षं तदपगमे तु प्रत्यक्षमेव, नतु केशस्य स्वाभाविकमप्रत्यक्षत्वं यथा परमाणोः, तथाचोक्तदृष्टान्तदार्ष्टान्तिकभावो बौद्धस्य बुद्धिमान्द्यं प्रकटयति।

न च. तदानीमदृश्यपरमाणुपुञ्जाद्दृश्यपरमाणुपुञ्जस्योत्पन्नत्वान्न प्रत्यक्षत्वे विरोध इति वाच्यम्, अदृश्यस्य दृश्यानुपादानत्वात् । अन्यथा चक्षुरूपादिसंततेरपि. कदाचिद्दृश्य-

---

† 'षष्ठतम' इति पाठस्तु 'मन्मथनाथ गोस्वामि' इत्यार्यैः प्रणीतायां 'धात्रयद्गौ' वर्तते । अयं ग्रन्थो न्यायवैशेषिकोभयमतानुसारी पुरायपत्तनमुद्रितः ।

त्वप्रसङ्गात् । नचातितप्ततैलादौ कथमदृश्यदहनसंततेर्दृश्यदह-
नोत्पत्तिरिति वाच्यम्, तत्र तदन्तःपातिभिर्दृश्यदहनावयवैः
स्थूलदहनोत्पत्तेरुपगमात् । न चादृश्येन द्व्यणुकेन कथं दृश्य-
त्रसरेणोरुत्पत्तिरिति वाच्यम्, यतो न दृश्यत्वमदृश्यत्वं वा
कस्यचित्स्वभावादाचक्ष्महे किन्तु महत्त्वोद्भूतरूपादिकारणस-
मुदायवशाद् दृश्यत्वं तदभावे चादृश्यत्वम् । तथा च त्रसरे-
णोर्महत्त्वात्प्रत्यक्षत्वं न तु द्व्यणुकादेस्तदभावात् । नहि त्वन्मते-
ऽपि संभवतीदं परमाणौ महत्त्वाभावात् ।

बौद्धपक्षमुत्थाप्य खण्डयति 'नच' इत्यारभ्य 'दृश्यानुपादानत्वात्' इत्यन्तेन । तदानीं कार्योत्पत्तिकाले । अदृश्यपरमाणुपुञ्जात् दर्शना-नर्ह ( प्रत्यक्षायोग्य ) परमाणुसमुदायात् । दृश्यपरमाणुपुञ्जस्य प्रत्यक्षार्हपरमाणुसमुदायस्य । उत्पन्नत्वात् न प्रत्यक्षत्वे विरोधः 'अयं घट' इति प्रत्यक्षप्रतीतेर्नानुपपत्तिरिति भावः । अत्र हेतुमाह— 'दृश्यस्य दृश्यानुपादानात्' इति । कार्यधर्मस्य कारणधर्मानुरोधि-त्वमित्यभिप्रायः सिद्धान्तिनः । वैपरीत्ये बाधकमुपन्यस्यति अन्य-थेति । अन्यथा अदृश्यस्य दृश्योत्पादकत्वस्वीकारे । चक्षुरूष्मा-दिसन्ततेः चक्षुरिन्द्रियं, ऊष्मा धर्मांशः तयोः सन्ततेः समाना-स्यापि दृश्यत्वप्रसङ्गात् साक्षात्कारयोग्यतापत्तेः । अदृश्यस्य दृश्योपादान-त्वात् तदा चक्षुरिन्द्रियस्य उष्मणश्चापि चाक्षुषः साक्षात्कारः स्यात् न तु तथा दृश्यते तस्माददृश्यं न दृश्योपादानमित्यर्थः ।

पुनराशङ्क्य समाधत्ते 'नच' इत्यादिना । अतितप्ततैलाद्या-वित्यपरार्धं निगदव्याख्यात ।

कटाहस्थतैलघृतादौ पूरिकापर्पटादिपरिपाचनकाले तत्रा-दृश्यो वह्निर्भवति यतो ज्वालादिरूपे दृश्यवह्न्युत्पत्तिर्भवने पर्यवसा-

द्रव्यमपि द्रव्योपादानमिति पूर्वपक्षयितुराशयः । तदन्तःपातिभिः अतिसूक्ष्मैरन्तःपातिभिः । स्वभावात् कारणापेक्षयाऽविद्यमानत्वात् । अन्तःपातिनो द्रव्यस्य दहनस्पर्शावयवाः नैव द्रव्यभूताः. द्रव्यभूतस्य स्थूलस्य चोद्धारम्पत्तिर्नैवद्रव्य द्रव्योपादानमिति सिद्धान्तिनोऽभिप्रायः

सिद्धान्ती पुनराक्षिप्य समाधत्ते 'नच' इत्यादिना । द्व्यणुकस्य न प्रत्यक्षमतोऽदृश्यं सत् भवति, तत उत्पन्नस्य त्रसरेणोः प्रत्यक्षमिति त्रसरेणुर्दृश्यः, एवञ्च अदृश्यादपि दृश्योत्पत्तौ अवश्यं न दृश्योपादानमितिचद्वैयाथिकोऽसङ्गत इत्याक्षेप्तुराकूतकम ।

महत्त्वोद्भूतरूपादिकारणसमुदायवत्वं दृश्यत्वं तद्भिन्नत्वमदृश्यत्वमिति दृश्यादृश्यत्वयोः विवेकः त्रसरेणौ महत्त्वादिकं तेनाऽसौ प्रत्यक्षः (दृश्यः) द्व्यणुके तु न महत्त्वादिकं ततश्च दृश्य (प्रत्यक्ष) स्यात् तस्मात् दृश्यत्वं (दर्शनयोग्यता) अदृश्यत्वं (अदर्शनयोग्यता) कस्यचित्पदार्थस्य स्वाभाविको धर्मः (स्वरूपसम्बन्धावच्छिन्नोधर्मः) किन्तु महत्त्वादिकारणकलापहेतुक दृश्यत्वादिकं बोध्यम । आदिना आलोकादि परिग्रहः । बौद्धमते तु परमाणुपुञ्जे महत्त्वादिकारणकलापाभावात् कथं प्रत्यक्षत्वं स्यात् । एवञ्च तजन्यस्य घटादेरपि प्रत्यक्षतानापत्तौ 'अयं घटः' 'घटमानय' इत्यादिलौकिकव्यवहारविलोपो बौद्धमतेऽनिवार्य इति नैयायिकस्य हृदयम । अक्षराणि तु स्पष्टार्थानि ।

कटाद्दर्शनेलग्नाद्यापि दृश्य एव यदि नैवदृश्यं दृश्यैरेव चोद्भूतावयवैः स्थूलस्य चोत्पत्तिः स्यात् अन्यथा उत्पद्यमानो चहिरपि दृश्यो (चाक्षुषप्रत्यक्षयोग्यः) न भवेत् इति सिद्धान्तिनोऽभिप्रायः । पुनराक्षिप्य समाधत्ते नचादर्शनेनेति । अक्षराणि स्पष्टानि । दृश्यत्वमदृश्यत्वञ्च न कस्यचित्पदार्थस्य स्वाभाविकं (स्वरूपसम्बन्धावच्छिन्नः) धर्मः किन्तु यत्र महत्त्वोद्भूतरूपादिकारणसमुदायः तत्र दृश्यत्वं (प्रत्यक्षसाक्षात्कारयोग्यता) यत्र तु न तथा तत्र अदृश्यत्वं बोध्यम, त्रसरेणौ महत्त्वमुद्भूतरूपञ्च वर्तते अतोऽसौ दृश्यः द्व्यणुके

तु न तथा तत्र महत्त्वोद्भूतरूपादि कारणाभावात् । नन्वेवं परमाणो-रपि पुञ्जावस्थायां दृश्यत्वमितरथा तु अदृश्यत्वमिति, का क्षतिरित्या शङ्कायां ग्रन्थान्तरमाह—नचेति । तव बौद्धमते नेयमादृशी दृश्यत्वा-दृश्यत्वव्यवस्था यत परमाणौ न महत्त्वं नाप्युद्भूतरूपादिकम् ।

इत्थं चावयविसिद्धौ तेषामुत्पादविनाशयोः प्रत्यक्ष-सिद्धत्वादनित्यत्वम् । तेषां चावयवावयवधारायाः अनन्तत्वे मेरुसर्षपयोरपि साम्यप्रसङ्गः। अतः क्वचिद्विश्रामो वाच्यः । यत्र-तु विश्रामस्तस्यानित्यत्वेऽसमवेतभावकार्योत्पत्तिप्रसङ्ग इति तस्य नित्यत्वम् । महत्परिमाणतारतम्यस्य गगनादौ विश्रान्तत्वमि-वाणुपरिमाणतारतम्यस्यापि क्वचिद्विश्रान्तत्वमस्तीति तस्य पर-माणुत्वसिद्धिः । नच त्रसरेणावेव विश्रामोऽस्त्विति वाच्यं; त्रसरेणुः सावयवः चाक्षुषद्रव्यत्वात् पटवदित्यनुमानेन तदव-यवसिद्धौ, त्रसरेणोरवयवाः सावयवाः महदारम्भकत्वात् कपा-लवदित्यनुमानेन तदवयवसिद्धेः । नचेदमप्रयोजकम्, अप-कृष्टमहत्त्वं प्रत्यनेकद्रव्यत्वस्य प्रयोजकत्वात् । नन्वेवं क्रमेण तदवयवधारापि सिद्ध्येदिति वाच्यम्; अनवस्थाभयेन तदसिद्धेरिति ॥

इत्थञ्चेति—उक्तरीत्या, पर्यात् परमाणौ महत्त्वाद्यभावात् परमाणुपुञ्जस्य प्रत्यक्षासिद्धं ततोऽतिरिक्त एव घटाद्यवयवी पदार्थ-स्तच्चानित्य यज्जन्य तदनित्यमिति व्याप्ते । तेषामिति—घटाद्यवय-विनामित्यर्थं । अवयवधारायाः अवयवावयवस्य । अनन्तत्वे सद्भावशून्यत्वे । मेरुसर्षपयोः परस्परमत्यन्तविलक्षणपरिमाणवतो-

रपि । साम्यप्रसङ्गः परिमाणतारतम्याभावप्रसङ्गः । अयमभिसन्धिः—
यदि मेरोर्महापर्वतस्य अवयवविभागा क्रियेरन्, अथ च ततोऽत्यन्त-
निकृष्टस्य सर्षपबीजस्यापि अवयवा विभज्येरन् परमुभयो क्वापि
अवयवविभागविश्रान्तिर्न स्यात् तदाऽवश्यं स्वीकर्तव्यं भवेद् यदु-
भयोः परिमाणकारणीभूता अवयवसङ्ख्या तुल्यैव, अवयवसङ्ख्या-
साम्ये च उभयोः परिमाणसाम्ये सत्यापत्ति, नत्वेव दृश्यते तस्माद-
वयवधाराया क्वचिद् विश्रान्तिरवश्य वाच्या ।

नन्वस्तु क्वचिद्विश्राम परं विश्रामाश्रयो नित्यो निरवयवश्चेति
किमत्र मानमित्यत आह—यत्रास्त्विति । असमवेतेति—असमवेतश्च
सद्भावकार्यमिति कर्मधारय । इदमत्राकूतम्—अवयवधारायां यो
विश्रामस्याश्रय, असौ चेदनित्य तर्हि तस्य किमपि समवायिकारणम्
वक्तव्यम्, अन्यथा भावकार्योत्पत्तिर्न स्यात्, नित्यश्चेत् स एवास्माकं
परमाणु, ततोऽतिरिक्तो घटाद्यवयवी अनित्य इति परमाणुपुञ्जवादी
बौद्ध. पराहत ।

अत्रैव युक्त्यन्तरमाह—महत्परिमाणेति । तारतम्यं न्यूना-
धिकभाव. । त्रसरेण्वारभ्य आकाशपर्यन्त महत्परिमाणस्य न्यूना-
धिकभावो विश्रान्तः सर्वोत्कृष्टमहत्परिमाणस्य परा काष्ठा आकाशादिः,
एवमामलकसर्षपादिकमारभ्याणुपरिमाणस्यापि क्वचिद्विश्रामोऽवश्यं स्वी-
कार्यः समानन्यायात्, यश्चाणुपरिमाणस्य चरमोऽवधिः यतो न
किमप्यणु स एव परमाणु । उक्तञ्च 'न प्रलयोऽणुसद्भावात्' (४।
२।१६) सूत्रे न्यायभाष्ये 'यस्मान्नाल्पतरमस्ति, य. परमोऽल्प-
स्तत्र निवर्तते, यतश्च नाल्पीयोऽस्ति त परमाणु प्रचक्ष्महे' इति
संक्षेप. ।

ननु त्रसरेणुरेव परमाणुर्मन्यतां किमत' परं कल्पनया इत्या-
शङ्कमानं प्रति पूर्वोत्तरपक्षविधया पद्यानि 'नच' इत्यादि । त्रसरेणु-
रपि सावयव., तदवयवो द्व्यणुकमपि सावयवमिति द्वाभ्यामनुमा-

नाभ्यां साधित, ततश्च त्रसरेणु तदवयवश्चापि न परमाणुः किन्तु द्व्यणुकावयव एव परमाणुरितिसिद्धान्त ।

'चाक्षुष सत्सावयव' मिति प्रथमप्रयोगे व्याप्तिः, यथा त्रसरेणोः सावयवतासिद्धि । 'यो महदवयव' (महत्परिमाणवतः कार्यस्यारम्भकोऽवयवः) असावपि सावयव.' इति द्वितीयप्रयोगे व्याप्तिः, यथा द्व्यणुकस्यापि सावयवता निराबाधा ।

ननु—अप्रयोजकमिदमनुमानं यत् त्रसरेणोः सावयवतासाधकमित्याशङ्कमानम्प्रति अप्रयोजकताशङ्कावारणाय प्रभाति 'नच' इत्यादि । अप्रयोजकम् अनुकूलतर्करहितमित्यर्थः ।

अनंत्यपात्=के पक्षे चाक्षुषद्रव्यत्वं हेतुरस्तु सावयवत्वं साध्य माभूत् विपक्षे बाधकतर्काभावादित्याक्षेपः ।

यदि सावयवत्वं न स्यात् तदा चाक्षुषद्रव्यत्वमपि न स्यात् अयमेव विपक्षे बाधकस्तर्कः (नहि चाक्षुषद्रव्यत्वाभाववानाकाशादिः सावयवः) ।

अथ भाव.—'त्रिभिर्द्व्यणुकैरेकं त्र्यणुकमारभ्यते' इत्यासित्यायनय, तस्मादनेकावयवविजन्यद्रव्यत्वेन त्र्यणुके अपकृष्टमहत्त्वमुत्पद्यते, अपकृष्टमहत्त्वं प्रत्यनेकावयवविजन्यद्रव्यत्वस्य प्रयोजकत्वं (हेतुभावो) यत । यदि तु त्र्यणुके चाक्षुषद्रव्यत्वं स्वीक्रियते, नच सावयवत्वं, तदा अपकृष्टमहत्त्वानेकावयवविजन्यद्रव्यत्वयोः कार्यकारणभावभङ्गप्रसङ्ग एव स्यात्, तस्मात् त्र्यणुके सावयवत्वमकामेनाप्यभ्युपेयम् ।

अथ त्रसरेणोरवयवे द्व्यणुक एव अवयवधाराया विश्रामः स्यादित्युच्यते? तदपि न, यो महदारम्भकोऽवयवः स घटाद्यारम्भककपालादिवत्सावयव एव भवति ननु निरवयवः, अस्ति च द्व्यणुके महत्त्रसरेणोरारम्भकत्वम् । ननु त्र्यणुकवद् द्व्यणुकेऽपि द्व्यणुका- [illegible]' इत्यनुमानेन द्व्यणुकावयवानामपि सावयवता स्यादित्येवमेवोत्तरोत्तरमवयवधाराविश्रान्तिर्न

मवेदिति चेद् न, द्व्यणुके महत्त्वाभावात् द्व्यणुकावयवा न महदारम्भका । 'द्वाभ्यां परमाणुभ्यामेकं द्व्यणुकमारभ्यत' इति सिद्धान्तेन द्व्यणुकमनेकावयवजन्यं न तु अनेकावयविजन्यं, अनेकावयविजन्यत्वाभावादेव द्व्यणुकेऽणुत्वमहत्त्वमेव न कुतो महत्त्वमिति हृदि कृत्वा 'न चैव क्रमेण तदवयवधारापि सिध्येद्' इत्याद्युक्तम् । एवञ्च द्व्यणुकावयवो निरवयव एवितव्य स एव परमाणु अणुपरिमाणरूप परोवधि ।

**सा च त्रिधा भवेद्देहमिन्द्रियं विषयस्तथा ॥३७॥**

**सा चेति** । सा कार्यरूपा पृथिवी त्रिविधेत्यर्थः । शरीरेन्द्रियविषयभेदादित्यर्थः ॥ ३६ ॥ ३७ ॥

सा चेतीति स्पष्टम् । उक्तसर्वग्रन्थमूलन्तु—'पृथिवीत्वाभिसम्बन्धात्पृथिवी' इत्युक्ता 'नित्याऽनित्या च' इतिचाभिधाय 'त्रिविधं चास्याः कार्यं शरीरेन्द्रियविषयसञ्ज्ञकम्' इति प्रशस्तोक्तम् ।

तत्र देहमुदाहरति—

**योनिजादि भवेद्देहम् ।**

योनिजमयोनिजं चेत्यर्थः । **योनिजमपि** द्विविधं जरायुजमण्डजं च । जरायुजं मानुषादीनाम् । अण्डजं सर्पादीनाम् । अयोनिजं स्वेदजोद्भिज्जादिकम् । स्वेदजाः कृमिदंशाद्याः । उद्भिज्जास्तरुगुल्माद्याः । नारकिणां शरीरमप्ययोनिजम् । नच मानुषादिशरीराणां पार्थिवत्वे किं मानमिति वाच्यं, गन्धादिमत्त्वस्यैव प्रमाणत्वात् । न च क्लेदोष्मादेरुपलम्भादाप्यत्वादिकमपि स्यादिति वाच्यं, तथा सति जलत्वपृथिवीत्वादिना संकरप्रसङ्गात् । नच तर्हि जलीयत्वादिकमेवास्तु न तु पार्थिव-

स्वामिनि वाच्यं, क्लेदादीनां विनाशेऽपि शरीरत्वेन प्रत्यभिज्ञा-
नाद्गन्धाद्युपलब्धेश्च पृथिवीत्वासिद्धेः । तेन पार्थिवादिशरीरे
गन्धादीनां निमित्तत्वमात्रं बोध्यम् । शरीरत्वं तु न जातिः
पृथिवीत्वादिना सांकर्यात्, किंतु चेष्टाश्रयत्वम् । वृक्षादीनामपि
चेष्टासत्त्वान्नाव्याप्तिः ।

योनिजमिति—शुक्रशोणितयोः परस्परसंयोगजन्यं योनिजम्
तद्भिन्नमयोनिजम् । जरायुजमिति—गर्भवेष्टनचर्मपुटकं जरायु ।
अयोनिजमिति—तथाच पारमर्षं सूत्रम्—तत्र शरीरं द्विविधं
योनिजमयोनिजञ्च । वै० । २ । ५ । एतस्मिन्विषये वेदोऽपि
प्रमाणम्—तथाहि—विश्वान्देवाञ्जगत्याविवेश । तेन चाक्लृप्त
ऋषयो मनुष्याः । ऋग्वे० अष्ट० ८ । ७ । व० १८ । ५ ।
तस्मादश्वा अजायन्त ये के चोभयादतः । गावो ह जज्ञिरे तस्मात्
तस्माज्जाता अजावयः । ऋ० अष्ट० ८ । ४ । व० १८ । १० ।
आदिकमिति—आदिना देवर्षीणां ग्रहणम् । 'देवर्षीणां शरीरं
धर्मविशेषसहितेभ्योऽणुभ्यो जायते' इति प्रशस्तम् । नारकिणामिति
अधर्मविशेषसहितेभ्योऽणुभ्यो नारकिणां शरीराण्यपि तथैव क्षुद्र-
जन्तूनामपि । मानुषादीनामिति—आदिना पशुमृगादीनां परिग्रहः ।
सर्पादीनामित्यादिना विहङ्गमादिपरिग्रहः । स्वेदजमुदाहरति
कृमिदंशाद्या इति ।

यत्तु 'योनिं विना न शरीर' मिति सर्वाणि शरीराणि योनि-
जानीति वचनं तत्र 'योनि' पदं कारणमात्रपरं द्रष्टव्यम् ।

मानुषादिशरीरस्य पार्थिवत्वं साधयितुं क्लेदेत्यादि प्रमाणानि ।
क्लेदोष्मादेरिति—क्लेदः द्रवत्वं स्पष्ट इति यावत् ऊष्मा पाकविशेष-

श्रोप्यत्वमितियावत्। सङ्करप्रसङ्गादिति—पृथिवीत्वं विहाय शरीरत्वं जलादित्रितयशरीरेषु, शरीरत्वं विहाय पृथिवीत्वं घटादौ, मानुषशरीरे तु पृथिवीत्वशरीरत्वयोर्द्वयोः समावेश इति जातिबाधकसङ्करदोषभयात्। पार्थिवशरीरे क्लेदादिप्रतीतिस्तु जलादिभागस्योपष्टम्भकत्वेनाप्युपपद्यते तेन तत्र आप्यत्वादिकमपि नेतिभावः।

शरीरत्वं न जातिरिति—अस्यार्थः पूर्वग्रन्थार्थेन गतार्थः। शरीर लक्षयति—चेष्टाश्रयत्वमिति। चेष्टात्व जातिविशेषः चेष्टम इति प्रत्यक्षप्रतीतिसिद्धः। तथाच पारमर्षं सूत्रम्—चेष्टेन्द्रियार्थाश्रयः शरीरम्। न्या० १।१।११।

न च वृक्षादेः शरीरत्वे किं मानमिति वाच्यम्, आध्यात्मिकवायुसंबन्धस्य प्रमाणत्वात्। तत्रैव किं मानमिति चेद्भग्नक्षतसंरोहणादिना तदनुमानात्। यदि हस्तादौ शरीरव्यवहारो न भवति तदान्त्यावयवित्वेन विशेषणीयम्। न च यत्र शरीरे चेष्टा न जाता तत्राव्याप्तिरिति वाच्यं, तादृशे प्रमाणाभावात्।

अध्यात्मिकेति—आध्यात्मिकः प्राणाख्यो वायुः। भग्नक्षतेति—भग्नक्षतयोर्विभागाविशिष्टावयवयोः संरोहणादिकम्, आदिना वृद्धिपरिग्रहः।

अयमाशयः—वृक्षादि शरीरं आध्यात्मिकवायुसम्बन्धवत्त्वात् मानुषशरीरवत्। वृक्षादिराध्यात्मिकवायुसम्बन्धवान् भग्नक्षतसंरोहादिमत्त्वात् अस्मदादिशरीरवत् इत्यनुमानाभ्यां वृक्षादीनां शरीरत्वसिद्धिः।

आगमोऽप्यत्र प्रमाणम्—'शारीरजैः कर्मदोषैर्याति स्थावरतां नरः' मनु० इति।

ननु—'चेष्टाश्रयः शरीर'मिति लक्षणं हस्तपादाद्यवयवेऽपि वर्तते न तु तत्र शरीरव्यवहार इत्याशङ्कायामाह—अन्त्यावयवित्वेनेति। 'अन्त्यावयवित्वे सति चेष्टाश्रयः शरीर'मिति लक्षणं कर्तव्यमित्यर्थः। द्रव्यान्तरानारम्भकत्वमन्त्यावयवित्वम्। एवञ्च घटादावतिव्याप्तिवारणाय चेष्टाश्रयत्वम्। हस्तपादाद्यवयवेऽतिव्याप्तिवारणाय अन्त्यावयवित्वम् इति बोध्यम्।

अथवा चेष्टावदन्त्यावयविवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमन्त्यावयविमात्रवृत्तिचेष्टावद्वृत्तिजातिमत्त्वं वा तत्। मानुषत्वचैत्रत्वादिजातिमादाय लक्षणसमन्वयः। न च नृसिंहशरीरे कथं लक्षणसमन्वयः, तत्र नृसिंहत्वस्यैकव्यक्तिवृत्तितया जातित्वाभावाज्जलीयतैजसशरीरवृत्तितया देवत्वस्यापि जातित्वाभावादिति वाच्यं, कल्पभेदेन नृसिंहशरीरस्य नानात्वेन नृसिंहत्वजात्या लक्षणसमन्वयात्।

आशङ्क्य समाधत्ते—नच यत्रेति। मृतशरीरे चेष्टाया अभावेऽपि शरीरव्यवहारस्तत्रानुक्तलक्षणस्याव्याप्तौ कल्पान्तरमाह—अथवेति। अयमर्थः—चेष्टावांश्चासावन्त्यावयवी तद्वृत्तिर्या द्रव्यत्वस्य साक्षाद्व्याप्या जातिर्मनुष्यत्वचैत्रत्वादिका तादृशजातिमत्त्वं मृतशरीरेऽपि वर्तत इति नाव्याप्तिः।

ननु—अत्र लक्षणे 'द्रव्यत्वव्याप्यजाति' पदेन 'पृथिवीत्व'मपि धर्तुं शक्यते तादृशजातिमत्त्वञ्च घटादावपीति शरीरलक्षणस्य घटादौ गतत्वमित्याशङ्क्याह—अन्त्यावयवीति। अन्त्यावयविमात्रवृत्तिर्या घटाद्यवृत्तिजातिः तादृशजातिमत्त्वमित्यर्थः। पृथिवीत्वस्य न केवलमन्त्यावयविवृत्तित्वं किन्तु आरम्भकपार्थिवावयवेष्वपि वर्तते मनुष्यत्वादि-

किन्तु अन्त्यावयविमात्रवृत्ति चेष्टावद्वृत्ति चेति न कश्चिद्दोष इत्यर्थः। नच नृसिंहेति स्पष्टार्थो ग्रन्थः किन्तु जलीयतैजसेत्यादिग्रन्थस्यायमर्थः—

देहत्वं विहाय तैजसत्वस्य सुवर्णादिषु तैजसत्वं विहाय देहत्वस्य जलीयदेहेषु वरुणादिषु, तदुभयसमावेशः तैजसदेहेषु सूर्यादिषु इति साङ्कर्यं देहत्वस्य जातित्वबाधकम्। कल्पभेदेनेति समाधानग्रन्थः। नृसिंहत्वं जातिरेवेति नृसिंहावतारशरीरेऽपि न सङ्कर्यमित्यर्थः।

## इन्द्रियं घ्राणलक्षणम्।

इन्द्रियमिति। घ्राणेन्द्रियं पार्थिवमित्यर्थः। पार्थिवत्वं कथमिति चेदित्थम् *घ्राणेन्द्रियं पार्थिवं रूपादिषु मध्ये गन्धस्यैव व्यञ्जकत्वात्। कुङ्कुमगन्धाभिव्यञ्जकगोघृतवत्। न च दृष्टान्ते स्वकीयरूपादिव्यञ्जकत्वादसिद्धिरिति वाच्यं, परकीयरूपाद्यव्यञ्जकत्वस्य तदर्थत्वात्। नच नवशरावगन्धव्यञ्जकजलेऽनैकान्तिकत्वमिति वाच्यं, तस्य सक्तुरसाभिव्यञ्जकत्वात्। यद्वा परकीयेति न देयं वायुपनीतसुरभिभागस्य दृष्टान्तत्वसंभवात्। न च घ्राणेन्द्रियसन्निकर्षस्य गन्धमात्र-

---

* घ्राणेन्द्रियत्वावच्छिन्नोद्देश्यतानिरूपितसमवायतादात्म्यान्यतरसम्बन्धावच्छिन्नपार्थिवत्वावच्छिन्नपार्थिवनिष्ठविधेयताकानुमितित्वावच्छिन्नम्प्रति पार्थिवनिष्ठव्याप्तिप्रकारतानिरूपिता या रूपादिमध्यविशिष्टगन्धीयाभिव्यञ्जकत्वावच्छिन्नप्रकारता, तादृशप्रकारतानिरूपिता या घ्राणेन्द्रियत्वावच्छिन्ना विशेष्यता, तादृशविशेष्यताशालिनिश्चयः परामर्शत्वेन हेतुः 'घ्राणेन्द्रियं पार्थिवं' मित्याकारानुमितिम्प्रति विशिष्टकारणमित्येवंरीत्या सर्वत्रानुमानेषु कार्यकारणभावालापनं ज्ञेयम्।

व्यञ्जकत्वात् तत्र व्यभिचार इति वाच्यं, द्रव्यत्वेसतीति विशेषणात् ।

इन्द्रियमितीति स्पष्टम् । इन्द्रियसामान्यलक्षणन्तु—आत्माश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वमिन्द्रियत्वम् । एतच्चाग्रेऽपि मूले स्फुटीभविष्यति । घ्राणेन्द्रियस्य पार्थिवत्वसाधकमनुमानमाह घ्राणेन्द्रियमिति । यत्खलु रूपादिषु मध्ये गन्धस्यैवाभिव्यञ्जकं तत्खलु पार्थिवं दृष्टं यथा कुङ्कुमगन्धाभिव्यञ्जकगोघृतमिति प्रमितव्याप्तिसिद्धिः ।

हेतोरसिद्धिमाशङ्क्य निराकरोति 'नच' इत्यारभ्य 'तद्र्थत्वात्' इत्यन्तेन । दृष्टान्ते कुङ्कुमगन्धाभिव्यञ्जकं गोघृतं न गन्धमात्राभिव्यञ्जकं किन्तु स्वरूपाभिव्यञ्जकमपीत्ययं हेतुः स्वरूपासिद्धः यस्य हेतोः स्वरूपं ( हेतुतावच्छेदकधर्मः ) पक्षासिद्धं नासौ साध्यसाधनायालमित्याक्षेप्तुराशय ।

'रूपादिषु मध्ये गन्धस्यैवव्यञ्जकत्वात्' अस्य हेतो परकीयरूपाद्यव्यञ्जकत्वमर्थः । तेन दृष्टान्ते विविक्ते गोघृते स्वरूपव्यञ्जकत्वे सत्यपि परकीयरूपव्यञ्जकत्वं, अर्थात् स्वभिन्नकुङ्कुमादिरूपव्यञ्जकत्वं नास्तीति हेतु सिद्ध एव नासिद्ध इति समाधानुर्हृदयम् । पुनर्हेतोर्व्यभिचारित्वं शङ्कते समाधत्ते च 'नच' इत्यादिना । यस्यायमर्थः—यो हेतु साध्याभावाधिकरणेऽपि वर्तते असावनैकान्तिको व्यभिचारी वेत्युच्यते ।

प्रकृते च साध्यं पार्थिवत्वं, हेतुश्च रूपादिषु मध्ये गन्धस्यैवाभिव्यञ्जकत्वात् इति, पर यत्र नीरे पराग जल प्रक्षिप्यते तदा तेन नवपरागगतो गन्धोऽभिव्यज्यते, जलन्तु न पार्थिवम् अस्तितु तत्र गन्धाभिव्यञ्जकत्वमपि तस्मादुक्तो हेतु पार्थिवत्वरूपसाध्याभाववति जले वर्तमानत्वादनैकान्तिक ।

अस्योत्तरम्—यद्यप्येवं तथापि तज्जलं न केवलं गन्धमभिव्यनक्ति किन्तु सक्तुरसमपि व्यनक्ति तस्मात्तादृशजलस्य गन्धमात्राभिव्यञ्जकत्वाभावान्न व्यभिचारः ।

लाघवमभिप्रेत्याह—यद्वेति । अयंत् उक्तेऽनुमाने 'घ्राणीयं' त्यादिविशेषणं नोपादेयं घृतस्य तादृशं न दृष्टान्तीकर्त्तव्यम् किन्तु 'वायूपनीतसुरभिभागवत्' इति दृष्टान्तो देयः । वायूपनीतसुरभिभागस्तु रूपादिषु मध्ये केवलं गन्धस्यैवाभिव्यञ्जकः अतस्तेन दृष्टान्तेन सकलङ्कोऽपगम इतिभावः ।

ननु—घ्राणेन्द्रियसन्निकर्षोऽपि केवलं गन्धस्याभिव्यञ्जकः पवनश्चातन्मन्निकर्ष इत्येवं व्यभिचारः इत्याशङ्कावारणाय 'नच' इत्यादि 'विशेषणात्' इत्यन्तमुक्तम् । द्रव्यत्वे सति रूपादिषु मध्ये गन्धस्यैवाभिव्यञ्जकत्वात् इति द्रव्यत्वघटितो हेतुर्वक्तव्यः । यद्यपि घ्राणेन्द्रियसन्निकर्षो गन्धमात्राभिव्यञ्जकः परमसौ न द्रव्यं किन्तु संयोगरूपत्वात् गुण इतिभावः ।

विषयो द्व्यणुकादिश्च ब्रह्माण्डान्त उदाहृतः ॥३८॥

विषय इति । उपभोगसाधनं विषयः । सर्वमेव हि कार्यजातमदृष्टाधीनम्, यत्कार्यं यददृष्टाधीनं तत्तदुपभोगं साक्षात्परंपरया वा जनयत्येव । नहि बीजप्रयोजनाभ्यां विना कस्यचिदुत्पत्तिरस्ति । तेन द्व्यणुकादि ब्रह्माण्डान्तं सर्वमेव विषयो भवति । शरीरेन्द्रिययोर्विषयत्वेऽपि प्रकारान्तरोपन्यासः शिष्यबुद्धिवैशद्यार्थः ॥ ३८ ॥

उपभोगसाधनमिति —सुखदुःखान्यतरसाक्षात्कार उपभोगः यस्तत्प्रयोजकः स सर्वोऽपि विषय इत्यर्थः एवञ्च सर्वोऽपि गन्धः,

धान् विषयः साक्षात्परम्परया च भोगहेतुः पार्थिवविषय इतिफलितम्। अदृष्टस्य कार्यमात्रम्प्रति साधारणकारणत्वादाह—सर्वमेवेति ननु-सर्वस्यैवोपभोगसाधनत्वेन विषयत्वे शरीरेन्द्रिययोः पृथक् विभागोऽयुक्त इत्यत आह—शरीरेन्द्रिययोरिति । शिष्टं स्पष्टम् । इदन्तु बोध्यम्—गन्धवत्त्वे सति भोगायतनत्वं पार्थिवशरीरत्वम्, गन्धवत्त्वे सति गन्धज्ञानकरणत्वं पार्थिवेन्द्रियत्वम्, गन्धवत्त्वे सति उपभोगसाधनत्वं पार्थिवविषयत्वम्, एवं दिगन्यत्रापि जलीयादिशरीरादिषु अनुसरणीया ।

इति पृथिवीग्रन्थः ।

---

जलं निरूपयति—

**वर्णः शुक्लो रसस्पर्शौ जले मधुरशीतलौ ।**
**स्नेहस्तत्र द्रवत्वं तु सांसिद्धिकमुदाहृतम् ॥ ३९ ॥**

स्नेहसमवायिकारणतावच्छेदकतया जलत्वजातिः सिद्ध्यति । यद्यपि स्नेहत्वं नित्यानित्यवृत्तितया न कार्यतावच्छेदकं तथापि जन्यस्नेहत्वं तथा बोध्यम् । अथ परमाणौ जलत्वं न स्यात्तत्र जन्यस्नेहाभावात्, नित्यस्य च स्वरूपयोग्यत्वे फलावश्यम्भावनियमादिति चेन्न, जन्यस्नेहजनकतावच्छेदकतया जन्यजलत्वजातेः सिद्धौ, तदवच्छिन्नजनकतावच्छेदकतया जलत्वजातिसिद्धेः ।

पद्यमूले—वर्णः शुक्ल इति । 'सर्वं वाक्यं सावधारणम्' यथा 'अब्भक्षो वायुभक्ष' इतिन्यायेन अप एव भक्षयति वायुमेव भक्षयतीत्यर्थो लभ्यते तथैवात्रापि जले शुक्ल एव वर्णः, मधुर एव रसः, शीत एव स्पर्शः, जल एव स्नेह इति बोध्यम् । अत्राचार्य सूत्रम् रूपरसस्प-

शेषस्य आपो द्रवाः स्निग्धाः०। तत्र जलद्रवत्वस्य सांसिद्धिकस्वा-
भाविकमुदाहरणमुक्तमिति यावत्। एवञ्च अभास्वरशुक्लमात्ररूपवत्त्वम्
शीतमात्रस्पर्शवत्त्वं, स्नेहवत्त्वम्, सांसिद्धिकद्रवत्ववत्त्वमिति जलस्या-
नेकानि लक्षणानि बोध्यानि।

जलत्वजातौ प्रमाणमाह—स्नेहेति। अयमर्थः—समवाय
सम्बन्धावच्छिन्नस्नेहत्वावच्छिन्नस्नेहनिष्ठकार्यतानिरूपिता तादात्म्य
सम्बन्धावच्छिन्ना या जलनिष्ठा समवायिकारणता, सा किञ्चिद्धर्मा
वच्छिन्ना, कारणतात्वात् घटजनककार्यतानिरूपितदण्डवृत्तिकारणता-
वत् इति जलत्वजातावनुमानं मानं यथा पूर्वं द्रव्यत्वजातावुक्तम्।

नित्यं जलपरमाणौ स्नेहो नित्य इति नित्यस्नेहवृत्ति स्नेहत्व
धर्मो न *कार्यतावच्छेदकः तत्कथं स्नेहनिष्ठकार्यतया जलत्वजाति-
सिद्धिरिति यदुक्तं यद्यपीति। समाधत्ते—जन्यस्नेहत्वमिति।
द्व्यणुकादिनिष्ठस्नेहस्य जन्यत्वात् तदादाय स्नेहत्वं कार्यतावच्छेद-
कमपि, तेन जलत्वजातिसिद्धौ बाधाभावः। एवञ्च प्रदर्शितानुमाने
'स्नेह' पदात्पूर्वं 'जन्य' पदनिवेशः कार्य इति भावः।

परमाणौ ( जलपरमाणौ ) जन्यस्नेहस्याभावेन जलत्वासिद्धि
( कारणतावच्छेदकधर्मासिद्धि ) माशङ्कते 'अथ' इति।

ननु—यथा अरण्यस्थितो दण्डो न घटादिकार्योत्पादकः,
तथापि तत्र दण्डत्वं कारणतावच्छेदकं जातिरस्त्येव एवं परमाणौ
जन्यस्नेहाभावेऽपि तस्य स्नेहोत्पत्तियोग्यतावत्त्वात् 'जलत्वं' जाति-
रस्त्येवेति प्रतिपद्यते—तस्य नित्यस्य स्वरूपयोग्यत्वं इति। यदि
परमाणौ स्नेहोत्पत्तियोग्यता तदा भवितव्यं तत्र जन्यस्नेहेनेति हृदय-
यानाह—'फलावश्यंभावनियमात्' इति। सिद्धान्तं प्रदर्शयितुमाह—
'इति चेन्न' इति। जन्यस्नेहजनकतेति—जन्यो यः स्नेहः, तज्जनकं

---

* कार्यतावच्छेदकस्य नित्यवृत्ति चेति व्याहतम्।

जन्यजलं, तद्विष्ठा जनकता, ( कारणता ) तदवच्छेदिका जातिर्जन्यजलत्वमित्यर्थः । जन्यजलत्वजातेः जन्यजलमात्रवृत्तिजाते 'तदवच्छिन्ने'ति जन्यजलत्वजात्यवच्छिन्नेत्यर्थः । तथाचायं प्रयोग फलति-समवायसम्बन्धावच्छिन्नजन्यजलत्वावच्छिन्नजन्यजलनिष्ठाजन्यतानिरूपिता तादात्म्यसम्बन्धावच्छिन्ना या शुद्धजलनिष्ठा समवायिकारणता, सा किञ्चिद्धर्मावच्छिन्ना कारणतात्वात् दण्डवृत्तिकारणतावत् ।

पूर्वं जन्यजलनिष्ठकार्यताधर्मेण जन्यजले कारणतामनुमिमीमहे—तेन जन्यजले जलस्य कारणतावच्छेदका जातिरूपो धर्मः सिध्यति, पश्चात् जन्यजलनिष्ठकार्यताधर्मेण नित्यजले (जलपरमाणौ) कारणतानुमानेन, शुद्धजलेऽपि जन्यजातिसिद्धिर्निष्प्रत्यूहेति परमसारः ।

शुक्लरूपमेव जलस्येति दर्शयितुमुक्तं **वर्णः शुक्ल इति ।** ननु शुक्लरूपवत्त्वं लक्षणम् **अथवा** नैमित्तिकद्रवत्ववद्वृत्तिरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वम्, अभास्वरशुक्लेतररूपसमानाधिकरणरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं वा तदर्थः । तेन स्फटिकादौ नातिव्याप्तिः ।

ननु शुक्लरूपवत्त्वमिति । पृथिव्यादावपि शुक्लरूपसत्त्वादतिव्याप्तिः स्यात् तस्मात्'वर्णः शुक्ल' इति न जललक्षणम् किन्तु पृथिव्यादिवत् जलेऽपि शुक्लोवर्णो इत्येव दर्शयितुमुक्तं बोध्यम् ।

इदमपि लक्षणमेवेति प्रकारान्तरेण साधयितुमाह-अथवेति । नैमित्तिकद्रवत्वेति—नैमित्तिकद्रवत्ववती पृथिवी. तेजश्च नैमित्तिकद्रवत्ववत् तत्र अवृत्ति=न वृत्तिर्यस्याः ताहशी या रूपवद्वृत्तिद्रव्यत्वस्य साक्षाद्व्याप्या जाति. अर्थात् जलत्वमेव तद्वत्त्वं 'शुक्लरूपवत्त्वं'पदेन विवक्षितमित्यर्थः । युक्तञ्चैतत् श्रुतिमूलकत्वात्, तथाच

श्रुतिः 'यच्छुक्लं तदपाम्' छां० ६।४।२। एवञ्च शुक्लं रूपमपां स्वाभाविको धर्मः तथैव रसद्रवत्वस्नेहा नैजा गुणाः प्रतिनियता अपर्यनुयोज्या हि वस्तुशक्तिः। स्फटिकाद्यतिव्याप्तिवारणाय कल्पान्तरमाह—अभास्वरेति—अभास्वरं परापकाशकं यच्छुक्लं रूपं, भादेमररूपं नीलपीतादि, भास्वरं शुक्लरूपञ्च, तदसमानाधिकरणं (तदधिकरणाभिन्नाधिकरणक) यद्रूप तादृशरूपवद् जलमेव, तद्वृत्तियां द्रव्यत्वस्य साक्षाद् व्याप्या जातिर्जलत्वं, तादृशजातिमत्त्वं विवक्षितमिति न पृथिव्यादिवृत्तिव्याप्तिरूपो दोष इत्यर्थः।

रसस्पर्शाविति। जलस्य मधुर एव रसः शीत एव स्पर्शः। तिक्तरसवदवृत्तिमधुरवदवृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं तदर्थः तेन शर्करादौ नातिव्याप्तिः। शीतेतरस्पर्शवदवृत्तिस्पर्शवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं तदर्थः। ननु शुक्लरूपवत्त्वमेवोक्तः, कालिन्दीजलादौ नीलिमोपलब्धेरिति चेन्न, नीलजनकतावच्छेदिकायाः पृथिवीत्वजातेरभावाज्जले नीलरूपासंभवात्। कालिन्दीजले नीलत्वप्रतीतिस्त्वाश्रयौपाधिकी। अत एव वियति विक्षिप्ते धवलिमोपलब्धिः।

मधुर एवेति—शर्करादावजलेऽपि मधुररससत्त्वादतिव्याप्ति, तां परिहर्तुं जातिघटितलक्षणमाह—तिक्तरसवदिति। तिक्तरसवती पृथिवी तस्यामवृत्ति यो, मधुररसवति [ जले ] वृत्तिर्धर्मस्तस्या' सा च तादृशी द्रव्यत्वस्य साक्षाद्व्याप्या जाति जलत्वं, तादृशजातिमत्त्व 'मधुररसवत्त्व'पदेन विवक्षितम्। शर्करादौ मधुररससत्त्वेऽपि तिक्तरसवदवृत्तिर्जाति. अर्थात् जलत्व न वर्तते किन्तु ततो विरुद्धः तिक्तरसवद्वृत्ति पृथिवीत्व धर्मो वर्तत इति शर्करादौ नातिव्याप्ति।

जले शुक्लमेव रूपमित्यसहमान शङ्कते 'ननु' इति । कालिन्दी यमुना नदी । समाधत्ते—नेति । यदाश्रित जलं नीलरूप तदाश्रयं । तत्र हेतुमाह—नीलजनकतेति । अयमर्थः—नीलरूपनिष्ठा या जन्यता तादृशजन्यतानिरूपिता या जनकता अर्थात् पृथिवीनिष्ठा कारणता, तदवच्छेदकश्च पृथिवीत्व जातिरूपो धर्मः तदभावात् जले नीलरूपस्यैवासम्भव इति कुतो नीलरूपजलमिति । कथ तर्हि नीलत्वप्रतीतिरित्याह?—नीलत्वप्रतीतिस्त्विति । पृथिवीसम्बन्धेन नीलरूपप्रतीति औपाधिकी ननु स्वाभाविकं नीलरूप यमुनाजल इत्यर्थः ।

अथ जले माधुर्ये किं मानम्, नहि प्रत्यक्षेण कोऽपि रसस्तत्रानुभूयते । नच नारिकेलजलादौ माधुर्यमुपलभ्यत एवेति वाच्यं, तस्याश्रयाधिकरणत्वात् । अन्यथा जम्बीर-रसादावम्लाद्युपलब्धेरम्लादिमत्त्वमपि स्यादिति चेन्न, हरीत-क्यादिभक्षणस्य जलरसव्यञ्जकत्वात् । नच हरीतक्यामेव जलोष्मसंयोगाद्रसान्तरोत्पत्तिरिति वाच्यं, कल्पनागौरवात् । पृथिवीत्वस्याम्लादिजनकतावच्छेदकत्वाच्च जले नाम्लादिकम् । जम्बीररसादौ त्वाश्रयौपाधिकी तथा प्रतीति । एवं जन्यशीत स्पर्शजनकतावच्छेदकं जन्यजलत्वं तदवच्छिन्नजनकतावच्छेदकं तु जलत्वं बोध्यम् । घृष्टचन्दनादौ [illegible] शैत्योपलब्धिश्चन्दना-न्तर्वर्तिशीततरसलिलस्यैव । तेजःसंयोगाज्जले उष्णप्रतीतिरौ-पाधिकी स्फुटैव । तत्र पाकासम्भवात् ॥ •

'स्वसमवायिसंयोगसम्बन्धेन' पार्थिवभागगतं नीलरूप यमुनाजले प्रतीयते ननु नीलरूप तत्र समवेतम्, 'क्व'पदेन नीलरूपं

तस्य समवायि=समवायसम्बन्धेनाधारः पृथिवीभागः, तस्य संयोगो जलेन सहास्तीति परम्परासम्बन्धद्वारा जलाधोवर्त्तमानपार्थिव-भागरूपोपाधिना जले नीलरूपस्य प्रत्ययो भ्रम इति भावः । एवमेव गमकमाह–वियति विक्षेप इति । नीलताप्रतीतिघटकस्योक्तसम्बन्ध-स्य प्रकारो जलप्रक्षेपेण नाशादितिभावः ।

जले मधुररसमाक्षिपति अथेति । नहि प्रत्यक्षेणेति -- रासनप्रत्यक्षेण जले न कस्यचिद्रसस्य प्रत्ययः । यदि द्राक्षेक्षुनारि-केलजलादौ माधुर्योपलम्भात् तत्र मधुर एव रस इत्युच्येत ? तत्राह– आश्रयौपाधिकत्वादिति । पूर्ववत् स्वसमवायिसंयोगसम्बन्धेन पार्थिवभागगतस्यैव मधुररसस्योपलम्भः प्रत्यक्षः स्वाभाविकः । एवमेव परपक्षं बाधकं प्रदर्शयन् स्वपक्षसाधकं तर्कमाह—अन्यथेत्यादिना ।

उक्तमाक्षेपं तिरस्करोति 'इति चेन्न' इत्यादिना । जलेऽनु-द्बुद्धो मधुरो रसो वर्त्तते एव उद्बुद्धरूपतया तस्य प्रतीतिस्तु यदा हरीतकी, आमलकं वा भक्षितं स्यात् तदा ( रसनेन्द्रियवर्त्तिविशिष्ट-मलापनयनेन ) मधुररसस्य स्पष्टः प्रत्ययः ।

आशङ्कय समाधत्ते 'नच' इत्यादिना ।

जलेन सह आस्यगतपार्थिवावयवस्य सम्बन्धेन हरीतक्यामेव रसान्तरमुत्पद्यते ( मधुराख्यम् ) ननु तद्ग्रहणीयमिति शङ्काकर्त्तुरभि-प्रायः ।

कल्पनागौरवान्नैतद्वादराद्दर्तव्यमिति सिद्धान्तिनोऽभिप्रायः । हरी-तक्यामेव रसान्तरोत्पत्तिस्वीकारवादिनो मते कल्पनागौरवप्रकार-श्चायम्—फलादिरूपायां पृथिव्यां यत्र पूर्वरसनाशे रसान्तरोत्पत्ति-र्दृश्यते तत्र विलक्षणतेजःसंयोगः ( पाकविशेषः ) एव हेतुरिति सार्व-भौमो नियमः, यदि तु हरीतकीदृष्टान्तानुरोधेन जलसंयोगोऽपि पृथिवीरसोत्पादकः स्वीक्रियेत तदा अधिककार्यकारणभावस्य कल्पना गुरुभूतैव अर्थात् तत्र संयोगरूप पृथिवीरसस्याद्भक स्वीकृत

(फलत) एव, तस्मात् जलसंयोगोऽप्यन्यः कल्पनीय इति प्रतिवादिमते कार्यकारणभावद्वयकल्पनया गौरवम् । मम सिद्धान्तिनो मते तु जलगतस्यैव मधुररसस्य व्यञ्जिका हरीतकीति नास्ति गौरवम् । अधिकं रामरुद्रादौ निरीक्ष्यं ग्रन्थगौरवभयात्सुकुमारमतीनामनुपयोगान्न बहु प्रपञ्च्यते ।

पृथिवीत्वस्येति—आम्लादिरसनिष्ठा या जन्यता, तादृशजन्यतानिरूपिता या जनकता (पृथिवीनिष्ठा) तदवच्छेदकं पृथिवीत्वं, पृथिव्यामेव ननु जल इति जले नाम्लादिरसस्यावकाशः, अर्थात् पृथिवीत्वसमानाधिकरण एवाम्लादिरसः न तु जलत्वसमानाधिकरणकः ।

कथं तर्हि जम्बीररसादावाम्लरसोपलब्धिरिति ? तत्राह—जम्बीररसादाविति । स्वसमवायिसंयोगसम्बन्धेन पृथिवीगतस्यापि आम्लरसस्य जले प्रत्ययः औपाधिक एव ।

जलत्वजातावनुमानान्तरं प्रमाणमाह—एवमिति । जन्यशीतस्पर्शेति—जन्यशीतस्पर्शनिष्ठा या जन्यता, तन्निरूपिता या जनकता, तदवच्छेदकं जन्यजलत्वम्, एवं जन्यजलनिष्ठा या जन्यता, तन्निरूपिता या जनकता, तदवच्छेदकत्वं शुद्धजलत्वमेव, निरवच्छिन्नाया जनकताया अभावादित्यर्थः ।

ननु शीतस्पर्शवत्त्वं न जललक्षणं चन्दनादिपृथिव्यामपि शैत्यस्पर्शात् घर्षणेन तदुपलब्धेरितीमां शङ्कां परिहर्तुमाह-घृष्टचन्दनादाविति । अर्थः स्पष्टः । पूर्वमुक्तं शीत एव स्पर्श इति तन्साधयति-तेजःसंयोगादिति । 'स्वसमवायिसंयोगसम्बन्धेन' तैजसः एवोष्णस्पर्श जले प्रतीयत इति भावः । तत्र हेतुमाह पाकासम्भवादिति ।

स्नेहस्तत्रेति । घृतादावपि तदन्तर्वर्तिजलस्यैव स्नेहः, जलस्य स्नेहसमवायिकारणत्वात् । तेन जल एव स्नेह इति मन्तव्यम् । द्रवत्वमिति । सांसिद्धिकद्रवत्वत्वं जातिविशेषः

मत्यक्षसिद्धः । तदवच्छिन्नजनकतावच्छेदकमपि तदेवेति भावः तैलादावपि जलस्य द्रवत्वं स्नेहप्रकर्षेण च दहनानुकूल्यमिति वक्ष्यति ॥ ३९ ॥

घृतादावपीति—घृतादिपृथिव्यां यः स्नेह उपलभ्यते सोऽपि जलस्यैव, जलमेव स्नेहसमवायिकारणमितिभावः । पूर्वं जलत्वजातिसिद्धौ प्रदर्शितमिदम् । तदवच्छेदकमपीति—सांसिद्धिकद्रवत्वनिष्ठा या जन्यता, तन्निरूपिता या जनकता, तदवच्छेदकत्वं जलत्वमेवेति भावः । शिष्टं स्पष्टम् । ननु – यदि स्नेहो जलधर्मः कथं तर्हि तस्याग्निप्रज्वलनानुकूलता जलेनाग्नेरुपशमोपलम्भादित्याशङ्कयाह–तैलादावपीति—प्रकृष्टः स्नेहस्तैलादिगतः जलगुणो दहनानुकूलः अप्रकृष्टश्च दहनप्रतिकूल इतिभावः इति वक्ष्यतीति—स्नेहनिरूपणावसरे गुणग्रन्थ इतिशेषः ।

नित्यतादि प्रथमवत्किन्तु देहमयोनिजम् ।
इन्द्रियं रसनं सिन्धुहिमादिर्विषयो मतः ॥४०॥

प्रथमवदिति । पृथिव्या इवेत्यर्थः । तथाहि । जलं द्विविधं नित्यमनित्यं च । परमाणुरूपं नित्यं द्व्यणुकादिकं सर्वमनित्यमवयवसमवेतं च । अनित्यमपि त्रिविधं शरीरेन्द्रियविषयभेदात् । पृथिवीतो यो विशेषस्तमाह । किन्त्विति । देहमयोनिजम्, अयोनिजमेवेत्यर्थः । जलीयं शरीरं वरुणलोके प्रसिद्धम् ।

प्रथमवदितीति—प्रथमस्येव प्रथमवत् 'तत्र तस्येव' ५।१।११६। इति षष्ठ्यन्ताद्वतिप्रत्ययः । जलीयं शरीरमिति—तच्च पृथिवीभागोपष्टम्भमेव ज्ञेयम्, यथा पार्थिवशरीरमपि जलादिभागोपष्टम्भम् । तेन जलमात्रे हस्तपादादिव्यवस्थाया असम्भवेऽपि न क्षतिः

( तत्रत्यासम्भवदोषो नेत्यर्थः ) नन्वेतादृशं शरीरं क्वास्तीति ? आह—वरुणलोक इति। परमिदं शरीरमयोनिजमेव तथाच—प्रशस्तपादैरुक्तम्—'तत्र शरीरमयोनिजमेव वरुणलोके पार्थिवावयवोपष्टम्भाच्चोपभोगसमर्थम्' इति।

इन्द्रियमिति। जलीयमित्यर्थः। तथाहि। रसनं जलीयं गन्धाद्यव्यञ्जकत्वे सति रसव्यञ्जकत्वात् सक्तुरसाभिव्यञ्जकोदकवत्। रसनेन्द्रियसन्निकर्षे व्यभिचारवारणाय द्रव्यत्वं देयम्। विषयं दर्शयति सिन्धुरिति। सिन्धुः समुद्रः। हिमं तुषारः। आदिपदात् सरित्कासारकरकादिः सर्वोऽपि ग्राह्यः। नच हिमकरकयोः कठिनत्वात् पार्थिवत्वमिति वाच्यम् ऊष्मणा विलीनस्य तस्य जलत्वस्य प्रत्यक्षसिद्धत्वात् यद् द्रव्यं यद्द्रव्यध्वंसजन्यमितिव्याप्तेर्जलोपादानोपादेयत्वसिद्धेः। अदृष्टविशेषेण द्रवत्वप्रतिरोधात् करकायाः काठिन्यप्रत्ययस्य भ्रान्तित्वात्॥ ४०॥

रसनेन्द्रियस्य जलीयत्वेऽनुमानं मानमाह—रसनं जलीयमित्यादि। रसव्यञ्जके मनसि हेतोर्व्यभिचारमाशङ्क्याह—गन्धाद्यव्यञ्जक इति। मनस्तु गन्धादेरपि व्यञ्जकं नतु केवलं रसव्यञ्जकं, इदन्तु रसमात्रव्यञ्जकत्वात् जलीयमिति। यद् गन्धाद्यव्यञ्जकत्वे सति रसव्यञ्जकं तत् जलीयं, यथा सक्तुरसाभिव्यञ्जकमुदकं जलीयमिति प्रतिबन्धसिद्धिः।

करकादिरित्यत्र आदिपदात् कूपादिपरिग्रहः। कठिनत्वादिति—कठिनस्पर्शवत्त्वादित्यर्थः। विलीनस्य तस्येत्यत्र सप्तम्यर्थे षष्ठी। विलीने करकादौ जलत्वस्य प्रत्यक्षे घनावस्थायामपि तज्जलतां

न भिन्नमित्यत्र नियमं दर्शयति—यद्द्रव्यमिति । यज्जलरूप द्रव्यं यतो हिमकरकादिद्रव्यस्य ध्वंसाज्जन्यं भवति तज्जलरूप द्रव्य हिमकरकादि द्रव्यस्योपादानरूपेणोपादेयं भवतीत्यत्रोक्तनियम सञ्चार.।

अनया व्याख्या हिमकरकादिर्न जलाद्भिन्न पदार्थ इतिभाव । हिमकरकादिषु कठिनस्पर्शप्रतीतिस्तु भ्रान्त्यैवेतिबोध्यम्, यतो जीवानामदृष्टविशेषेणैव जलगत द्रवत्व प्रतिबद्ध तत्र तत्र कठिनता-प्रत्यय', नतु वास्तविकं काठिन्यं येन हिमादीनां पार्थिवत्व स्यादिति तेनिरहस्यम । शिष्ट स्पष्टम ।

सर्वस्यास्य जलग्रन्थस्य मूल 'अप्त्वाभिसम्बन्धादाप' इत्यारभ्य 'विषयस्तु सरित्समुद्रहिमकरकादि' रित्यन्त प्रशस्तग्रन्थो ज्ञेय ।

इति जलग्रन्थ ।

---

## उष्णः स्पर्शस्तेजसस्तु स्याद्रूपं शुक्लभास्वरम् ।
## नैमित्तिकं द्रवत्वं तु नित्यतादि च पूर्ववत् ॥४१॥

तेजो निरूपयति 'स्पर्श उष्ण' इत्यादिना ।

उष्णत्वं स्पर्शनिष्ठो जातिविशेषः प्रत्यक्षसिद्धः । इत्थं च जन्योष्णस्पर्शसमवायिकारणतावच्छेदकं तेजस्त्वं जातिविशेषः । तस्य परमाणुवृत्तित्वं तु जलत्वस्येवानुसंधेयम् । नचोष्णस्पर्शवत्त्वं चन्द्रकिरणादावव्याप्तमिति वाच्यं, तत्राप्युष्णत्वस्य सत्त्वात् । किंतु तदन्तःपातिजलस्पर्शेनाभिभवादग्रहः । एवं रत्नकिरणादौ पार्थिवस्पर्शेनाभिभवाच्चक्षुरादौ चानुद्भूतत्वादग्रहः । रूपमित्यादि । वैश्वानरे मरकतकिरणादौ च पार्थिवरूपेणाभिभवाच्छुक्लरूपाग्रहः ॥

उष्णत्वमिति—उष्णत्वमित्यर्थः । प्रत्यक्षसिद्धः स्पार्शनप्रत्य-क्षेणैव । इत्यत्रेति—प्रत्यक्षप्रमाणेन उष्णत्वजातिसिद्धौ चेत्यर्थः । 'येनेन्द्रियेण' इत्यादिन्यायेन त्वगिन्द्रियेणोष्णस्पर्शज्ञानं, तेनैव तन्नि-ष्ठोष्णत्वजातेरपि ग्रहः । परमुष्णस्पर्शनिष्ठा या कार्यता, तादृशकार्य-तानिरूपिता या तेजोनिष्ठा कारणता तदवच्छेदकत्वं तेजस्त्व जाति विषये. तत्सिद्धिरनुमानेत्यर्थपरोऽथ 'जन्योष्णस्पर्श' इत्यादिग्रन्थः । 'तेजोऽस्य स्पर्शवत्' वै० २ । १ । ३ । श्रुतिरपि 'यदग्ने रोहितं रूपं तथाचार्य सूत्रम्—तेजस्तद्रूपम्' छां० ६ ।४। १ यत्तु कश्चित भास्वर शुक्लं रूपमिति नवीना लोहितं रूपमिति वैदिका इत्युक्तवाद् स भ्रान्तः. श्रौतरोहितरूपस्य भास्वरशुक्लार्थपरत्वेनापि नेतुं शक्यत्वात् ।

ननु जन्योष्णस्पर्शसमवायिकारणं जन्यं तेजः, तत्र तेज-स्त्वजातिसिद्धावपि तद्भिन्नेषु तेजःपरमाणुषु कथं तेजस्त्वजातिसि-द्धिरित्यत आह—तस्य परमाणुरूपित्वमिति । यथा जन्यजलाव-च्छिन्नजनकतावच्छेदकतया जलपरमाणौ जलत्व जाति सिध्यति, तथैव जन्यतेजस्त्वावच्छिन्नजनकतावच्छेदकतया तेजःपरमाणुष्वपि तेजस्त्वाख्यजाति सिध्यतीतिभावः ।

किञ्च यत्र समवायेन *आम्रादिफलेषु पूर्वरसादिपरावृत्ति मधुररसाद्युत्पत्तिस्तत्रापि समवायेन विलक्षणतेजःसंयोग एव कारणं तादृशकारणतावच्छेदकतयापि तेजस्त्वजातिसिद्धि-र्बोध्या ।

चन्द्रकिरणादावुष्णस्पर्शानुभवस्य तेजोलक्षणस्यातिप्रसक्ति-माशङ्क्य समाधत्ते 'न च' इत्यादिना । चन्द्रकिरणादावित्यत्र आदि-

---

* समवायसम्बन्धावच्छिन्ना आम्रादिफलगतमधुररसनिष्ठा या कार्यता, तादृशकार्यतानिरूपिता या समवायसम्बन्धावच्छिन्ना तेजःसंयोगनिष्ठा कारणता, ता किञ्चिद्धर्मावच्छिन्ना निरवच्छिन्नाया कारणताया अभावात् यश्च धर्मस्तस्या अवच्छेदकः स एव तेजस्त्व जातिरितिभावः ।

पदेन हीरकादिरत्नकिरणादेरपि परिग्रहः । तत्रापि चन्द्रकिरणादावपि । यदि चन्द्रकिरणादावुष्णत्वं तदा कुतो न त्वचा गृह्यते प्रत्युत तत्प्रतियोगिशीतस्पर्शस्यैव ग्रह इत्याशङ्कायामाह—किन्त्विति तदन्तःपातिजलस्पर्शेन चन्द्रकिरणान्तर्गतजलभागीयशीतस्पर्शेन । अभिभवो नाम बलवत्सजातीयसम्बन्धः, बलवत्सजातीयग्रहणकृतमग्रहणं वा । यथा सुवर्णरूपशुक्लत्वभास्वरत्वयोः पृथिवीभागीयरूपाभिसम्बन्धेनाग्रह, तथा प्रकृते चन्द्रकिरणादौ उष्णस्पर्शसत्त्वेऽपि बलवत्सजातीयजलीयस्पर्शेनाग्रहः । उक्तं न्याय रत्नकिरणादावपि योजयितुमाह—एवमिति । ननु—चक्षुरादौ नाभिभवः कुतो नोष्णस्पर्शोपलब्धिरिति शङ्कायामाह—चक्षुरादाविति । अनुद्भूतत्वात् अनुत्कटत्वात् । अग्रहः ज्ञानाभाव । वैश्वानरे वह्नौ । सुगममन्यत् ।

**ननु** तद्रूपाग्रहे धर्मिणोऽपि चाक्षुषत्वं न स्यादिति चेन्न, अन्यदीयरूपेणापि धर्मिणो ग्रहसंभवात्, शंखस्येव पित्तपीतिम्ना । **वह्नेस्तु** शुक्लरूपं नाभिभूतं किंतु तदीयं शुक्लत्वमाभिभूतमित्यन्ये ।

**नैमित्तिकमिति** । सुवर्णादिरूपे तैजसे तत्सत्त्वात् । **नच** नैमित्तिकद्रवत्वं दहनादावव्याप्तं घृतादावतिव्याप्तं चेति **वाच्यं**, पृथिव्यवृत्तिनैमित्तिकद्रवत्ववद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वस्य विवक्षितत्वात् । **पूर्ववदिति** । जलस्येवेत्यर्थः । **तथाहि** । तत् द्विविधं नित्यमनित्यं च । नित्यं परमाणुरूपं तदन्यदनित्यम्, अवयवि च । **तच्च त्रिधा** शरीरेन्द्रियविषयभेदात् । शरीरमयोनिजमेव । तच्च सूर्यलोकादौ प्रसिद्धम् ॥ ४१ ॥

ननु—यदि घटे पार्थिवरूपेण स्वरूपस्य (भास्वरशुक्लरूपस्य) अभिभवः तर्हि तस्य (भास्वरशुक्लरूपधर्मिणो घटे.) प्रत्यक्षं न स्यात् द्रव्यचाक्षुषप्रत्यक्षे स्वगतोद्भूतरूपस्य कारणत्वात् इत्याशङ्कते—'अथे'ति। खण्डयितुमाह—'इति चेन्ने'ति। सिद्धान्तं प्रथ्नाति—अन्यदीयरूपेणेति। पार्थिवरूपेणेत्यर्थः। अस्यायमाशयः-नायं नियमो यत्स्वगतरूपसाक्षात्कारे सत्येव तद्रूपधर्मिणो द्रव्यस्य साक्षात्कारः किन्तु द्रव्यीयचाक्षुषप्रत्यक्षे उद्भूतरूपमात्रमपेक्षितम् तच्चस्वीय स्यादन्यदीय वेति नाग्रहः, यथा 'पीतः शंखः' इत्याकारकशङ्खात्मकद्रव्यप्रत्यक्षं नेत्रगतपीतिमद्रव्यसम्बन्धेन तद्गतपीतरूपप्रत्ययेनापि जायते, तथैव पार्थिवभागीयरूपसम्बन्धेन वैश्वानरस्य प्रत्यक्षे न किञ्चित् बाधकं पश्याम। अत्रैव मतान्तरमाह—वह्नेस्त्विति। अग्रिमाणि स्पष्टानि।

परममूले नैमित्तिकं द्रवत्वमिति—तथाच 'नैमित्तिकद्रवत्ववत्वं तेजस्त्वम्' इत्यपरं तेजोलक्षणम्। ननु—तेजसि नास्त्येवद्रवत्वमित्युक्तलक्षणेऽसम्भवो दोष इतिशङ्कां वारयितुमाह—सुवर्णादिरूप इति।

नैमित्तिकद्रवत्वस्वरूपे तेजोलक्षणेऽसम्भवदोषं परिहृत्य तत्र व्याप्तिदोषमतिव्याप्तिदोषञ्च परिहर्तुमाक्षेपसमाधानाभ्यां प्रथ्नाति 'नच' इत्यादि। समाधानग्रन्थस्यायमर्थः—पृथिव्यामवृत्ति (तद्वृत्ति

---

* अस्य जातिघटितलक्षणस्य पदकृत्यप्रकारोऽयम्—नैमित्तिकद्रवत्ववद्वृत्तिः पृथिवीत्वजाति तामादाय पृथिव्यामतिव्याप्तिः यदि 'पृथिव्यवृत्ति' पदं नोच्येत, अतस्तत्र अतिव्याप्तिनिरासाय 'पृथिव्यवृत्ति' पदमुपात्तम्।

यदि तु 'नैमित्तिकद्रवत्ववद्' पदं न दीयेत तदा 'पृथिव्यवृत्तिजाति' पदेन 'जलत्व' मपि गृहीतुं शक्यते तेन जलेऽतिव्याप्तिः, एवमेव वायुत्वमादाय वायावप्यति व्याप्तिः तद्वारणाय 'नैमित्तिकद्रवत्ववद्वृत्ति' इति पदं दत्तम्। वायुतेजोऽन्यतरत्वमादाय वायावप्यति व्याप्तिरायाति तन्निवारणाय जातीति पदं निवेशितम्।

र्यन्तं यस्याः सा प्रवृत्तिः ) नैमित्तिकद्रवत्ववति ( अर्थात् तेजसि ) वृत्तिर्यस्याः सा, तादृशी या द्रव्यत्वस्य साक्षाद् व्याप्या जातिः तेजस्त्वं तादृशजातिमत्त्वं 'नैमित्तिकद्रवत्ववत्त्व' पदेन विवक्षितमिति नान्याद्यव्याप्तिर्नापि घृतादिरूपायां पृथिव्यामतिव्याप्तिः । पूर्ववदितीत्यादिग्रन्थो निगदव्याख्यातः ।

अत्र यो विशेषस्तमाह—

## इन्द्रियं नयनं वह्निः स्वर्णादिर्विषयो मतः ।

ननु चक्षुषस्तैजसत्वे किं मानमिति चेत्, चक्षुस्तैजसं परकीयस्पर्शाव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वात् प्रदीपवत् । प्रदीपस्य स्वीयस्पर्शव्यञ्जकत्वादत्र दृष्टान्तेऽव्याप्तिवारणाय प्रथमं परकीयेति । घटादेः स्वीयरूपव्यञ्जकत्वाद्व्यभिचारवारणाय द्वितीयं परकीयेति । अथवा प्रभाया दृष्टान्तत्वसंभवादाद्यं परकीयेति न देयम् । चक्षुःसन्निकर्षे व्यभिचारवारणाय द्रव्यपदं देयम् ॥

इन्द्रियं नयनमित्यादिना । चक्षुषस्तैजसत्वमाक्षिपति 'ननु' इति । तत्रानुमानं प्रमाणयति—चक्षुस्तैजसमिति । यत् परकीयस्पर्शाव्यञ्जकत्वे सति परकीयरूपव्यञ्जकं तत् तैजसं दृष्टं यथा प्रदीप इति प्रतिबन्धसिद्धिः ।

यदि हेतुविशेषणं 'स्पर्शाव्यञ्जकत्वे सति' इत्येवोच्येत तदा दृष्टान्ते प्रदीपे विशेषणासिद्धिरूपो दोषः स्यात् तन्निवारयितुं 'परकीये'ति पदं निवेशितमित्यभिप्रायेणाह—दृष्टान्तेऽव्याप्तिवारणायेति । प्रदीपः स्वीयस्पर्शव्यञ्जकः सन्नपि न परकीयस्पर्शव्यञ्जने समर्थः ।

परन्तु घटादयोऽपि परकीयस्पर्शाव्यञ्जकाः सन्तो नियमतः सम्बन्धेन स्वीयरूपव्यञ्जकाः, एवञ्च तेषु हेतोर्व्यभिचारः स्याद्

असत्स्यघारणाय हेतौ द्वितीयं 'परकीये' पदं दत्तम् इत्यभिप्रायेणाह—घटादेः स्वीयरूपेत्यादि।

हेतौ शरीरकृत लाघवमभिप्रेत्य कल्पान्तरमाह—'अथवे'ति। 'प्रदीप' दृष्टान्तस्थाने 'प्रभावत्' इति दृष्टान्तवाक्यं स्यात्, तथाच प्रथमं 'परकीय'पदं न देयं, हेतुस्तु स्पर्शाद्यव्यञ्जकत्वे सति परकीयरूप-व्यञ्जकत्वात्' इति कल्पनीय इत्यर्थः। तेन तत्र विशेषणासिद्धिवार-णाहेतुः। नहि प्रभा स्वस्पर्शव्यञ्जने परकीयस्पर्शव्यञ्जने वा समर्था इति हेतोर्विशेषणं सिद्धमेवेति भावः। ननु—तथापि हेतौ व्यभिचारो दोषः घटचक्षुःसंयोगः स्पर्शादेरव्यञ्जकः परकीय ( घटादि ) रूपव्य-ञ्जकश्च परं न तैजसः, अत्र तैजसत्वसाध्याभावेऽपि चक्षुःसंयोगे गतत्वादस्य हेतुर्व्यभिचारीति शङ्कां वारयितुमाह—चक्षुःसन्निकर्ष इति। तथाच 'द्रव्यत्वे सति स्पर्शाद्यव्यञ्जकत्वे सति परकीयरूपाद्य-व्यञ्जकत्वात्' इति हेतुशरीरम्। घटचक्षुःसंयोगः स्पर्शाद्यव्यञ्जकः परकीयरूपव्यञ्जकोऽपि न द्रव्यम् अपि तु गुणः इति न व्यभिचार-गन्धः।

विषयं दर्शयति। **वह्निरिति**। ननु सुवर्णस्य तैज-सत्वे किं मानमिति चेन्न, सुवर्णं तैजसम्, असति प्रतिबन्धके अत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानजन्यद्रवत्वात् यन्नैवं तन्नैवम्, यथा पृथिवीति। न्चाप्रयोजकं, पृथिवीद्रवत्वस्य जन्यजलद्र-वत्वस्य चात्यन्ताग्निसंयोगनाश्यत्वात्। ननु पीतिमगुरुत्वाश्रय-स्य पार्थिवभागस्यापि तदानीं द्रुतत्वात्तेन व्यभिचार इति **चेन्न**, जलमध्यस्थमपीतोदवचस्याद्रुतत्वात्। अपरे तु पीतिमाश्रयस्य अत्यन्ताग्निसंयोगेऽपि पूर्वरूपापरावृत्तिदर्शनात्तत्प्रतिबन्धकं वि-जातीयद्रवद्रव्यं कल्प्यते। तथाहि। अत्यन्ताग्निसंयोगे पीतिम-गुरुत्वाश्रयः विजातीयरूपप्रतिबन्धकद्रवद्रव्यसंयुक्तः, अत्यन्ता-

ग्निसंयोगे सत्यपि पूर्वरूपविजातीयरूपानधिकरणत्वात्, जलमध्यस्थपीतपटवत्। तस्य च पृथिवीजलभिन्नस्य तैजसत्वनियमात्।

विषय दर्शयन्निति—

तैजसो विषयश्चतुर्विधः, भौमदिव्यौदर्याकरजभेदात्। भौमं वह्न्यादिकम्। अरिन्धनं दिव्यं विद्युदादि। भुक्तस्य परिणामहेतुरुदर्यम्। आकरजं सुवर्णादीत्यभिप्रायवान् 'वह्निसुवर्णादिविषयो मतः' इति परमभूलग्रन्थ उक्तञ्च न्यायकन्दल्याम्—'योगिभामहट् यदेन भूयसां पार्थिवावयवानामुपष्टम्भादनुद्भूतरूपस्पर्शं पिण्डीभावयोग्य सुवर्णादिकमारभ्यते तत्र पार्थिवद्रव्यसमवेता इमे रसादयो गृह्यन्त इति।

सुवर्णस्य तैजसत्वे मानं पृच्छति—नन्विति। किमाचेप इति केचित्, नास्त्येव सुवर्णस्य तैजसत्वे मानं तद्विरुद्धप्रमाणसत्त्वात् तथाहि—सुवर्णं पार्थिवं नैमित्तिकद्रवत्ववत्त्वात् जतुप्रभृतिवत् इत्यनुमानेन सुवर्णं पार्थिवमेवेति आचेप्तुराशय।

तदेतत्समाधत्ते—नेति। 'सुवर्णं तैजस'मितिप्रतिज्ञावाक्यम्। 'असति प्रतिबन्धके' इत्यादि हेतुवाक्यम्। 'यन्नैवं तन्नैव' मित्यादि व्यतिरेकिदृष्टान्तवाक्यम्। असतिप्रतिबन्धके प्रतिबन्धकसंसर्गाभावे सति अत्यन्त योऽनलसंयोगो वह्निसंसर्ग तस्मिन्सत्यपि अनुच्छिद्यमानमविनश्यद् यद् द्रवत्व तद्वत्वात् यन्नैवम्=यदसतिप्रतिबन्धकेऽत्यन्तानलसंयोगे अनुच्छिद्यमानद्रवत्वाधिकरण ॥ अर्थात् तादृशप्रतिबन्धकसंसर्गाभावकालिकात्यन्तानलसंयोगेन यस्य द्रवत्वमुच्छिन्नं (विनाशि) भवति। तन्नैवम्=न्नतैजसमपि न भवति यथा पृथिवी। घृतलाचारूपाया पृथिव्या असति प्रतिबन्धके अत्यन्तानलसंयोगे द्रवत्वं विनश्यति, अतएव घृतादिकं न तैजसम्, सुवर्णं तु पृथिवीविरुद्धस्वभावत्वात्तैजसमेव।

ननु—इदमनुमानमप्रयोजकम्, सुवर्णपक्षे 'असतिप्रतिबन्धक' इत्यादिकं हेतुरस्तु तैजसं साध्यं माभूद्, विपक्षे बाधकतर्काभावादित्याक्षेपपूर्वकं समाधानमाह 'नच' इत्यादिना ।

घृतपाषाणादिपृथिव्यां जन्यजले च यद् द्रवत्वमस्ति तदग्निसंयोगनाश्यं सुवर्णद्रवत्वन्तु अत्यन्ताग्निसंयोगे सत्यपि न नश्यति 'यदि सुवर्णं तैजसं न स्यात् तर्हि अत्यन्तानलसंयोगानाश्यद्रवत्वधर्मावच्छिन्नमपि न स्यात् यथा घृतादि' रित्ययमेव विपक्षबाधको ममानुकूलस्तर्क इतिभाव ।

किञ्च 'अग्नेरपत्यं प्रथमं हिरण्यम्' इत्याद्यागमान्यथानुपपत्तिरपि मम सिद्धान्तिनोऽनुकूलस्तर्कः, अर्थात् सुवर्णं यदि तैजसं न स्यात् तर्हि तदागमप्रतिपाद्यत्वमपत्यत्वश्च स्यात् इति तर्कस्य सत्त्वमानुकूल्यम् ।

उक्तानुमाने व्यभिचारमाशङ्कते 'ननु' इति । पीतस्य भावः पीतिमा, गुरोर्भावो गुरुत्वं पीतिमा च गुरुत्वञ्च ते, तयोराश्रयः पार्थिवद्रव्यमित्यर्थं तस्य पीतिमगुरुत्वाश्रयस्य, तेजसि पीतिमधर्माभावात् गुरुत्वाभावाच्च । तदानीम् अत्यन्तानलसंयोगकाले द्रुतत्वात् द्रवणापत्त्यात् । व्यभिचारः हेतोः साध्याभावाधिकरणवृत्तित्वम् । साध्यं तैजसत्वं तदभावस्तैजसत्वाभावः तदधिकरणं पृथिवीभागः तत्रापि 'अत्यन्तानलसंयोगादिहेतोर्गतत्वमेव व्यभिचारः । समाधत्ते 'न' इति ।

जलमध्यस्थेति—जलमध्ये स्थितो यो मसीचोद चूर्णविशेषः तद्वत् । यथा जले द्रवति सति तदन्तर्वर्त्तो मसीचोदेऽपि द्रवत्वप्रत्ययो भवति परमसौ प्रत्ययो भ्रमात्मकः, एवमेव अत्यन्तानलसंयोगेन सुवर्णे द्रवति सति तन्मध्यवर्त्तिनि पीतिमगुरुत्वाश्रयपार्थिवभागेऽपि द्रवत्वप्रत्ययो न वास्तविक इतिभाव ।

प्रकारान्तरेण सुवर्णस्य तैजसत्वं साधयतां मतमुपन्यस्यति—अपरेस्त्वित्यादिना । पीतिमाश्रयस्य पार्थिवभागस्य अत्यन्ताग्निसं-

योगेऽपि पूर्वरूपापरावृत्तिदर्शनात्, पूर्वरूपस्य पीतवर्णस्य अपरावृत्तिदर्शनात् पूर्ववदेवाविद्यमानत्वात् ( पृथिवीगतरूपस्य अग्निसंयोगेन परावृत्तिर्जायते इति नियमः ) अत्र तद्विरुद्धतादर्शनात्। तत्प्रति-बन्धकं रूपपरावृत्तिप्रतिबन्धकम्। विजातीयद्रव्यं विलक्षणद्रव्यवद्धर्मवद् द्रव्यं । कल्प्यते अनुमीयते।

कल्पनाप्रकारमेव दर्शयति 'तथाहि' इत्यादिना । 'अत्यन्ताग्निसंयोगे पीतिमगुरुत्वाश्रयः' इति पक्षः । विजातीयेत्यादि साध्यम्' अत्यन्ताग्निसंयोगे सत्यपि पूर्वरूपविजातीयेत्यादि हेतुः, जलमध्यस्थेति दृष्टान्तः ।

विजातीयेति—विजातीयरूपप्रतिबन्धकं यद् द्रवद्रव्यं तत्संयुक्तः तेन सह संयोगसम्बन्धवान् । पूर्वरूपेति—पूर्वरूपं पीतरूपं तद्विजातीयरूपं श्यामादिकं तदसमानाधिकरणं सदनाश्रयं तत्त्वादित्यर्थः ।

अयमत्राशयः—यदाऽतिप्रदीप्ते वह्नौ सुवर्णपिण्डं प्रक्षिप्यते तदासौ पानीयवद् द्रवति, तदन्तर्वर्ती पीतवर्णाश्रयः पार्थिवोऽपि भागो द्रवतीव, परमयं नियमो 'यद्रूपरसगन्धस्पर्शाः पृथिव्यां पाकजा अनित्याश्च' यदा पार्थिवभागस्य वह्निनाऽतिसंयोगो भवति तदा तस्य पूर्वरूपतः किमपि विलक्षणं रूपमुत्पद्यते, यथा श्यामवर्णस्यामघटस्य वह्नौ प्रक्षेपे रक्तरूपपरावृत्तिर्दृश्यते । परं सुवर्णपिण्डान्तर्वर्तिनस्तस्य तादृगेवरूपं तिष्ठति यादृश पूर्वमासीत् नच परावर्तते तेन वयमनुमिमीमहे ( कल्पयामः ) यदस्ति किमपि तादृशद्रव्यं यदतिमात्रमग्निसंयोगे सत्यपि पार्थिवभागस्य रूपपरावृत्तिं प्रतिबध्नाति । तच्च पृथिवी अनुच्छिद्यमानद्रवत्वात् नापि जलं अग्नेरनुपरमात्, किन्तु पृथिवी-जलाभ्यां भिन्नमेव । यच्च तद्भिन्नं तत्तेज एवेति सिद्धः सुवर्णस्य तेजोभावः । नवीनास्तु सुवर्णं न तैजसं किन्तु पार्थिवं 'पीतं सुवर्णं' 'द्रुतं सुवर्णं' मिति प्रत्यक्षे जायमाने भिन्नत्वे दोषः तस्य तमस्त्वकथनमयुक्तम, अग्निसंयोगेऽपि यत्र तस्य पूर्वरूपनाश तत्र विलक्षण स्वर्ण-

द्रव्यमेव प्रतिपन्धकमिति वदन्ति। सर्वोऽयं ग्रन्थः 'तेजस्त्वाभिसम्बन्धात् तेजः' इत्यारभ्य 'आकरजं सुवर्णादी'त्यन्तप्रशस्तग्रन्थमूल एव।

इति तेजोग्रन्थः।

---

वायुं निरूपयति—

**अपाकजोऽनुष्णाशीतस्पर्शस्तु पवने मतः ॥ ४२ ॥**
**तिर्यग्गमनवानेष ज्ञेयः स्पर्शादिलिंगकः ।**
**पूर्ववन्नित्यताद्युक्तं देहव्यापि त्वगिन्द्रियम् ॥४३॥**

अनुष्णाशीतस्पर्शस्य पृथिव्यामपि सत्त्वादुक्तमपाकज इति। अपाकजस्पर्शस्य जलादावपि सत्त्वादुक्तमनुष्णाशीत इति। तेन वायवीयो विजातीयः स्पर्शो दर्शितः। तज्जनकतावच्छेदकं वायुत्वमिति भावः। एष वायुः स्पर्शादिलिङ्गकः। वायुर्हि स्पर्शशब्दधृतिकम्पैरनुमीयते विजातीयस्पर्शेन विलक्षणशब्देन तृणादीनां धृत्या शाखादीनां कम्पेन च वायोरनुमानात्। यथाच वायोर्न प्रत्यक्षं तथाग्रे वक्ष्यते।

वायुं लक्षयति परममूले अपाकज इति। उक्तलक्षणस्य पदकृत्यं दर्शयति—अनुष्णाशीतस्पर्शस्येत्यादिना। वायौ पाकजः स्पर्शो न भवतीति पृथिवीस्पर्शव्युदासः। अनुष्णाशीतोऽप्यत्र शीतोष्णो विजातीयः पार्थिवजलीयस्पर्शाभ्यां विलक्षण इत्यर्थः। उक्तञ्चर्षिणा 'स्पर्शवान् वायुः' (वै० २।१।४)।

एष वायुः तिर्यग्गमनवान् अत्र युक्तिमाह—ज्ञेय इति। स्पर्शशब्दधृतिकम्पाः स्पर्शादिपदार्थाः एते लिङ्गमनुमानस्य, तथाच वायु-

रनुमेयो न प्रत्यक्ष इत्यर्थः, इत्याशयेनाह—तेन वायवीय इति।
तज्जनकतावच्छेदकमिति—विजातीयानुष्णाशीतस्पर्शनिष्ठजन्यता निरूपिता या जनकता सा किञ्चिद्धर्मावच्छिन्ना, इत्यादिरीत्या वायुनिष्ठजनकतावच्छेदकं वायुत्वमितिवायुत्वजातिसिद्धि । इदमुपलक्षणम्—शब्दविशेषस्य निमित्तकारणतावच्छेदकतयाऽपि वायुत्वजातिसिद्धि । स्पर्शादिलिङ्गकः स्पर्शादीनि लिङ्गानि यस्य स तथा। धृतिरिति—गुरुणो द्रव्यस्यापतन धृतिः । वायोरनुमानादिति—अनुमानप्रकारश्च—योऽय रूपवद्द्रव्यासमवेत स्पर्शः स कचिदाश्रितः स्पर्शत्वात् पृथिवीसमवेतस्पर्शवत् । तथाच पारमर्षं सूत्रम्—'न दृष्टानां स्पर्श इत्यदृष्टलिङ्गो वायुः' वै० २ । १ । १० । उपलभ्यमानोऽय विजातीयः स्पर्शो दृष्टविषयाणां प्रत्यक्षभूतानां पृथिव्यप्तेजसां नैव भवितुमर्हति विलक्षणत्वात् अतोऽदृष्टलिङ्ग अदृष्टविशेषव्याप्तिकोऽदृष्ट स लिङ्गमनुमापक यस्य स वायुरित्यर्थः । अनुमानेन सामान्यतोदृष्टेन विलक्षणस्पर्शाश्रयस्य सिद्धावपि तस्य विशेषसञ्ज्ञा वायुरिति 'प्राणाद्वायुरजायत' यजु० ३१ । १३ इत्यागमाद्बोध्या, उक्तञ्चर्षिणा 'तस्मादागमिकम्' २ । १ । १७ । इति ।

पूर्ववदिति । वायुर्द्विविधो नित्योऽनित्यश्च । परमाणुरूपो नित्यस्तदन्योऽनित्योऽवयवसमवेतश्च । सोऽपि त्रिविधः, शरीरेन्द्रियविषयभेदात् । तत्र शरीरमयोनिजं पिशाचादीनाम् । परन्तु जलीयतैजसवायवीयशरीराणां पार्थिवभागोपष्टम्भादुपभोगक्षमत्वं जलादीनां प्राधान्याज्जलीयत्वादिकमिति । अत्र यो विशेषस्तमाह । देहव्यापीति । शरीरव्यापकं स्पर्शग्राहकमिन्द्रियं त्वक् । तच्च वायवीयं रूपादिषु मध्ये स्पर्शस्यैवाभिव्यञ्जकत्वात् । अङ्गसङ्गिसलिलशैत्याभिव्यञ्जकव्यजनपवनवत् ॥ ४२ । ४३ ॥

पूर्ववदिति स्पष्टयति—वायुर्द्विविध इत्यादिना। अयोनिजमिति—अयोनिजमेवेत्यर्थः। पिशाचादीनामिति—मरुतां लोके प्रसिद्धमिति शेषः, प्रशस्तपाद इत्यमेव दर्शनात्। शिष्टं स्पष्टम्।

ननु—वायवीयशरीरे कथं जीवानां भोगः वायौ करचरणाद्यवयवाभावात् इत्याशङ्कायामाह—परन्त्विति। पार्थिवभागोपष्टम्भात् पार्थिवांशसंयोगविशेषात् उपभोगसमर्थत्वम् भोगसाधनयोग्यता। आक्षेपसमाधानयोस्तुल्यत्वात् प्रकरणलाघवमनुसरन् साधारणं समाधानं वक्तुं जलीयतैजसवायवीयशरीराणामित्युक्तम्। सर्वत्र जलीयादिशरीरेषु पार्थिवभागस्यैव साहाय्येन भोगसाधनत्वं ज्ञेयमिति भावः। अत्र त्वगिन्द्रिये। यो विशेषः अधिष्ठानादिः। त्वचि स्थितमिन्द्रियं त्वगिन्द्रियम्, तस्य लक्षणमाह—स्पर्शेति। त्वगिन्द्रियस्य वायुकार्यत्वमनुमानेन साधयति—तच्चेत्यादिना। रूपादिषु मध्य इति—'यद् रूपादिषु मध्ये स्पर्शस्यैवाभिव्यञ्जकं (ग्राहक) तद् वायवीय'मिति व्याप्तिः अत्र दृष्टान्तमाह—अङ्गसङ्गीति—अङ्गसङ्गिसलिलं=स्वेदः तन्निष्ठं शैत्यं शीतस्पर्शः, तस्याभिव्यञ्जको व्यजनपवनो यथा वायवीयः वायुपरमाणुभिरारभ्यमाणः तथैव त्वगिन्द्रियं स्पर्शमात्रव्यञ्जकत्वाद्वायवीयमित्यर्थः।

'येनेन्द्रियेण यद् गृह्यते' इति न्यायेन स्पर्शत्वजातेरप्यभिव्यञ्जकं त्वगिन्द्रियं ननु स्पर्शस्यैवाभिव्यञ्जकमित्यसिद्धो हेतुरिति शङ्कानिरासाय 'रूपादिषु मध्य' इत्युक्तम्। एवं मनसि व्यभिचारवारणाय 'एव'पदम्। त्वगिन्द्रियसन्निकर्षे 'द्रव्यत्वे सति' इत्यपि हेतौ विशेषणं देयमिति शम्।

विषयं दर्शयति—

**प्राणादिस्तु महावायुपर्यन्तो विषयो मतः।**

यद्यप्यनित्यो वायुश्चतुर्विधः तस्य चतुर्थी विधा प्राणादि-रित्युक्तमाकरे तथापि संक्षेपादत्र त्रैविध्यमुक्तम् । प्राणस्त्वेक एव हृदादिनानास्थानवशान्मुखनिर्गमादिनानाक्रियावशाच्च नानासंज्ञां लभत इति ॥

परममूले प्राणादिरित्यत्र--आदिना अपानसमानोदानव्याना पञ्च शरीरान्तःसञ्चारिणः, बाह्याश्च वृक्षादिकम्पनहेतवः । तत्र सर्वेषामवधिर्महावायुः अयं प्रलयकालिकः पुराणादिप्रसिद्धः, तथाचोक्तं श्रीमद्भागवतमहापुराणे एकादशस्कन्धे तृतीयाऽध्याये—'वायुना हृतगन्धा भूः सलिलत्वाय कल्पते' । इति ।

प्राणस्त्वेक एवेति—तथाचोक्तम्--

हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः ।
उदानः कण्ठदेशे स्याद् व्यानः सर्वशरीरगः ॥

इति तत्तत्स्थानरूपोपाधिवशान्मुखनिर्गमनादिक्रियारूपोपाधिवशाच्च एकस्यापि प्राणस्य पञ्चभेदा जाता इत्यर्थः ।

वायुसाधकान्यनुमानान्तराण्यपि वक्ष्यामि तथाहि—

असति रूपवद्द्रव्याभिघाते योऽयं पर्णादिषु शब्दसन्तान स स्पर्शवद्वेगवद्द्रव्यसंयोगजन्यः अविभज्यमानावयवद्रव्यसंयोगजशब्दसन्तानत्वात् दण्डाभिहतभेरीशब्दसन्तानवत् ।

नभसि तृणतूलस्तनयित्नुविमानानां धृतिः स्पर्शवद्वेगवद्द्रव्य-संयोगहेतुका असमवाय्यनधिष्ठितद्रव्यधृतित्वात् नौकाधृतिवत् ।

रूपवद्द्रव्याभिघातमन्तरेण वृक्षादिकम्पः स्पर्शवद्वेगवद्द्रव्या-भिघातजन्यः विजातीयकम्पत्वात् नदीपूराहतकुशकाशादिकम्पवत् । एषां प्रपञ्चस्तु ग्रन्थगौरवभयान्न कृतः स्वयमूह्यः ।

इति वायुग्रन्थः ।

इदानीं शिष्यबुद्धिवैशद्याय कार्यद्रव्यस्योत्पत्तिविनाशक्रममा-वदमहे—

महेश्वरस्य चिकीर्षावशात्प्रथमं परमाणुषु क्रियोत्पद्यते, ततो द्वयोः परमाण्वोः संयोगः तेन द्व्यणुकमुत्पद्यते, तत्र (द्व्यणुकोत्पत्तौ) परमाणु समवायिकारणं परमाणुद्वयसंयोगोऽसमवायिकारणम् परमेश्वरः तज्ज्ञानं इच्छा तत्कृति कालादिकं प्रागभावोऽदृष्टं (धर्माधर्मौ) प्रतिबन्धकाभाव इति निमित्तकारणम्। एतानि कार्यमात्रं प्रति साधारणनिमित्तकारणानि। एवं द्व्यणुकोत्पत्त्यनन्तरं महेश्वरेच्छावशात् द्व्यणुकेषु क्रिया, ततस्त्रिभिर्द्व्यणुकैरेकं त्र्यणुकमारभ्यते एवमत्रापि द्व्यणुकानि समवायिकारणं तेषां संयोगोऽसमवायिकारणं ईश्वरेच्छादिनिमित्तकारणम्। एवमेव पूर्ववत् तेषु सजातीयेषु त्र्यणुकेषु क्रिया, ततश्चतुर्भिः संयुक्तैः त्र्यणुकैरेकं चतुरणुकमुत्पद्यते। तेऽप्यसङ्ख्याता एवोत्पद्यन्ते। एवं चतुरणुकोत्पत्तौ सत्यां ततः पञ्चभिश्चतुरणुकैर्मिलित्वा एकं स्थूलतरं कार्यमारभ्यते, ततस्तैः स्थूलतरैः पञ्चभिः पञ्चाणुकैर्मिलित्वा स्थूलतमं पञ्चाणुकाख्यं कार्यमारभ्यते, एवमेव पूर्वपूर्वकार्यापेक्षयोत्तरोत्तरं स्थूलकार्योत्पत्तिक्रमेण महती पृथिवी, महत्य आपः, महत्तेजः महान्वायुरुत्पद्यते।

ननु त्रिभिः परमाणुभिरेकं द्व्यणुकं कुतो नारभ्यते द्व्यणुकद्वयेन वा कुतो न त्र्यणुकोत्पत्तिरिति चेन्न प्रथमस्य द्रव्यारम्भकसंयोगे गौरवम्, द्वितीयस्य तथात्वे त्र्यणुकमहत्त्वानुपपत्तिः, कार्यमहत्त्वे कारणमहत्त्वस्य कारणबहुत्वस्य वा हेतुत्वात्।

एवं महेश्वरस्य कार्यद्रव्यसञ्जिहीर्षावशात् परमाणुषु क्रियोत्पत्तिः, ततः परमाणुद्वयस्य विभागः, ततो द्वयोः परमाण्वोः संयोगनाशः ततो द्व्यणुकनाशः ततस्त्र्यणुकनाशः एवं चतुरणुकादिनाशक्रमेण महापृथिव्यादीनां नाशः अयमेवावान्तरप्रलय इत्युच्यते सर्वकार्यद्रव्यध्वंसोऽवान्तरप्रलय इति तल्लक्षणात् महाप्रलयस्तु सर्वभावकार्यध्वंसः। भावकार्यञ्च अनित्यं द्रव्यं, अनित्यगुणः अनित्यं कर्म चेति बोध्यम्।

पुनः सृष्टिसद्भावे किंमानमिति चेत्? 'धाता यथापूर्वमकल्पयत्' इत्यादिश्रुतिरपि। मीमांसकास्तु संसारप्रवाहो बीजाङ्कुरन्यायेन अनादिरनन्तः, नैव प्रलयसद्भावे मानमित्याहुः। समवायिकारणनाशाद् द्रव्यनाशः क्वचिदसमवायिकारणनाशादपि इति प्राञ्चः। सर्वत्रासमवायिकारणनाशाद् द्रव्यनाश, एवं सति लाघवमिति नव्याः।

इति कार्यद्रव्योत्पत्तिविनाशक्रमः।

आकाशं निरूपयति—

## आकाशस्य तु विज्ञेयः शब्दो वैशेषिको गुणः ॥४४॥

आकाशकालदिशामेकैकव्यक्तित्वादाकाशत्वादिकं न जातिः। किंतु आकाशत्वं शब्दाश्रयत्वम्। वैशेषिक इति कथनं तु विशेषगुणान्तरव्यवच्छेदाय। एतेन प्रमाणमपि दर्शितम्। तथाहि। शब्दो विशेषगुणः चक्षुर्ग्रहणायोग्यबहिरिन्द्रियग्राह्यजातिमत्त्वात् स्पर्शवत्। शब्दो द्रव्यसमवेतो गुणत्वात् संयोगवत्। इत्यनुमानेन शब्दस्य द्रव्यसमवेतत्वे सिद्धे, शब्दो न स्पर्शवद्विशेषगुणः अग्निसंयोगासमवायिकारणकत्वाभावे सत्यकारणगुणपूर्वकप्रत्यक्षत्वात् सुखवत्। पाकजरूपादौ व्यभिचारवारणाय सत्यन्तम्। पटरूपादौ व्यभिचारवारणायाकारणगुणपूर्वकेति। जलपरमाणुरूपादौ व्यभिचारवारणाय प्रत्यक्षेति। शब्दो न दिक्कालमनसां गुणः विशेषगुणत्वात्। नात्मविशेषगुणो बहिरिन्द्रियग्राह्यत्वाद्रूपवत्। इत्थं च शब्दाधिकरणं नवमं द्रव्यं गगननामकं सिध्यति। नच वाय्ववयवेषु सूक्ष्मशब्दक्रमेण वायौ कारणगुणपूर्वकः शब्द उत्पद्यतामिति वाच्यम्, अयावद्द्रव्यभावित्वेन वायुविशेषगुणत्वाभावात्।

परमसूक्ष्म आकाशस्येति—विशेषपद, वैशेषिक, 'विनयादिभ्यष्ठक्' (५।४।३४) इति सूत्रेण स्वार्थे ठक्। 'किति च' ७।२।११८ इति वृद्धि, आकाशस्य शब्द एवैको विशेषगुणो नेतर इत्यर्थः। तथाच 'समवायेन शब्दाधिकरणत्व (शब्दगुणकत्व) माकाशत्व' मित्याकाशलक्षणम्। ननु 'शब्दवत्त्व माकाशत्वम्' इति, शब्दस्य सर्वदा आकाशे उपलब्धेरभावात्। यदि 'शब्दवत्त्व' लक्षणं स्यात् तदा तस्य सदैव शब्दवत्त्वमपि स्यात्, नित्ययोगे मतुप्प्रत्ययविधानात्, तथा चोक्तम् —

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने।
सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः॥

इति, एवसति लक्षणस्यासम्भवो दोष प्रसज्येत, तस्माच्छब्दाधिकरणत्वमेव लक्षणं युक्तम्।

लाघवमनुसन्धाय कालत्वादीनामपि जातित्वं निषेधति—आकाशकालेति। आकाशत्व कालत्व दिक्त्वञ्चेत्यर्थ न जातिरिति तत्र हेतुमाह—एकव्यक्तिकत्वादिति अनेकसमवेतत्वाभावात् एकव्यक्तिवृत्तिधर्मस्य जातिबाधकत्वात् किन्त्वाकाशत्वादिकमुपाधि। एतद्विस्तरेण जातिबाधकप्रसङ्गेऽवोचाम। एकत्वसंख्यायोगि एकम् इत्येकस्य लक्षणम्, इद न सम्यक् घटादावतिव्याप्ते, आकाशवद् घटादीनामप्येकत्वापत्ते 'द्वित्वाद्यभाववदेकम्' इति चेत् तदपि न 'अयं घट अयमाकाश, इमौ द्वौ' इति प्रतीत्या आकाशेऽपि द्वित्वसत्त्व ननु द्वित्वाभाव तस्य व्यासज्यवृत्तित्वात् तथाचासम्भवो लक्षणदोष, सजातीयमात्रवृत्तिद्वित्वाभाववदेक मित्यपि न साधु, आकाशसजातीयस्याकाशान्तरस्याभावात् तादृशद्वित्वस्याप्रसिद्धे द्वित्वाभावाप्रसिद्धिरेव। स्वप्रतियोगिकभेदासमानाधिकरणधर्मवत्त्वमेकत्वमिति तु युक्त पश्याम, प्रकृते 'स्व'पदेनाकाशग्रह, स आकाश प्रतियोगी यस्यैवंविधो यो भेदोऽन्योन्याभाव, तस्य असमानाधिकरणो यो धर्म आकाशत्व, तद्वत्त्वमेव आकाशे एकत्व, आकाश-

प्रतियोगिकोभेदो नाकार्य (स्वास्यन्खभेदाभावात) किन्तु पृथिव्यादिषु वर्तते तत्र च नाकाशत्व धर्म अतएवाकाशत्व स्वप्रतियोगिकभेदासमानाधिकरणमुच्यत इति भाव ।

विशेषगुणान्तरेति—रूपादीत्यर्थ. तस्य व्यवच्छेदोऽभावबोधनम् शब्द विहाय नान्यारूपादि कश्चिदप्याकाशे विशेषगुणः तथा चार्य सूत्रम 'त आकाशे न विद्यन्ते' वै० २।१।५। ते रूपरसगन्धस्पर्शाश्चत्वारो गुणा आकाशे न सन्तीत्यर्थ । एतेन 'वैशेषिकोगुण' इति कथनेन । प्रमाणम् अनुमानम । तथाहीति ।

चक्षुर्ग्रहणायोग्येति—चक्षुर्ग्रहणायोग्या या बहिरिन्द्रियग्राह्या जाति अर्थात् शब्दत्वम, ताहशजातिमत्वात. यश्चक्षुर्ग्रहणायोग्यबहिरिन्द्रियग्राह्यजातिमान् स विशेषगुण इति व्याप्ति । स्पर्शवदिति दृष्टान्त । चक्षुर्ग्रहण चाक्षुष साक्षात्कार ग्राह्यत्व विषयता। वैयाकरणा मीमांसकाश्च शब्दस्य गुणभाव न मन्वते तदुक्तेनानुमानेन खण्डित बोध्यम। घटादौ व्यभिचारवारणाय अयोग्येत्युक्तम । आत्मनि व्यभिचारवारणाय बहिरिन्द्रियग्राह्येति । रसत्वादौ व्यभिचारवारणाय जातिपदिति ।

सम्प्रति शब्दस्य द्रव्याश्रितत्व साधयति अनुमानान्तरेण शब्दो द्रव्यसमवेत इति ■ द्वातमके पत्ते द्रव्यसमवेतत्व साध्यम, गुणत्वादिति हेतु । योयो गुण स स सर्वोपि द्रव्यसमवेत इति व्याप्ति (समवायसम्बन्धेन द्रव्याश्रित) सयोगवदिति दृष्टान्त । भवति हि करसङ्गसयाग समवायेन करसङ्गरूपद्रव्याश्रित. गुणत्वात् शब्दोपि गुण असावपि कस्यचिद्‌द्रव्यस्याश्रित एव । नच 'गुणत्व' हेतु स्वरूपासिद्ध इति वाच्यम, पूर्वानुमानेन तत्साधित यत ।

इत्यनुमानेनेति—उक्तेनानुमानेन । द्रव्यसमवेतत्वे समवायसम्बन्धेन द्रव्याश्रितत्व । सिद्धे अनुमत । तदनु परिशेषानुमानेन

आकाशस्य सिद्धिः कर्त्तव्येति शेषः । तत्प्रकारं दर्शयति—शब्दो नेति । स्पर्शवत् पृथिव्यादिचतुष्टय, तस्य पृथिवीजलतेजोवायूनामित्यर्थः 'चत्वारि स्पर्शवन्ति हि' इत्युक्तं साधर्म्यवैधर्म्यप्रकरणे पृथिव्यादीनां विशेषगुणो न शब्दः । शब्दः पक्षः, पृथिव्यादिसम्बन्धित्वेन विशेषगुणत्वाभावः साध्यम् । तत्र हेतुमाह अग्निसंयोगासमवायीत्यादि । अग्निसंयोगोऽसमवायिकारणं यस्य स अग्निसंयोगासमवायिकारणकः तस्य भावस्तत्त्वम् तदभावे सति' इति हेतोर्विशेषणपद 'सतन्त्यन्तं विशेषणम्' मिति नियमात् । अकारणगुणपूर्वकप्रत्यक्षत्वात् कारणगुणपूर्वकं प्रत्यक्षं यस्य तत् कारणगुणपूर्वकप्रत्यक्ष, न कारणगुणपूर्वकप्रत्यक्षं तदकारणगुणपूर्वकप्रत्यक्षं तस्य भाव. तस्मात्, अकारणगुणपूर्वकत्वे सति प्रत्यक्षत्वादित्यर्थः । तत्रोऽप्यपि व्याप्तिराकार'—यद् अग्निसंयोगरूपासमवायिकारणकत्वाभावविशिष्टाकारणगुणपूर्वकप्रत्यक्ष तथ स्पर्शवद्विशेषगुणः । यदि तु विशेष्यभागमात्रमुच्यते तदा पाकजरूपादौ हेतोर्व्यभिचार (अतिव्याप्तिः) स्यात्, अस्ति च पृथिवीनिष्ठपाकजरूपादिचतुष्टये अकारणगुणपूर्वकप्रत्यक्षत्वम्, परन्तु तत्र अग्निसंयोगोऽसमवायिकारणमस्ति नतु अग्निसंयोगासमवायिकारणकत्वाभावः । यदि तु विशेषणभाग एव हेतुः क्रियेत तदा पटरूपादावतिव्याप्तिः (हेतोर्व्यभिचारः) अस्ति च पटरूपादीनां कारणगुणपूर्वकप्रत्यक्षत्वम् यत. पृथिवीनिष्ठा अपाकजा रूपादय. कारणगुणोत्पन्ना उच्यन्ते । कारणगुणोत्पन्नत्वञ्च=स्वाश्रयसमवायिसमवेतगुणजन्यत्वम्, तद्यथा 'स्व' पटस्य रूपं, तदाश्रयः पटः तस्य समवायी तन्तुः, तत्र समवेतो गुणः तन्तुरूपमेव, तेन तन्तुरूपेण असमवायिकारणेन पटरूपं जन्यते अतः पटादिपृथिवीनिष्ठापाकजरूपादिक कारणगुणोत्पन्नमुच्यते यतस्तयोत्पत्तं, अतः कारणगुणपूर्वकमेवैषां प्रत्यक्षम्, ततश्च पटरूपादावपि अग्निसंयोगासमवायिकारणकत्वाभावः न पटरूपादावग्निसंयोग असमवायिकारणं तेन तदाद्यापत्तेः किन्तु पटरूपं प्रति तन्तु-

रूपमेवासमवायिकारणम्, पक्षैकैकभागस्यानुपादाने हेतुर्व्यभिचारी स्यादत उभयदलमुपात्तम्। जलपरमाणुरूपादाविति—अस्ति च जलपरमाणुरूपे अग्निसंयोगासमवायिकारणाकारणाभावविशिष्टकारणगुणपूर्वकत्वं धर्मः ततश्च सर्वस्यैव हेतोर्व्यभिचारः तस्मात् 'प्रत्यक्षे' तिपदं हेतौ निवेशितम्।

श्रयमत्र सारः—पृथिवीजलतेजोवायव एते चत्वारः स्पर्शवन्तः, स्पर्शवतां यो विशेषगुणः यथा पृथिव्या गन्धः, जलस्य शीतस्पर्शः, तेजस उष्णस्पर्शः, वायोरनुष्णाशीतस्पर्शः एतेषां प्रत्यक्षविशेषगुणस्य प्रत्यक्षं भवति तत् कारणगुणपूर्वकमेव, न तु शब्दस्य तथा प्रत्यक्षं, शब्दस्य प्रत्यक्षञ्चेद्गन्धादिवदेव भवेत् तदाऽयं पृथिव्यादिष्वन्यतमस्यैव गुणः स्यात्, किन्तु अग्निसंयोगासमवायिकारणाकारणाभावविशिष्टकारणपूर्वकप्रत्यक्षत्वधर्मेयानयं शब्दः तस्मान्न स्पर्शवतां विशेषगुणः किन्तु तद्भिन्नस्याकाशस्यैव द्रव्यस्य गुण इति। तथा च पारमर्षं सूत्रम्—'कार्यान्तराप्रादुर्भावाच्छब्दः स्पर्शवतामगुणः' वै० २।१।२५। इत्यादावभिधानेन भेर्यादिकार्ये शब्दस्य प्रादुर्भावेऽपि तद्भिन्ने घटपटादौ कार्यान्तरे तत्प्रादुर्भावाभावात् शब्दः स्पर्शवतां पृथिव्यप्तेजोवायूनामगुणो विशेषगुणो नेत्यर्थः।

सारसारस्तु—अयावद्द्रव्यभावी अयं शब्दः—द्रव्यस्थितिकालपर्यन्तं यस्य स्थितिः असौ यावद्द्रव्यभावी, यथा पृथिव्या गन्धादिगुणाः उत्पद्यमाना यावत्कार्यस्थायिनो यावद्द्रव्यभाविन इत्युच्यन्ते, शब्दस्तु न तथा किन्त्वयं मन्दमन्दतरमन्दतमादितारतम्यविशिष्टः शनैर्नाशमुपैति अस्याश्रयो द्रव्यं ( आकाशं तु न नश्यति ) तस्मात्पृथिव्यादिगतगन्धादिगुणविपरीतत्वान्नायं पृथिव्यादीनां विशेषगुणः।

ननु-माभूत्पृथिव्यादिचतुष्टयस्य शब्दो गुणः दिक्कालमनसां वा भविष्यति ? तत्राह—शब्दो न दिक्कालमनसामिति। तत्र हेतुमाह—विशेषगुणत्वात् इति। यो लौकिकसंयोगसंयुक्तसमवायादि

सम्बन्धेनेन्द्रियग्राह्य अस्ति च तेनैव सम्बन्धेन द्वीन्द्रियग्रहणायोग्यत्वधर्मवान् गुणत्वव्याप्यजातिमांश्च स विशेषगुण इत्युच्यते एतच्च गुणप्रस्तावे स्फुटीभविष्यति ।

दिक्कालमनःसु कश्चिदपि विशेषगुणो न वर्तत इति भाव ।

ननु—मास्तु शब्दो दिगादीनां गुण आत्मनस्तु स्यादिति? तत्राह—नात्मविशेषगुण इति । बहिरिन्द्रियग्राह्यत्वादिति हेतु ग्राहकं प्रत्यक्षत्वम्, रूपवदिति दृष्टान्त । यथा रूप बहिरिन्द्रियजन्यप्रत्यक्षत्वधर्मवत् अतो नात्मगुण एव शब्दोऽपि । आत्मविशेषगुणानामिच्छादीनां बहिरिन्द्रियेण प्रत्यक्षमेव न भवतीति भाव ।

इत्थञ्चेति—परिशेषानुमानेन शब्दाधिकरणस्य नवमद्रव्यस्याकाशस्य सिद्धिरित्यर्थ ।

एतदुक्तं भवति—प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गाच्छिष्यमाणे सम्प्रत्ययः परिशेषः यत्र प्राप्तिसम्भावना तत्रैव निषेधे सति, तद्भिन्नेऽप्राप्तिपूर्वक यद्विषयेऽनुमितिकरणं परिशेषानुमानम् ।

तथा च शब्द पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रित अष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वात् ।

अस्ति शब्दो गुण तेन च कस्मिंश्चिद्द्रव्य एव स्थेयम् द्रव्य विना गुणस्थितेरयोगात् परन्तु रूपादिवन्नाय शब्दो येन पृथिव्याद्याश्रित स्यात् प्रदर्शितेन प्रकारेण पृथिव्याद्याश्रितत्व तस्य प्रतिषिद्धमेव, गुणकर्मणोरप्यतस्याश्रयो भवेदिति तु मन्तव्याऽसम्भवात् नहि गुणो वा कर्म वा गुणकर्मणोराश्रय अपितु तयोराश्रयो द्रव्यमेव, एवञ्च पृथिव्याद्यष्टद्रव्याणि यद्द्रव्य तदेव समवायेन शब्दाश्रय स एव आकाशाख्य नवम द्रव्यमिति ।

उक्तञ्च—परत्र समवायात्प्रत्यक्षत्वाच्च नात्मगुणो न मनोगुणः । परिशेषाल्लिङ्गमाकाशस्य ' वै० २।१।२६।२७ परत्रेति आत्मभिन्न समवायात् नात्मगुण यदि शब्दो ज्ञानादिवदात्मनि

समवेतत्वात् तर्हि बधिरोऽपि शृणुयात् । प्रत्यक्षत्वाच्च न मनो-
गुणः जातिमत्त्वे सति बाह्यैकेन्द्रियजन्यप्रत्यक्षविषयत्वादित्यर्थः ।
एतेनैव हेतुना दिक्कालयोरपि न गुण इति सूत्रसूचितमेव । परिशेषा
दाकाशस्यैव लिङ्गमनुमापकमित्यर्थः ।

उक्तानुमाने बाधं स्वरूपासिद्धिं च शङ्कते—नचेति । बाधा-
दिति—तथाच स्पर्शवद्वायुगुणत्वस्य तत्र सत्त्वात् तदभावसाधने
बाधितो हेतुः ।

समाधत्ते—अयावद्द्रव्यभावित्वेनेति —यावद्द्रव्यस्थिति-
कालस्थितिकत्वं द्रव्यान्तसवत्त्वं स्वाश्रयनाशजन्यनाशप्रतियोगित्वं वा
यावद्द्रव्यभावित्वम् यस्त्र तदयावद्द्रव्यभावित्वम् इदञ्च पूर्वमेव
स्पष्टीकृतम् ।

ननु—आकाशे उड्डीयन्ते बलाका, इति प्रतीत्या आकाशं चाक्षुषमेव
मन्यताम् ? अन्यथा अधिकरणाप्रत्यक्षे उक्तप्रत्ययो न स्यात् आध
येताप्रत्यक्षं प्रति अधिकरणताप्रत्यक्षस्य प्रयोजकत्वादिति चेन्न, असौ
प्रत्ययः आलोकमेवावगाहते नत्वाकाशं चाक्षुषप्रत्यक्षं प्रति महत्त्वो
द्भूतरूपवत्त्वस्य प्रयोजकत्वात् आकाशे रूपाभावाच्चेत्यन्यत्र विस्तरः ।

तत्र शरीरस्य विषयस्य चाभावादिन्द्रियं दर्शयति—

**इन्द्रियं तु भवेच्छ्रोत्रमेकः सन्नप्युपाधितः ।**

नन्वाकाशं लाघवादेकं सिद्धं श्रोत्रं तु पुरुषभेदेन भिन्नं
कथमाकाशं स्यादिति चेत्तत्राह । **एकः सन्नपीत्यादि ।**
आकाश एक एव सन्नपि उपाधेः कर्णशष्कुल्यादेर्भेदाद्भिन्नं
श्रोत्रात्मकं भवतीत्यर्थः ॥

आकाशस्येन्द्रियं तु श्रोत्रमेव, श्रूयतेऽनेनेति 'श्रु' धातोः करणे
ष्ट्रन्प्रत्ययः । ननु आकाशस्यैकत्वे कथं श्रोत्रेन्द्रियस्य नानात्वम् ?
तत्राह—उपाधेरिति—शष्कुलीव कर्णौ इति वाक्यपदीये 'शष्कुली

पूरिका प्रोक्ता' इति निघण्टुः । कर्णशष्कुलीविवरावच्छिन्नमाकाशं श्रोत्रमित्यर्थः ।

इदन्तु बोध्यम्—आकाशमेकं विभु नित्यञ्च। 'घटाकाशो मठाकाश' इति नानात्वव्यपदेशस्तु घटमठाद्युपाधिभेदवशाद्बोध्यः । विभुत्वञ्च शब्दस्य सर्वत्रोपलम्भयोग्यतावत्त्वात् । मूर्त्तद्रव्यवृत्तिसंयोगवत्त्वाच्च । अतएव च नित्यत्वमपि । 'आत्मन आकाशः सम्भूत' इत्याद्याकाशोत्पत्तिवादिनी श्रुतिस्तु ब्रह्माण्डरूपोपाधिविषयत्वादाकाशाभिव्यक्तिपरा, अन्यथा परमाणूनामप्यनित्यतापद्येत । वस्तुतस्तु—आत्माकाशयोर्जन्यजनकभावोऽनुमानविरुद्ध, तेन श्रौतं तथाकथनमर्थवादरूपमेव । आकाशस्य शरीरम्भु न वर्त्तते, परं जैवादृष्टालौकिमाहात्म्यात् इन्द्रियमस्ति तच्च श्रोत्रम् शब्दधीजनकमिन्द्रियं श्रोत्रमिति तल्लक्षणम् । श्रोत्रेन्द्रियस्याकाशत्वे किं मानमिति चेत् ? 'यदिन्द्रियं रूपादिषु मध्ये यद्गुणग्राहकं तदिन्द्रियं तद्गुणयुक्तमिति व्याप्तेः श्रोत्रस्य शब्दगुणत्वेन शब्दगुणकत्वम्=समवायसम्बन्धेन शब्दसमवायिकारणत्वञ्चाकाशत्वमित्याकाशसमवायत्वात् आकाशत्वसिद्धिरिति सक्षेप । शब्द प्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वात् 'अयावद्द्रव्यभावित्वा' दित्यादि प्रशस्तमपि मूले ज्ञेयम् ।

इत्याकाशग्रन्थः ।

---

कालं निरूपयति—

**जन्यानां जनकः कालो जगतामाश्रयो मतः ॥४५॥**

तत्र प्रमाणं दर्शयितुमाह । **जगतामिति । तथाहि ।** इदानीं घट इत्यादिप्रतीतिः सूर्यपरिस्पन्दादिकं यदा विषयीकरोति तदा सूर्यपरिस्पन्दादिना घटादेः संबन्धो वाच्यः स । च संबन्धः संयोगादिर्न संभवतीति काल एव तत्सम्बन्धघटकः कल्प्यते । इत्थं च तस्याश्रयत्वमपि सम्यक् ॥ ४५ ॥

कालमिति—अवसरप्राप्तं काल लक्षयतीत्यर्थः । जन्याना-मिति—जन्यानां कार्याणां (उत्पत्तिमतां) जनको निमित्तकारणं य स 'काल' इति ।

कार्यमात्रंप्रति कालः समवायिकारणं भवितुं नार्हति, द्रव्यत्वाच्च असमवायिकारणमपि नैवेति हेतोः अनन्यगत्या निमित्त कारणमर्थो बोध्य ।

तथाच कार्यत्वावच्छिन्नंप्रति कालिकसम्बन्धावच्छेदेन निमित्तकारणत्व कालत्वम्, अर्थात् कालिकसम्बन्धावच्छिन्नकार्यत्वावच्छिन्ना या कार्यता, तन्निरूपिता या तादात्म्यसम्बन्धावच्छिन्नाधिकरणता, तादृशाधिकरणतया निमित्तकारणत्व कालत्वमिति काललक्षणम् ।

कालिकसम्बन्धावच्छिन्नेति निवेशेन दिशि, अधिकरणतयति पदेन घटादौ च नातिव्याप्ति ।

तथाचार्थं सूत्रम्—नित्येष्वभावादनित्येषु भावात् कारणे कालाख्येति । वै० २।२।९। नित्येष्वाकाशादिषु अभावात् 'युगपज्जात चिरजात क्षिप्र जात इदानीं जात दिवा जात नक्त जात' इत्यादिप्रत्ययस्याभावात्, अनित्येषु घटपटादिकार्येषु चोक्तप्रत्ययस्य भावात् अन्वयव्यतिरेकाभ्यां कार्यमात्रंप्रति यत् कारणं स काल इत्यर्थः ।

तत्रेति काले । प्रमाणम् अनुमानम् यथाऽस्ति तथा 'घटयितुं सन्दर्भं रचयति—तथाहीति । 'इदानीं घटोऽस्ति' इत्यादिप्रतीतिरिति शेष । सूर्यपरिस्पन्दः सूर्यक्रिया गतिरूपा । तथाच सूर्यक्रियया सह घटादेः जन्यपदार्थमात्रस्येत्यर्थ । संयोगादिरिति—आदिना समवायग्रह । न सम्भवतीति न प्रमाणसिद्धो भवतीत्यर्थः, सम्बन्ध विना चोक्तप्रतीत्या न भाव्य, तेन भवितव्य केनचित्सम्बन्धेन, सच सम्बन्ध 'स्वाश्रयतपनसंयोगिसंयोग' स्वरूप एव, एवमेव·

विधसम्बन्धघटक य कश्चन पदार्थ स एव काल इति कल्प्यते अनुमीयते ।

अत्र 'स्व' पदेन सूर्यक्रियाया ग्रहण तस्या आश्रय सूर्य तस्य संयोगी काल, तत्संयोग (कालिकसम्बन्ध) घटादौ वर्तते एतत्सम्बन्धघटक काल एव पदार्थ इत्यर्थ । अयमेव सम्बन्ध 'स्वसमवायिसंयुक्तसंयोग' इत्युच्यते—'स्व' पदेन पूर्ववत् सूर्यक्रियाया ग्रहण, तस्य समवायी सूर्य तत्संयुक्त काल तेन सह घटादीना (जन्याना) संयोग सम्बन्धो भवति 'द्रव्ययो संयोग' इति नियमात् । 'इदानी घटरूपमुत्पन्नम' इत्यादौ रूपादिगुणेन कालसम्बन्धस्तु 'स्वसमवायिसंयुक्तसंयोगिसमवेतत्व' घटनीय ।

'जगतामाश्रयो मत इति—काल 'सर्ववान्' इति प्रतीत्या सर्वाधिकरणत्वेन कालाख्यद्रव्यसिद्धिरितिभाव ।

प्रमाणान्तर दर्शति

**परापरत्वधीहेतुः क्षणादिः स्यादुपाधितः ।**

परत्वापरत्वबुद्धेरसाधारण निमित्त काल एव । परत्वापरत्वयोरसमवायिकारणसंयोगाश्रयो लाघवादतिरिक्तः काल एव कल्प्यत इति भाव । नन्वेकस्य कालस्य सिद्धौ क्षणदिनमासवर्षादिसमयभेदो न स्यादत आह–क्षणादिरिति । कालस्त्वेकोऽपि उपाधिभेदात्क्षणादिव्यवहारविषयः । उपाधिस्तु स्वजन्यविभागप्रागभावावच्छिन्न कर्म, पूर्वसंयोगावच्छिन्नविभागो वा, पूर्वसंयोगनाशावच्छिन्नोत्तरसंयोगप्रागभावो वा, उत्तरसंयोगावच्छिन्न कर्म वा । नचोत्तरसंयोगानन्तर क्षणव्यवहारो न स्यादिति वाच्यं, कर्मान्तरस्यापि सत्त्वादिति । महाप्रलये क्षणादिव्यवहारो यद्यस्ति तदा ध्वंस

त्या ध्वंसेनोपपादनीय इति । दिनादिव्यवहारस्तु तत्तत्क्षण-कूटैरेवेति ॥

परमूले—परत्वापरत्वधीहेतुरितिपरत्वापरत्वबुद्धेरसाधारणनिमित्तं काल एव। परत्वापरत्वबुद्धेरिति—अयमस्माज्ज्येष्ठ इत्येकस्मिन्भ्रातरि परत्वप्रत्ययः अयमस्मात्कनिष्ठ इत्यपरस्मिन्भ्रातरि अपरत्वप्रत्ययः, स च परत्वापरत्वगुणाधीनिबन्धन । परत्वापरत्वे च असमवायिकारणजन्ये भावकार्यत्वात् घटादिवत्, इत्यनुमानेन सासमवायिकारणके, असमवायिकारणश्च तयो कालपिण्डसंयोग एवेतिपरत्वापरत्वयोरसमवायिकारणसंयोगाश्रयतयापि कालसिद्धिरितिभावः।

नन्वेवं—तादृशसंयोगम्प्रति समवायिकारणमपि काल इति कथं सर्वत्र कालस्य निमित्तकारणतया प्रथमलक्षणप्रणयनम् ? उच्यते-यद्यपि कार्यमात्रम्प्रति निमित्तकारणं काल इत्युक्तं परमसौ कालिकसम्बन्धेन, स्ववृत्तिविभुसंयोगादिगुणान् प्रति तु द्रव्यत्वादसौ समवायिकारणं समवायसम्बन्धेनेति न पूर्वापरविरोध शङ्कनीयः। कालोऽमुं दिवमजनयत्, काल इमाः पृथिवीरुत' "अथर्व० कां० १९। सू० ५३। मं० ५। इत्याद्यागमोऽपि काले प्रमाणम्।

मायङ्ने—नन्विति। समयभेदः समयव्यवहारभेदः स च 'अद्य गन्ता श्व आगन्ता परश्व पठिता इत्यादिरूप'। समाधत्ते—क्षणादिरिति। उपाधित इति उपाधिभेदात् एकस्मिन्नपि क्षण-दिनादिव्यवहारः। कः स उपाधिरित्याकाङ्क्षायां मूर्त्तद्रव्यक्रिया-रूपमुपाधिं वर्णयितुमाह—उपाधिस्त्विति। तत्र प्रथममुपाधिमाह-स्वजन्यविभागेति। स्वजन्यविभागप्रागभावावच्छिन्नं कर्म प्रथम-क्षणोपाधिरित्यर्थः। अत्र 'स्व' पदेन मूर्त्तद्रव्यनिष्ठाया क्रियाया ग्रहणं, क्रिया कर्मेत्यनर्थान्तरम्।

पूर्वं क्रिया, क्रियातो विभाग, विभागात्पूर्वदेशसंयोगनाश तत उत्तरसयोगश्चेति नियम । एतन्नियमपूर्वक मूर्त्तद्रव्यनिष्ठया यया क्रियया द्वितीयस्मिन्क्षणे विभाग उत्पादनीय तस्य विभागस्य प्रथमक्षणे प्रागभाव, एवमसौ क्रिया स्वजन्यविभागप्रागभावविशिष्टा सती 'स्वजन्यविभागप्रागभावावच्छिन्ना' इत्युच्यते। इयमेव च प्रथमक्षणस्योपाधि, अर्थात् क्रियया जनिष्यमाणविभागस्य प्राग-भावविशिष्टा या क्रिया तद्द्वारैव काले 'अयं प्रथम क्षण' इति व्य-वहारो जायते।

क्रियाविभागप्रागभावौ द्वावेव यस्मिन्काले वर्त्तेते स काल 'प्रथमक्षण' उच्यते क्रिया च तस्योपाधिरिति विभागप्रागभावविशि ष्टक्रियोपलक्षित काल स्वाद्य क्षण इतिसार ।

द्वितीयक्षणोपाधिमाह—पूर्वसंयोगावच्छिन्नेति । मूर्त्तद्रव्य स्य य पूर्वदेशेन संयोग तादृशसयोगावच्छिन्नो य क्रियाजन्यो विभाग अर्थात्सयोगपूर्वको विभाग सोऽपि द्वितीयक्षणोपाधिरित्यर्थ । पूर्वसंयोगावच्छिन्नविभागोपलक्षित कालो द्वितीय क्षण इत्यर्थ ।

परिष्कृतार्थस्तु—स्वजन्यविभागनाश्यपूर्वसयोगविशिष्टस्वज-न्यविभाग । 'स्व' क्रिया तज्जन्यो विभाग (अर्थात् घटादिमूर्त्तद्रव्यस्य विभक्तप्रत्ययहेतुर्गुण ) तेन विभागेन नाश्यो य पूर्वसयोग, तद्वि शिष्टो य स्वजन्य =क्रियाजन्योविभाग इति। एव विवक्षया यत्किञ्चित्पू र्वसयोगविशिष्टस्य स्वजन्यविभागस्य ^यादिक्षणवृत्तित्वेऽपि, किंवा यत्किञ्चिद्विभागस्य स्वजन्यविभागनाश्यपूर्वसयोगविशिष्टस्य तथा त्वेऽपि न क्षति (द्वितीयक्षणोपपादकोपाधिलक्षणस्य ^यादिक्षणा-स्वरूपोपपादने नातिव्याप्ति )।

तृतीयक्षणोपाधिमाह—पूर्वसंयोगनाशावच्छिन्नेति । पूर्व-देशवर्त्ती य (मूर्त्तद्रव्यस्य) सयोग तादृशसयोगनाश (-ध्वस) सहितो य उत्तरदेशसयोगप्रागभाव स एव तृतीयक्षणोपाधि ।

अर्थात्—प्रथमक्षणे जायमानया क्रियया द्वितीयक्षणे उत्पद्यमानेन विभागेन तृतीयक्षणे पूर्वदेशवृत्तिसंयोगस्य नाशो भवति, तस्मिन्नेव तृतीयक्षणे चतुर्थक्षणजनिष्यमाणोत्तरदेशवर्तिसंयोगस्य प्रागभावोऽपि विद्यते, एवं रीत्या पूर्वसंयोगनाशावच्छिन्नोत्तरसंयोगप्रागभावस्तृतीयक्षणकल्पकत्वात् तृतीयक्षणोपाधिरित्यर्थः । पूर्वसंयोगनाशावच्छिन्नोत्तरसंयोगप्रागभावोपलक्षितः कालस्तृतीयक्षण इत्यर्थः ।

इदन्तु बोध्यम्—प्रागभावप्रतियोग्युत्पादक कारणकलाप एव प्रागभावस्य नाशक, तेन चतुर्थक्षणोत्पद्यमानोत्तरदेशसंयोग एव स्वोत्पत्तिक्षणे प्रागभाव विनाशयतीति—उत्तरदेशसंयोगप्रागभाव तृतीयक्षणपर्यन्तस्थायी तत्वधिककालपर्यन्तस्थायीति ।

चतुर्थक्षणोपाधिमाह- उत्तरसंयोगावच्छिन्नमिति । उत्तरदेशवर्तिसंयोगविशिष्टा क्रियैव चतुर्थक्षणोपाधि ।

अयमाशय —प्रथमक्षणे घटे क्रिया, द्वितीयक्षणे घटस्य पूर्वदेशात् क्रियाजन्यो विभाग, तृतीयक्षणे क्रियाजन्यविभागात् घटस्य पूर्वदेशवृत्तिसंयोगनाश, तत चतुर्थ क्षणे क्रियया घटस्योत्तरदेशसंयोग एवमुत्तरदेशसंयोग एव स्वहेतुक्रियाया नाशक, अर्थात् पञ्चमक्षणे सा क्रिया न तिष्ठति चतुर्थक्षणे तु नियमाना सैव उत्तरदेशसंयोगात्मकविशेषणविशिष्टा चतुर्थक्षणोपाधि । उत्तरसंयोगावच्छिन्नक्रियोपलक्षित कालश्चतुर्थ क्षण इत्यर्थ ।

उदयनाचार्यास्तु—उत्पन्न द्रव्यं यावद्गुणामुपधत्ते तावत्तन्तुसंयोगे वा यावन्न पट, उत्पन्ने वा कर्मणि यावन्न विभाग तावत्कालः *क्षण । सामग्री वा कार्यरहिता क्षण ।

* उक्तञ्च किरणावल्याम्—

> क्षणद्वय लव प्रोक्तो निमेषस्तु लवद्वयम् ।
> पञ्चदशनिमेषाश्च काष्ठाश्चिंशत्तुता कला ॥

श्रीधराचार्यास्तु—निमेषस्य चतुर्थो भागः क्षणः, क्षणद्वयेन लवः, अक्षिपक्ष्मकर्मोपलक्षितः कालो निमेष इत्याहुः।

पक्षमादिलक्षणे क्षणादिव्यवहाराभावमाशङ्कते—नचेति। उत्तरसंयोगसत्त्वे क्रियाया नष्टत्वात् इतिशङ्काग्रन्थार्थः।

समाधत्ते—कर्मान्तरस्यापीति—चतुर्थक्षणे क्रियाया नष्टायामपि तस्मिन्नेव घटादिमूर्तद्रव्ये क्रियान्तरसत्त्वात्पूर्ववत् क्षणादिव्यवहारसिद्धिरिति नानुपपत्तिश्चतुर्थादिक्षणानामिति समाधानग्रन्थार्थः।

ननूक्तक्षणलक्षणं महाप्रलयात्मकक्षणे अव्याप्तं तत्र सकलघटादिकर्मणोऽभावादितिशङ्कायामाह—महाप्रलय इति। महाप्रलये क्षणादिव्यवहारो नेति सिद्धान्तानुयायिनः, तादृशव्यवहारे तु भक्त्या पदार्थध्वंस एव क्षणात्मककालोपाधिरवसेयः।

अस्तु क्षणव्यवहारसिद्धिः दिनादिव्यवहारः कथं सेत्स्यति? तत्राह—दिनादीति। तत्तत्क्षणसमुदायैरित्यर्थः। आदिना मासादिव्यवहारग्रहः प्रदर्शितश्चैवाधस्तात् टिप्पणे किरणावलीप्रमाणेन।

एवञ्च सकलकालप्रपञ्चविलोडनेन कालस्य लक्षणमत्र सुनिष्पन्नम्। तथाहि—

---

त्रिंशत्कलो मुहूर्तः स्यात् त्रिंशद्रात्र्यहनी च ते।
अहोरात्रे पञ्चदश पक्षो मासस्तु तावुभौ॥
ऋतुर्मासद्वयं प्रोक्तमयनन्तु ऋतुत्रयम्।
अयनद्वितयं वर्षो मानुषोऽयमुदाहृतः॥
एष दैवस्त्वहोरात्रस्ते पक्षादि च पूर्ववत्।
देववर्षसहस्राणि द्वादशैव चतुर्युगम्॥
चतुर्युगसहस्रन्तु ब्रह्मणो दिनमुच्यते।
रात्रिश्चैतावती तस्य ताभ्यां पक्षादिकल्पना।

विभुत्वे सति दिगसमवेतपरत्वापरत्वासमवायिकारणं कालः।
परत्वापरत्वानाश्रयत्वे सति विजातीयपरत्वापरत्वासमवायिकारण-
संयोगाश्रयः कालः। अतीतादिव्यवहारहेतुर्वा कालः। वर्त्तमानध्वं-
सप्रतियोगित्वमतीतत्वम्, वर्त्तमानप्रागभावप्रतियोगित्वं भविष्य-
त्वम्, स्वसप्रागभावानधिकरणकालवृत्तित्वं वर्त्तमानत्वम् इति
विवेकः। एतेषां लक्षणानां समन्वयप्रकारो ग्रन्थगौरवभयान्न प्रता-
नितः। स्वयमूह्यः।

कालसाधकानुमानाकारस्तु—ज्येष्ठकनिष्ठशरीरनिष्ठे परत्वाप-
रत्वे असमवायिकारणजन्ये जन्यगुणत्वात् रूपवत्।

अन्ये तु—बहुतरसूर्यपरिस्पन्दविशिष्टपिण्डज्ञानात् कालिक-
परत्वमुत्पद्यते, अल्पतरसूर्यपरिस्पन्दविशिष्टपिण्डज्ञानात्कालिका-
परत्वोत्पत्तिः।

तदर्थं च कालानुमानम्—तद्विशिष्टज्ञानं विशेषणविशेष्योभय-
सम्बन्धघटकसापेक्षं साक्षात्सम्बन्धाभावे सति विशिष्टज्ञानत्वात्
लोहितः स्फटिक इतिवत्।

'अयं शरीरादिरूपपिण्डो बहुतरसूर्यपरिस्पन्दवान्' इत्याका-
रककालिकपरत्वनिमित्तविशिष्टज्ञानं 'तद्विशिष्टज्ञानम्' इति पक्ष-
पदार्थः।

क्रियारूपं विशेषणं पिण्डरूपं विशेष्यं तदुभयसम्बन्धघटको
यः कश्चन पदार्थः तत्सापेक्षमिति साध्यपदानामर्थः। शिष्टान्यक्ष-
राणि सुगमानि। यत् साक्षात्सम्बन्धाभावविशिष्टं विशिष्टज्ञानं तत्
विशेषणविशेष्योभयसम्बन्धघटकसापेक्ष'मिति व्याप्तेराकारः, यथा
लोहितः स्फटिक इतिज्ञानम्, अत्र स्वभावतः शुभ्रः स्फटिको विशे-
ष्यम्, लोहितरूपं विशेषणम् परन्तु लोहितरूपस्य साक्षात्सम्बन्धो
नैवास्ति स्फटिके। संयोगसमवायश्चेति द्वावेव सम्बन्धौ साक्षात्स-
म्बन्धपदेनोच्येते। तत्र स्फटिके लौहित्यस्य न संयोगो नापि सम-

वायः तस्य जवापुष्पादिद्रव्यसमवेतत्वात्, जवापुष्पस्य स्फटिकेन सह संयोगः साक्षात्सम्बन्धो ननु लौहित्यस्य, एवं स्वसमवायिसं-योगरूपेण परम्परासम्बन्धेन लौहित्यं स्फटिके भासते। 'लोहितः स्फटिकः' इत्याकारकं विशिष्टज्ञानं साक्षात्सम्बन्धाभावे सति विशिष्ट-ज्ञानत्वात् विशेषणविशेष्योभयसम्बन्धघटकं यद् जवापुष्पादिद्रव्यं तत्सापेक्षमेव, इत्थं च (ज्येष्ठः) पिण्डो बहुतरसूर्यपरिस्पन्दवान् इति विशिष्टज्ञानमपि तत्त्वात् विशेषणविशेष्योभयसम्बन्धघटकसा-पेक्षम् बहुतरसूर्यपरिस्पन्दो विशेषणं शरीरादिरूपपिण्डस्तु विशेष्यम् परमुभयोः न साक्षात्सम्बन्धः किन्तु स्वसमवायिसंयुक्तसंयोगरूपः परम्परासम्बन्धः एवोभयसम्बन्धः अत्र 'स्व' पदेन सूर्यक्रियारूप-विशेषणग्रहः तस्य समवायी सूर्यः तत्संयुक्तः कालः तस्य कालस्य संयोगः पिण्डेन सह वर्तते एवंरीत्या सूर्यक्रियापिण्डसम्बन्ध-घटकः पदार्थः काल इति सिद्धम्।

साङ्ख्याचार्यास्तु—पञ्चविंशतितत्त्वप्रतिज्ञाभङ्गभिया 'कालं' मतिरिक्तं पदार्थं न मन्यते, किन्तु प्रकृत्यर्थेऽपि कालस्य क्षण-दिनादिभेदो येनोपाधिभिः स्वीकृतः त एवोपाधयोऽतीतादिव्यवहार-हेतवो भवन्तु तादृशोपाधिविलक्षणः कथमतिरिक्तः कालः। यथा चाहुर्योगभाष्यकाराः—'स खल्वयं कालो वस्तुशून्यो बुद्धिनिर्माणः शब्दज्ञानानुपाती लौकिकानां व्युत्थितदर्शनानां वस्तुस्वरूप इवावभा-सते' इति।

योगवार्त्तिककारस्तु—क्षणात्मकं कालः स्वीकर्तव्य एवेत्य-भिप्रायवान् 'क्षणस्तु वस्तुपतितः' इत्याद्युत्तरभाष्यानुरोधात् अन्यथा क्रमिकपरिणामानुपपत्तिः एवञ्च क्षणाख्यः सर्वोऽपि कालः सर्व-वस्तुपरिणामहेतुरेव इत्याह इति संक्षेपः।

दिशं निरूपयति—

दूरान्तिकादिधीहेतुरेका नित्या दिगुच्यते ॥ ४६ ॥

दूरत्वमन्तिकत्वं च दैशिकं परत्वमपरत्वं बोध्यम् । तद्बुद्धेरसाधारणं बीजं दिगेव। दैशिकपरत्वापरत्वयोरसमवायिकारणसंयोगाश्रयतया लाघवादेका दिक् सिध्यतीति भावः ॥ ४६ ॥

'इदमस्मात् दूरम् इदं नदिष्ठम' इत्याकारकबुद्धेरसाधारण निमित्तकारण दिक् इत्याशयवान् दिश निरूपयति दूरान्तिकादीति। किं दूरत्व किमन्तिकत्वमित्याकाङ्क्षायामाह-दैशिकपरत्वमपरत्व मिति। दैशिकपरत्वापरत्वेति-अस्यायमर्थः समीपदेशस्थितघटादि मूर्तद्रव्यापेक्षया दूरदेशस्थितपटादिमूर्तद्रव्ये दैशिक परत्वम एव दूरदेशस्थितघटादिमूर्तद्रव्यापेक्षया समीपदेशस्थितघटादिमूर्तद्रव्ये दैशिकमपरत्व वर्तते। तत्र दैशिक परत्वापरत्वे असमवायिकारण जन्ये जन्यगुणत्वात् घटनिष्ठरूपवत्। यो यो जन्यगुण स सर्वोऽपि असमवायिकारणजन्य यथा घटनिष्ठ रूप जन्यगुणत्वात् कपालगतरूपासमवायिकारणजन्य तथा दूरत्व = परत्व अन्तिकत्व = अपरत्व गुणाऽपि जन्यगुणत्वात् असमवायिकारणजन्य स्यात्, तत्र यस्मिन् मूर्ते ( घटादिपिण्डे ) परत्वापरत्वे उत्पद्येते तेन सह यस्य द्रव्यस्य सयोग ( असमवायिकारणरूप ) तदेव द्रव्य दिगिति बोध्यम् तदसमवायिकारण दिग्वस्तुनो सयोग एवेति भाव ।

काललक्षणवदत्रापि लक्षणान्तर कल्प्यम् तथाहि—दैशिकनिरूपणासम्बन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपितताद्रात्म्यसम्बन्धावच्छिन्नतया निमित्त कारण दिग्।

तथाचार्ष सूत्रम—'इत इद मिति यतस्तद्दिश्यं लिङ्गम्'। वै० २।२।१०।

इत =सयुक्तसयोगाल्पीयस्त्वाधिकरणाद् द्रव्यात् इद बहुतरसयुक्तसयोगाधिकरण द्रव्य पर दूरम्, इतश्च सयुक्तसयोगभूय

मतश्चास्याः सिद्धावनुमानान्तरमपि—'इदं दूरमिति प्रत्ययः, इदं समीपमिति प्रत्ययश्च पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्यसम्बन्धप्रयुक्तः परत्वापरत्वहेतुकत्वात् कालिकपरत्वापरत्ववत्' इति सामान्यतोदृष्टं बोध्यम् ।

इयमपि कार्यमात्रं प्रति साधारणं निमित्तं 'इह दिशि कृष्णः' 'परस्यां दिशि रामः' इत्यादिप्रत्ययात् ।

नन्वेकैव दिक् तदा प्राचीप्रतीच्यादिव्यवहारः कथमुपपद्यतामित्यत आह—

## उपाधिभेदादेकापि प्राच्यादिव्यपदेशभाक् ।

यत्पुरुषस्य उदयगिरिसंनिहिता या दिक् सा तस्य प्राची । एवमुदयगिरिव्यवहिता या दिक् सा प्रतीची । एवं यत्पुरुषस्य सुमेरुसन्निहिता या दिक् सोदीची । तद्व्यवहिता त्ववाची । "सर्वेषामेव वर्षाणां मेरुरुत्तरतः स्थितः" इति नियमात् ॥

आशङ्कते—नन्विति । समाधत्ते—उपाधिभेदादिति परममूले । वस्तुतो दिश एकत्वेऽपि तत्तदुपाधिभेदेन प्राच्यादिसञ्ज्ञाभेद इत्यर्थः । प्राच्यादिसञ्ज्ञास्तु निमित्तभूतानुपाधीनाह—यत्पुरुषस्येति । पुरुषस्येति पदार्थमात्रोपलक्षणम् । तथाच यद्देशोदयगिरिसन्निहितं यन्मूर्त्तं सा ततः 'प्राची' इति । प्रागस्यामञ्चति सूर्य इति व्युत्पत्तेः । यथा प्रयागस्य काशी । यस्मादुदयाचलविप्रकृष्टं यन्मूर्त्तं तत्तस्य प्रतीची, प्रातिकूल्येनास्यामञ्चति सूर्य इति व्युत्पत्तेः, यथा गयाया पाटलीपुत्रस्य वा काशी । यस्मात्सुमेरुसन्निकृष्टं यन्मूर्त्तं तत् तस्योदीची, उदगस्यामञ्चति सूर्य इति व्युत्पत्तेः, यथा रामेश्वरक्षेत्रस्य काशी । यस्मात्सुमेरुविप्रकृष्टं यन्मूर्त्तं तत्तस्यावाची, अवागस्यामञ्चति सूर्य इति व्युत्पत्तेः, यथा काश्या रामेश्वर-

सूत्रम् । एवं खण्डान्तराण्यप्यूहनीयानि । इममेवाभिप्रायमनुसृत्याह—सर्वेषामेवेति । तथाचैषं सूत्राणि—आदित्यसंयोगाद् भूतपूर्वाच्च भविष्यतो भूताच्च प्राची ।

तथा दक्षिणा प्रतीच्युदीची च । एतेन दिगन्तरालानि व्याख्यातानि । वै० २।२।१४, १५, १६।

सर्वसारस्तु—सूर्योदयसन्निहिता दिक् प्राची, तद्व्यवहिता दिक् प्रतीची, प्राच्यभिमुखस्थितपुरुषवामदेशावच्छिन्ना दिगुदीची, तादृशपुरुषदक्षिणदेशावच्छिन्ना दिगवाची, यत्र पतति सा दिगूर्ध्वा, यत्र पतति साऽधः, एवं विदिशोऽपि अन्या कल्पनीया । इदन्तु बोध्यम्—जन्यमात्रं क्रियामात्रं वा कालोपाधि, मूर्तमात्रन्तु दिगुपाधिरिति ।

दिक्कालौ नेश्वरादतिरिच्येते किन्तु ईश्वर एव तत्तदुपाधिविशिष्टः सन् इदानीं प्राचीप्रतीच्यादिव्यवहारनिमित्तम् इति दीधितिकृता मतं तन्न युक्तम् प्रमाणाभावात् । जीव एव तथा निमित्तं स्यादिति विनिगमनाविरहाच्च (एकपक्षपातिनी युक्तिर्विनिगमना) । ईश्वरस्य जगज्जन्मादिकं फलम् आधाय तत्कल्पनीयमिति लाघवतर्कस्यैव विनिगमकत्वे न दोष इति चेत् ? तदा अदृष्टादिसाधारणकारणानामपीश्वरेऽन्तर्भावप्रसङ्ग इति कृतं विस्तरेण ।

इति दिग्ग्रन्थः ॥

आत्मानं निरूपयति—

**आत्मेन्द्रियाद्यधिष्ठाता करणं हि सकर्तृकम् ॥४७॥**

आत्मत्वजातिस्तु सुखदुःखादिसमवायिकारणतावच्छेदकतया सिद्ध्यति । ईश्वरेऽपि सा जातिरस्त्येव । अदृष्टादिरूपकारणाभावान्न सुखदुःखाद्युत्पत्तिः । नित्यस्य स्वरूपयोग्यत्वे फलावश्यंभाव इति नियमस्याप्रयोजकत्वात् । परे त्वीश्वरे सा जातिर्नास्त्येव प्रमाणाभावात् । नच दशमद्रव्यत्वापत्तिः, ज्ञानवत्त्वेन विभजनादित्याहुः । इन्द्रियादीति । इन्द्रियाणां शरीरस्य च परंपरया चैतन्यसंपादकः । यद्यप्यात्मनि "अहं जाने अहं सुखी" इत्यादिप्रत्यक्षविषयत्वमस्त्येव तथापि विप्रतिपन्नं प्रति प्रथमत एव शरीरादिभिन्नस्तत्प्रतीतिगोचर इति प्रतिपादयितुं न शक्यत इत्यतः प्रमाणान्तरं दर्शयति । करणमिति । कुठारादीनां छिदादिकरणानां कर्तारमन्तरेण फलानुपधानं दृष्टम् । एवं चक्षुरादीनां ज्ञानकरणानां फलोपधानमपि कर्तारमन्तरेण नोपपद्यत इत्यतिरिक्तः कर्ता कल्प्यते ॥

आत्मानं—निरूपयतीति अवसरसङ्गत्या इति शेष । परममूले आत्मेति—इन्द्रियादीनामधिष्ठाता अवच्छेदकतासम्बन्धेन इन्द्रियादीनांचैतन्य ( ज्ञानवत्त्व ) सम्पादक । शरीरेन्द्रियाद्यवच्छेदकम, आत्मा अवच्छेद्य इत्यर्थ । आदिना शरीरपरिग्रहः । एवञ्च इन्द्रियाद्यधिष्ठातृत्वं समवायेन ज्ञानाधिकरणत्व वा आत्मनो लक्षणं फलितम । कालिकादिसम्बन्धेन कालादीनामपि ज्ञानाधिकरणत्वेऽतिव्याप्तिः स्यात तद्वारणाय समवायेनेत्युक्तम ज्ञानमितीच्छादीनामप्युपलक्षणम ।

तत्रात्मनि प्रमाणमाह—करणमिति । तथाच पारमर्षं सूत्रम्—'आत्मेन्द्रियार्थसन्निकर्षाद्यन्निष्पद्यते तदन्यत्' वै० ३।१।१८। आत्मेन्द्रियसन्निकर्षात्सावज्ज्ञानमुत्पद्यते तदात्मनि लिङ्गमित्यर्थ, इदञ्च लिङ्गं प्रसिद्धादिद्रव्यावासेभ्यः अन्यत्तमद्धेतुरित्यर्थ तथाहि-ज्ञानं क्वचिदाश्रितं कार्यत्वाद्रूपवत् इत्यनुमानमात्मनि मानम् ।

नन्वात्मजातौ किं मानमित्याह—आत्मत्वजातिस्त्विति । सुखदुःखादीति—आदिना ज्ञानेच्छादिग्रह तथाच गौतमीय सूत्रम्—इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमिति । न्या० १।१।१०।

समवायसम्बन्धावच्छिन्ना या सुखदुःखादिनिष्ठा कार्यता तादृशकार्यतानिरूपिता या आत्मनिष्ठा समवायिकारणता सा किञ्चि द्धर्मावच्छिन्ना कारणतात्वात् तन्तुनिष्ठकारणतावत् तादृशकारण तावच्छेदकत्व च प्रकृते आत्मत्वमेव ।

अथवा—जीवात्मनिष्ठा या आत्मपदशक्यता सा किञ्चिद्ध र्मावच्छिन्ना शक्यतात्वात् घटनिष्ठघटपदशक्यतावत् तादृशशक्य तावच्छेदकत्वञ्च प्रकृते आत्मत्वमेवत्यात्मपदशक्यतावच्छेदकतया आत्मत्वजातिसिद्धिर्बोध्या ।

ईश्वरे आत्मत्वजातौ मानाभाव इति वादिनं प्रत्याह—ईश्व रेऽपि सैति—'आत्मा वारेद्रष्टव्य' इत्यादौ ईश्वरेऽपि आत्मपद व्यवहारादितिभाव ।

नन्वेव जीववदीश्वरोऽपि दुःखादिमान् स्यात् ? अत आह—अदृष्टादिरूपेति । अदृष्टमेव सुखदुःखाद्युपभोगहेतु ईश्वरे च तत्रा स्त्यतो जातिसत्त्वेऽपि न सुखाद्युत्पत्तिरितिभाव ।

ननु—आत्मत्व नित्य यत्र नित्य स्वरूपयोग्यता तत्र कदा चित् फलमपि भवति, यथा च अरण्यस्थोऽपि दण्ड कदाचित्

घटस्यकारणं भवत्येव, एवमीश्वरे सुखादियोग्यतायां कदाचिदसौ जीववत् सुखादिमान् स्यात् अत आह—नित्यस्येति। अप्रयोजकत्वादिति—कारणतावच्छेदकत्वाभावात् नायं नियमोऽव्यभिचारी यतः। जलपरमाणौ स्नेहयोग्यतायां विद्यमानायामपि स्नेहानुत्पत्तेः। जन्यजलएव स्नेहो जायत इत्युपपादितमधस्तात्।

परेत्विति। स्पष्टम्। नन्वेवं द्रव्यविभाजकवाक्ये आत्मपदेन जीवस्यैव ग्रहणे ईश्वरपदस्य पृथक् निवेशे दशमद्रव्यत्वापत्तिः स्यादित्यत आह—नचेति। आत्मपदं विहाय तत्स्थाने 'ज्ञानवत्' पदं निवेशयिष्याम ज्ञानवत्त्वञ्च द्विविधं जीवेश्वर भेदादिति व्याख्यास्याम इत्यर्थः। आहुरिति कथनेन नेदं ममसंमतमिति सूचितम्।

इन्द्रियाणामिति— इन्द्रियाद्यधिष्ठाता' इतिमूलव्याख्यानम्। आदिपदगृहीतं दर्शयितुमाह—शरीरस्येति। चैतन्यं ज्ञानवत्त्वम्। एतेनात्मनि प्रमाणं दर्शितम्। इन्द्रियाणि शरीरञ्च ज्ञानाधिष्ठितम् अचेतनत्वे सति जनकतासम्बन्धेन प्रयत्नवदकतासम्बन्धेन वा ज्ञानवत्त्वात् वास्यादिवदित्यनुमानमित्यर्थः। अचेतनं चेतनाधिष्ठितं कार्यं करोतीति व्याप्तेः। 'अहं सुखीति' आदिना अहं दुःखी अहंज्ञानामि इत्यादि बोध्यम्।

प्रत्यक्षविषयत्वमिति—मानसप्रत्यक्षविषयत्वमित्यर्थः। नच 'तत्रात्मामनश्चाप्रत्यक्षे' वै० ८।१।२ इतिसूत्रविरोधः, परात्माभिप्रायेण तस्य व्याख्यातत्वं च। स्फुटमिदमात्मतत्त्वविवेके। विप्रतिपन्न प्रतीति—अहमिति प्रतीते शरीराद्यतिरिक्तविषयकत्वे विवादग्रस्त प्रतीत्यर्थः।

करणमितीति—छिद्यत करणं कुठारादि सकर्तृकं फलोत्पादने कर्तृसहकृतम्।

अस्यायमर्थः—चक्षुरादीनि इन्द्रियाणि रूपाद्युपलब्धौ सकर्तृकाणि करणत्वात् छिदादिक्रियासाधकतमकुठारादिवत् यद्येवा

कर्त्ता=प्रेरक ( सञ्चालक ) यथा कुठारादे तथा स यथात्मेरयनु- मानमात्मनि प्रमाणम् ।

ननु शरीरस्यैव कर्तृत्वमस्त्वत आह—

शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः ।
तथात्वं चेदिन्द्रियाणामुपघाते कथं स्मृतिः ॥ ४८ ॥

ननु चैतन्यं ज्ञानादिकमेव मुक्तात्मना त्वन्मत इव मृत- शरीराणामपि तदभावे का क्षतिः, प्राणाभावेन ज्ञानाभावस्य सिद्धेरिति चेन्न, शरीरस्य चैतन्ये बाल्ये विलोकितस्य स्था- विरे स्मरणानुपपत्तेः, शरीराणामवयवोपचयैरुत्पादविनाशशा- लित्वात् । न च पूर्वशरीरोत्पन्नसंस्कारेण द्वितीयशरीरे संस्कार उत्पद्यत इति वाच्यम्, अनन्तसंस्कारकल्पने गौरवात् ।

चार्वाक शङ्कते—नन्विति । तस्योत्तरमाह शरीरस्येति यदि शरीरं चेतनं कर्तृ स्यात् तर्हि मृतेऽपि शरीरे चैतन्यमुपलभ्येत अतो ॥ शरीरं चक्षुरादीन्द्रियनियमनकर्तृ इति भाव ।

पुन स एव देहात्मवादी चार्वाक शङ्कते—ननु चैतन्यमिति। यथा तव नैयायिकस्य मते मुक्तात्मना प्राणाभावेन ज्ञानाभाव एवमेव ममापि सिद्धान्ते मृतशरीरे चैतन्याभावेऽपि तस्यात्मत्वे न किञ्चिद् क्षति यथा ज्ञानेच्छाकृत्यादीनि त्वन्मते मुक्ता मसु न भवन्ति तथैव मन्मते मृतशरीरेषु इत्युभयत्रापि समा समापत्तिरिति नैक एव प्रति चार्य इति पूर्वपक्षिणोऽभिप्राय। सिद्धान्ती समाधत्ते—नेति। शरीरे- स्येति—यदि शरीरमेव चेतन आत्मा स्यात् तर्हि बाल्ये यत्कन्दुक क्रीडादिकमनुभूतं वार्धक्ये तस्य स्मृतिर्न भवेत् तदा तस्य अनुभ

वाश्रयस्य ) बाल्यशरीरस्य नष्टत्वात् 'यस्यानुभवः तस्यैव स्मृति' रिति नियमादिति भावः।

अथ स्वप्रयोज्यसंस्कारवत्त्वसम्बन्धेन बाल्यशरीरानुभवजन्यसंस्कारा वृद्धशरीरे जायन्त इति न स्मरणानुपपत्तिदोष इति चेत् तहानन्तसंस्काराणां कल्पने गौरवमापद्येत यतः अवयवानां वृद्धिह्रासाभ्यां प्रतिक्षणं शरीरं परिणमति पदमुत्तरोत्तरसंस्कारोत्पत्तिकल्पन महद् गौरवं तव मते, मम तु देहाद्भिन्न एक एवानुभवतज्जन्यसंस्कारयो स्मृतेश्चाश्रय आत्मा इति महल्लाघवम् इत्यभिप्रायवान् 'नच' इत्यारभ्य 'गौरवा' दित्यन्तो ग्रन्थः।

एवं शरीरस्य चैतन्ये बालकस्य स्तन्यपाने प्रवृत्तिर्न स्यात्, इष्टसाधनताज्ञानस्य तद्धेतुत्वात्तदानीमिष्टसाधनतास्मारकाभावात्। मन्मते तु जन्मान्तरानुभूतेष्टसाधनत्वस्य तदानीं स्मरणादेव प्रवृत्तिः। नच जन्मान्तरानुभूतमन्यदपि स्मर्यतामिति वाच्यम्, उद्बोधकाभावात्। अत्र त्वनायत्या जीवनादृष्टमुद्बोधकं कल्प्यते। इत्थं च संसारस्यानादितया आत्मनोऽनादित्वसिद्धावनादिभावस्य नाशासंभवान्नित्यत्वं सिद्धयतीति बोध्यम्।

दृढा मां दोषान्तरं मुखापयति—एवमिति। इष्टसाधनताज्ञानस्य 'इदं ममेष्टसाधनम्' इत्याकारकज्ञानस्य। तद्धेतुत्वात् प्रवृत्तिहेतुत्वात्। यावदिष्टसाधनताज्ञानं न भवति तावत्र क्वाचिदपि प्रवृत्तिर्नदेति इष्टसाधनताज्ञानञ्च अननुभूते पदार्थे नैव जायते, यदि देह एवात्मा स्यात्तदा पूर्वं तेन कदाचिदपि स्तन्य-

पान नानुभूते, तर्हि कथं तत्संस्कारः कथञ्च तादृशं ज्ञानं ? कथं वा मातुः स्तनपाने प्रवर्त्तेतेति सर्वथा दुरुत्तरं चार्वाकस्येति भावः स्वमते सिद्धां तां प्रवृत्तिं समर्थयते—मन्मते तु' इति । जन्मान्तरानुभूतेति—देहातिरिक्तः उत्क्रान्तिगत्यागतिभाजो य आत्मा पूर्वस्मिञ्जन्मनि स्तन्यपानं ममेष्टसाधनमिति बहुवारं तद्विषयमिष्टसाधनत्वमनुभूतं तेन तदानीं ( स्तन्यपानप्रवृत्त्यव्यहितपूर्वकाले ) स्मरणादेव जायते प्रवृत्तिरिति न क्षतिः ।

ननु अन्यदपि पूर्वजन्मानुभूतं कुतो न स्मर्यते बालेन इत्याह—नवेति । उद्बोधकाभावादिति । नायं नियमो यद्दृष्टमिष्टञ्च सर्वं स्मरेत् इति किन्तु अनुभवजनिताः संस्कारा उद्बुद्धाः सन्त एव स्मृतिहेतवो नानुद्बुद्धाः प्रकृते च इष्टसाधनत्वभिन्नपदार्थविषयकसंस्कारा णां न किमप्युद्बोधकमिति नान्यत् स्मर्यते । अगत्यागत्या अगतिकगतिन्यायेन । जीवनादृष्टम् धर्माधर्मौ । कल्प्यते अनुमीयते । अन्यथा इष्टसाधनताया अनुभवाभावेन उद्बोधकाभावेन च स्मरणासम्भवस्तेन च प्रवृत्त्यसम्भवेन बालः शुष्ककण्ठो म्रियेतेतिभावः । आत्मनो नित्यत्वं साधयति इत्थञ्चेति । स्तन्यपानप्रवृत्त्यनुकूलेष्टसाधनत्वस्मरणे । भावस्येति—ननु प्रागभावस्य अनादित्वेऽपि नाशो न वा कथं नाशासम्भवादिति—यावज्जन्यभावः सर्वथाऽपि विनाशीति व्याप्तेः, आत्मनोऽनादित्वेन जन्यभावत्वरूपहेतोरभावान्नैव नाशमनुमातुमर्हतीति यथैव । श्रुतिश्च अविनाशीवारेऽयमात्मानुच्छित्तिधर्मा (बृहदा० अ०८। ब्रा० ५। क० १४।) इत्येवमात्मनित्यत्वे भवति प्रमाणम् ।

अयमत्र चार्वाकमतसंक्षेपः—

अत्र चत्वारि भूतानि भूमिवार्यनलानिलाः ।
चतुर्भ्यः खलु भूतेभ्यश्चैतन्यमुपजायते ॥

किण्वादिभ्य समेतेभ्यो द्रव्येभ्यो मदशक्तिवत् ।
अहं स्थूलः कृशोऽस्मीति सामानाधिकरण्यतः
देहः स्थौल्यादियोगाच्च स एवात्मा न चापरः ।
मम देहोऽयमित्युक्तिः सम्भवेदौपचारिकी ॥

चत्वार्येव भूतानि तत्त्वानि, देह एवात्मा मिलितेभ्यो भूतेभ्यो मदशक्तिवच्चैतन्यमुपजायते विनष्टेषु तेषु स्वयमेव विनश्यति, नास्ति परलोकः, न पुण्यं पापं वा कर्म यत्फलं तत्र भुञ्जीत । प्रत्यक्षमेवैकं प्रमाणम् । अङ्गनालिङ्गनादिजन्यं सुखमेव पुरुषार्थः, मृतिरेव मोक्षः । उक्तञ्च—

यावज्जीवं सुखं जीवेदृणं कृत्वा घृतं पिबेत् ।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः ॥

धूर्ता एव लोकसुखवञ्चका बहुवित्तव्ययायाससाध्ये अग्निहोत्रादिकर्मणि प्रवर्त्तयन्ते स्वार्थलोलुपाः नास्ति वेदाः प्रमाणमिति । उक्तञ्च—

अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम् ।
बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः ॥

अस्य मतस्य प्रवर्त्तको बृहस्पतिर्देवगुरुरिति केचित् एतन्मतमन्य एव पुरुष इत्यन्ये । अस्यैव देहात्मवादमतस्य मूर्कोऽपि लोकायत सिद्धान्तयुक्त्या साधूतमखण्डनं कृतम् । यस्मात्प्रमाणम्—

नास्ति देह आत्मा किन्तु तद्भिन्नः पुण्यापुण्यकर्त्ता तत्फलभोक्ता च । यदि देह एवात्मा स्यात् तदा राजरङ्कादिवैचित्र्यं न स्यात् नहि पुण्यं कर्म विना कश्चिद्राजा भवति कश्चिद्वा पापं कर्म विना रङ्कः । अपि च देहस्यात्मत्वे अकृतकर्मणां फलावाप्तिः कृतकर्मणाञ्च विनैव फलदानं नाश इति अकृताभ्यागमप्रसङ्गो दुर्निवारः प्रसज्येत ।

किञ्च देहाद्भिन्न आत्मा न चेत्तर्हि जन्मकाले एव बालः स्तन्यपानादिकर्मणि न प्रवर्त्तेत नहि पूर्वं स्तनपानसुखं कदाचिदप्यनुभूतमस्यानु-

भूतं येन इष्टसाधनतास्मरणेन तत्र प्रवर्त्तेत, प्रवृत्तिमात्रंप्रति इष्ट-
साधनताज्ञानस्य हेतुत्वात् अनुभवसंस्कारस्मृतीनाञ्च एकस्मिन्नेवा
धिकरणे नियम तथा च सिद्धो देहादतिरिक्तो ज्ञानेच्छासुखादिगुणा'
धानात्मा, तत्सिद्धौ च पुनर्भवोऽप्यवश्यम्भावी परलोकसाधक',
सुखदुःखादिवैचित्र्यञ्च स्वहेतुभूतमदृष्टं विनाऽनुपपन्नं तदनुमापकम्
ऐहिकं सुखं तु न परं पुरुषार्थो दुःखानुषक्तत्वात् । नापि स्मृतिर्मीचि'
किन्तु न च पुनरपि अध्यस्तं, वेदाश्च यत्तत्प्रयथार्थवाक्यार्थधी-
जनकत्वात् प्रमाणमेव,नच स्वयमपि बहुधिसव्ययायासदुर्धोधा निः
स्वार्था परमविरक्ताश्च वेदप्रमाणवादिनो ब्राह्मणा भ्रान्ताः प्रतारका'
वा भवितुमर्हन्ति प्रत्यक्षादतिरिक्तमनुमानादप्यस्त्येव प्रमाणं न
प्रत्यक्षमात्रम्, अन्यथा गृहाद्बहिः पतिमपश्यन्ती चार्वाककामिनी
मृतं मत्वा सोरस्ताडमाक्रन्देत, पत्रादिलिङ्गेन तत्सत्ताज्ञाने तु
अनुमानप्रमाणस्वीकार इति सर्वथा युक्तिप्रमाणविरुद्धं *चार्वाक-
मतमिदमनादेयं कल्याणमुमुक्षुभिरिति संक्षेपः ।

इति चार्वाकमतखण्डनम् ।

---

ननु चक्षुरादीनामेव ज्ञानादिकं प्रति कारणत्वं कर्तृत्वं
चास्तु विरोधे बाधकाभावादत आह—तथात्वमिति ।
चैतन्यमित्यर्थः । उपघाते नाशे सति अर्थाच्चक्षुरादीनामेव ।
कथमिति । पूर्वं चक्षुषा साक्षात्कृतानां चक्षुषोऽभावे स्मरणं

---

* चारु' लोकसम्मतो 'वाक' वाक्य यस्य स 'चार्वाक' इति व्युत्पत्ते-
रन्वर्थ एव नाम 'लौकायतिक' इति । लोके आयतं विस्तीर्णं प्रसिद्ध
मित्यर्थः यत प्रत्यक्ष प्रमाणं तल्लोकायतम् तत्प्रतिपादकं शास्त्रमपि लोकायतम्
तदधीते तद्वेद वा स 'लौकायतिक' ।

न स्यात् । अनुभवितुरभावात् । अन्यदृष्टस्यान्येन स्मरणासंभवात् । अनुभवस्मरणयोः सामानाधिकरण्येन कार्यकारणभावादिति भावः ॥४८॥

सम्प्रति चार्वाकैकदेशी 'काणोऽहञ्जानामि' इत्यहम्प्रत्ययवशादिन्द्रियाण्येवात्मेति यदूचे—तन्निषेधति—नेति । कारणत्वमिति । करणत्वमिति पाठान्तरं, तस्य भावस्तत्त्वम् । क्रियानुकूलकृतिमत्त्वञ्च कर्तृत्वम् । ननु कथं तदेव करणं कर्ता च उभयोर्विरुद्धस्वभावात् इत्याह—विरोधे मानाभावादिति । विरोधेऽनभिन्नाधिकरणावृत्तित्वे । अयं भावः—विरुद्धमिति ह न स्वप्रत्ययया यत्प्रमाणासहिष्णुत्वं नाम । यत्तु प्रमाणेन तथैव सम्प्रतिपन्नं यथाहंसानामेकस्मिन्नेव सद्सतो तत्कथं विरोधः । सिद्धान्ती खण्डयति तथात्वमितीति—यदीन्द्रियाणां चैतन्यं धर्मः अर्थाद् इन्द्रियाण्येव क्रियानुकूलकृतिमन्ति (कर्तृणि) तदा उपघाते इन्द्रियनाशे कथं स्मृतिः स्यात् स्मृतिज्ञानाधिकरणस्यात्मनो नष्टत्वात् भवति तु पूर्वं चक्षुष्मतः पश्चादन्धभावं प्राप्तस्यापि पुरुषस्य प्रत्ययः 'यौ पितरावद्राक्षं तौ स्मरामीति' ।

ननु—इन्द्रियान्तरेण स्मृतिर्भविष्यतीति ? अत आह—अन्येनानुभूतस्येति । नह्यन्यदृष्टमन्यः स्मरतीति नियमः वैपरीत्ये रामदृष्टं कृष्णोऽपि स्मरेत् । अत्र हेतुं वक्ति—अनुभवस्मरणयोरिति । सामानाधिकरण्येन एकाधिकरणसम्बन्धेन । कार्यकारणभावात्, अनुभवः संस्कारद्वारा कारणं स्मृतिः कार्यं यत्रानुभवस्तत्रैव स्मरणमिति नियम इतिभावः ।

किञ्च सर्वाणीन्द्रियाणि सम्भूय एकस्मिन्शरीरे एक आत्मा ? आहोस्वित्प्रत्येकं नाना आत्मानः ? आद्ये नष्टेऽपि श्रोत्रे चक्षुषा शब्द

साक्षात्कारः स्यात्, किंवा किमपि रूपादिकं न भायात् । आत्मनो नष्टत्वात् 'मृतोऽय' मित्यबाधित प्रत्ययश्च सर्वस्य सर्वत्र समुन्मिषेत् । द्वितीये तु प्रत्येक सर्वेषां स्वातन्त्र्ये कदाचिदनैकमत्ये विरुद्धदिक्क्रियैस्तैरधिष्ठित शरीरं विदीर्येत । यदि च तानि नैव सर्वथा स्वतन्त्राणि तर्हि यस्तन्त्रयत्येतानि स एवात्मा इन्द्रियभिन्न रूपादिविषयेषु यथेच्छ तत्प्रवर्त्तक कुठारप्रवर्त्तक इव तक्षेति । यस्तु 'अहं काणः' इत्याकारा प्रतीतिः इन्द्रियात्मतावनायोपन्यस्ता सा च 'मम देह' इति प्रत्ययवत् 'ममेन्द्रिय' मिति बाधकप्रत्ययसद्भावाद् भ्रान्तैवेति नतरामिन्द्रियात्मवादिमतमपि सम्यक् ।

इतीन्द्रियात्मवादखण्डनम् ।

---

नतु चक्षुरादीनां चैतन्यं मास्तु मनसस्तु नित्यस्य चैतन्यं स्यादत आह—

**मनोऽपि न तथा ज्ञानाद्यनध्यक्षं तदा भवेत् ।**

मनोपीति । **न तथा**, न चेतनम् । ज्ञानादीति । **मनसोऽणुत्वात्प्रत्यक्षे च महत्त्वस्य हेतुत्वान्मनसि ज्ञानसुखादिमत्त्वे तत्प्रत्यक्षानुपपत्तिरित्यर्थः । यथा मनसोऽणुत्वं तथा वक्ष्यते ॥**

मनआत्मवादी शङ्कते—नन्विति । नित्यस्येति — नित्यं मन' इति नैयायिकैरपि स्वीक्रियते आत्मा च नित्य एवेति इन्द्रियात्मवादपक्षे कृतविप्रणाशादिरूपो यो दोषः सोऽप्येतस्मिन्मते न भविष्यतीति पूर्वपक्षिणोऽभिप्रायः । सिद्धान्ती उत्तरयति— न तथेति । तत्र हेतुमाह—ज्ञानादीतीति । तदेव विवृणोति—मनसोऽणुत्वादिति ।

मनोऽणुपरिमाणं तस्यैव न प्रत्यक्षं कुतः पुनस्तदाश्रितानां सुखादीनाम्। ऋषिरपि 'युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमिति'। न्या० १।१।१६ इति मनसोऽप्रत्यक्षत्वमाचष्टे। सन्ति तु सुखादयः प्रत्यात्मवेदनीयाः, नचैषां प्रत्यक्षापलापश्चिरपलपितु शक्यते। किञ्च मनस आत्मत्वस्वीकारे तस्मिन् कृप्ता कर्तृत्वशक्तिरपाक्रियेत तत्पूर्णतायै च करणान्तरं कल्प्यते इति किमपूर्वं वादिना कृतं स्यादित्यतिसंक्षेपः। वक्ष्यत इति—अग्रे पञ्चाशीतिसंख्यायां कारिकायामित्यर्थः।

इति मनआत्मवादखण्डनम्।

---

नन्वस्तु विज्ञानमेवात्मा, तस्य स्वतः प्रकाशरूपत्वाच्चेतनत्वम्, ज्ञानसुखादिकं तु तस्यैवाकारविशेषः, तस्यापि भावत्वादेव क्षणिकत्वं पूर्वपूर्वविज्ञानस्योत्तरोत्तरविज्ञानहेतुत्वात् सुषुप्तावस्थायाविज्ञानधारा निराबाधैव, मृगमदवासनावासितवसन इव पूर्वपूर्वविज्ञानजनितसंस्काराणामुत्तरोत्तरविज्ञाने संक्रान्तत्वान्नानुपपत्तिः स्मरणादेरिति चेन्न, तस्य जगद्विषयकत्वे सर्वज्ञत्वापत्तिः। यत्किंचिद्विषयकत्वे विनिगमनाविरहः। सुषुप्तावपि विषयावभासप्रसङ्गाच्च। ज्ञानस्य सविषयत्वात्॥

क्षणिकविज्ञानवादी योगाचारः शङ्कते—नन्विति। विज्ञानमिति क्षणिकविज्ञानमित्यर्थः क्षणिकत्वञ्च द्वितीयक्षणावृत्तिध्वंसप्रतियोगित्वं ( एकक्षणमात्रस्थायित्वं ) विज्ञानवादिनये। सर्वं वस्तु अस्य मते विज्ञानमेव तथापि आत्मप्रकरणत्वाद् 'आत्मा' इति विशिष्योक्तम्।

एतच्च द्विविधं प्रवृत्तिविज्ञानमालयविज्ञानभेदात् 'अयं घट' 'अयं घट' इत्याकारकं विज्ञानं 'प्रवृत्तिविज्ञानम्' 'अहमहं' मित्याकारकं विज्ञानं 'आलयविज्ञानं' मुच्यते। विज्ञानं बुद्धिरित्यनर्थान्तरम्। ननु विज्ञानापरपर्याया बुद्धिः कथं चानन्तजडायास्तस्या आत्मस्वयोगादित्याह—तस्य स्वतःप्रकाशरूपत्वादेति। स्वतःप्रकाशत्वञ्च स्वपरव्यवहारे स्वभिन्नप्रकाशानपेक्षत्वम्। ज्ञानसुखादिकमिति—'अहं जानामि' 'अहं सुखी'त्याद्यनेकाकारं विज्ञानमेव सुखादिरूपेण भासते, न ततोभिन्नमित्यर्थः। विज्ञानस्य एव सुखादय आकाराः सहृदया पृथगिवावभासन्ते ) भावत्वादेवेति—'यत् सत् तत्क्षणिक' मिति व्याप्तेः यथा दीपशिखा भावरूपत्वात् क्षणिका ( प्रतिक्षण परिणामवती ) तथैव सर्वं वस्तु भावत्वात्क्षणिकं, तथा च विज्ञानमपि।

ननु क्षणिकं विज्ञानं चेदात्मा तदा सुषुप्तिर्न सिद्ध्येत् तदा पूर्वविज्ञानस्य नष्टत्वात् विज्ञानान्तरस्य चाभावाद् अत आह—पूर्वपूर्वेति।

अस्यायमर्थः—यद्यपि पूर्वं पूर्वं विज्ञानं नश्यति उत्तरमुत्तरञ्चोत्पद्यते, सुषुप्तौ च विज्ञानोत्पादिका सामग्री नास्ति तथापि 'अहमहं' मित्याकारा आलयविज्ञानसन्ततिस्तत्राप्यनुवर्तत एवेति न सुषुप्तावात्मनोऽभाव, तत्र प्रवृत्ति विज्ञानं नास्ति आलयविज्ञानन्तु वर्तत इति तत्त्वम्।

ननु क्षणिकस्य विज्ञानं विज्ञानाश्रिता विज्ञानस्वरूपा संस्कारा अपि क्षणिका तेषां नष्टत्वात् तव मते कस्यापि स्मृतिर्न स्यात् अत आह—मृगमदवासनेति। यथैकस्मिन्नेव वस्त्रपुटे मृगमद = कस्तूरिका तिष्ठति किन्तु सर्वाण्येव वस्त्रपुटकानि तद्वासनावासि-

सानि जायन्ते, उत्तरोत्तरस्मिन् पुटके मृगमदवासनाया संक्रान्तत्वात् तथेहापि पूर्वपूर्वविज्ञानोत्पन्ना संस्कारा उत्तरोत्तरस्मिन् विज्ञाने सङ्क्रमन्ते इति न स्मृतेरसिद्धिर्मम मत इति भावः । 'इती' त्यन्तः सर्वोग्रन्थ पूर्वपक्षिण ।

सिद्धान्ती समाधत्ते 'न' इति । विकल्पद्वयं करोति तस्येति–भवदभिमतविज्ञानस्य को विषयः सर्वं जगत् ? जगदन्तःपाती कश्चिदेव वा पदार्थः ? आद्ये सर्वज्ञत्वात्सर्वः सर्वं जानीयात्, नतु जानाति तस्मा आद्यः पक्षः क्षोदक्षम. ।

द्वितीये सुषुप्तावपि विषयप्रतीति सम्भवेत । यत्किञ्चित्पदेन गृहीतस्य यस्य कस्यापि घटादेः पदार्थस्य तद्विषयत्वेन पक्षपक्षपातिन्या युक्तेरभावात् सुषुप्तौ विषयाः प्रतीयेरन् आलयविज्ञानं तत्र वर्त्तत इति तव मतं तच्च न निर्विषयं भवितुमर्हतीति युक्त तदा अन्यतमविषयस्फुरणमित्यभिप्रायेणाह ज्ञानस्य सविषयत्वादिति ।

· ,; तदानीं निराकारा चित्सन्ततिरनुवर्तत इति चेन्न, तस्याः स्वप्रकाशत्वे प्रमाणाभावात् । अन्यथा घटादीनामपि ज्ञानत्वापत्तिः। न चेष्टापत्तिर्विज्ञानव्यतिरिक्तवस्तुनोऽभावादिति वाच्यं, घटादेरनुभूयमानस्यापकल्पितुमशक्यत्वात् । आकारविशेष एवायं विज्ञानस्येति चेत्, किमयमाकारोऽतिरिच्यते विज्ञानात्तर्हि समायातं विज्ञानव्यतिरिक्तेन । नातिरिच्यते चेत्तर्हि समूहालम्बने नीलाकारोऽपि पीताकारः स्यात् । स्वरूपतो विज्ञानस्याविशेषात् । -

पुनर्बौद्ध शङ्कते—तदानीमिति । सुषुप्तिकाल इत्यर्थः । निराकारा निर्विषया । चित्सन्ततिः विज्ञानधारा । स्वप्रकाशत्वे

ज्ञानस्वरूपत्वे * प्रमाणाभावादिति—सुषुप्तौ निर्विषया चित्सन्तति-रनुवर्त्तत इत्यत्र न किमपि मानं पश्यामः प्रमाणेन विना तु तदा कथं सा सिध्येत्, नहि निर्विषयं किमपि विज्ञानं, ज्ञानत्वस्य 'विषयता-व्याप्यत्वनियमादितिभावः। अन्यथा यदि विनैव प्रमाणं सुषुप्तौ ज्ञान-मङ्गीक्रियते तदा। घटादीनामिति—घटपटादिविषयाणामपि ज्ञान-स्वरूपापत्तिः, अर्थात् जाग्रदाद्यवस्थाकालेऽपि घटादिपदार्थसत्ता न स्वीकर्त्तव्या।

आक्षिप्य समाधत्ते 'नच' इत्यारभ्य 'अशक्यत्वात्' इत्य-न्तेन। वस्तुतो घटाद्याः पदार्थाः मम मते न परमार्थसन्तः किन्तु प्रतिभासमात्रशरीरास्ते विज्ञानस्वरूपा एवेति समस्तमेव त्वया गदित-मिति बौद्धस्य हृदयम्।

घटाद्याः पदार्थाः बाह्यविषयतास्वरूपेण सर्वानुभवगोचरा कथमपलप्येरन्। अर्थात् यद्येते विज्ञानस्वरूपात्पृथङ् न स्युः तर्हि 'अयं घटः' इति प्रत्ययेन न भाव्यं किन्तु 'इदं विज्ञानं इदं विज्ञानं' मित्येव प्रत्ययो भवेत् आच पण्डितेभ्य आच पामरपादेभ्यो बालिकेभ्य, नत्वेव दृश्यते तस्माद्विज्ञानाद्भिन्ना घटाद्या विज्ञानविष-या इति नैयायिकस्य तर्कः।

पुनराशङ्कते बौद्धः—आकारविशेष इति। अयं घटादि-पदार्थः। विज्ञानस्य क्षणिकबुद्धेः। आकारविशेषः स्वरूपविशेषः यथा पटस्तन्तूनां स्वरूपविशेषो नतु तन्तुसत्तातिरिक्तसत्ता-वानित्यर्थः।

* 'यद् ज्ञानं तत् सविषयक' मिति व्याप्तिः।

सिद्धान्ती विकल्प्य दूषयति—किमयमिति । अथ घटाद्याकारविशेषो विज्ञानस्वरूपाद्भिन्नो वाऽभिन्नो (विज्ञानस्वरूप), वा । आद्ये दूषणमाह—तर्हि समायातमिति । आद्यपक्षे विज्ञानात्पृथग्विषयसत्तासिद्धौ 'सर्वं विज्ञान' मिति बौद्धे प्रतिज्ञाहानि । द्वितीयेत्वाह—समूहालम्बन इति । * नानाधर्म्यवगाहि एक ज्ञानं समूहालम्बनम्, यथा 'इमे वस्त्रे नीलपीते' इत्याकारकं ज्ञानम् । अयं भाव—तव मते विज्ञानाद्विषयाणां न भेद, एवं यद्विज्ञानं नीलविषयकं तदेव पीतं विषयीकरोति नीलपीतयोश्च स्वयं सत्ता नास्ति, एवं नीलाकारोऽपि=नीलस्वरूपमपि पीताकार=पीतस्वरूपं भायात्, 'तदभिन्नाभिन्नस्य तदभिन्नत्व नियमात्, प्रकृतेनीलाकारपीताकारौ समूहालम्बनात्मकविज्ञानादभिन्नौ, तथाच नीलाकाराऽभेदयतो विज्ञानादभिन्न पीताकारोऽपि नीलाकारादभिन्न एव, तेन नीले पीतप्रत्ययो यथार्थं स्यात्, अर्थात् "इमे नीलपीते" इत्यस्य स्थाने 'इमे नीले' इत्येव इमे पीते' इत्येव वा प्रत्ययो भवेत् । अत्र हेतुमाह स्वरूपत इति—विज्ञानस्वरूपस्येत्यर्थ, अविशेषात् एकत्वात् ।

अपोहरूपो नीलत्वादिर्विज्ञानधर्म इति चेन्न, नीलत्वादीनां विरुद्धानामेकस्मिन्नसमावेशात् । इतरथा विरोधावधारणस्यैव दुरुपपादत्वात् । नच वासनासंक्रमः संभवति, मातृपुत्रयोरपि वासनासंक्रमप्रसङ्गात् । नचोपादानोपादेयभावो नियामक इति वाच्यं, वासनायाः संक्रमासंभवात् । उत्तरस्मिन्नुत्पत्तिरेव संक्रम इति चेन्न, तदुत्पादकाभावात् । चितामेमोत्पादकत्वे तदानन्त्यप्रसङ्गः ।

* नानाविशेष्यतानिरूपितनानाप्रकारताशालिज्ञानमित्यत्र तात्पर्यं सशय तु नानाप्रकारतानिरूपिताया एकात्रविशेष्यताया सत्वात न समूहालम्बनत्वमिति ध्येयम्

पुनः गृह्यते स एव—अपोहरूप इति । गोशब्दश्रवणात् सर्वासां गोव्यक्तीनामुपस्थितेः अतस्माद्=गोभिन्नादश्वादितो व्यावृत्तिदर्शनाच्च अतद्व्यावृत्तिरूप 'अपोह' एव शब्दार्थः=वाच्यार्थः स च विज्ञानधर्म एवेति बौद्धमतम् । एवञ्च प्रकृतेऽपोहरूपो नाम अनीलव्यावृत्तिरूपो (नीलत्वादिरेव) विज्ञानस्य=क्षणिकविज्ञानस्य धर्मः तेन नीलाकारोऽनीलव्यावृत्तिरूप पीताकारश्च अपीतव्यावृत्तिरूप इति नोभयोराकारयोर्भेदबुद्धिः अर्थात् तौ द्वावाकारावभिन्नावेव भेदप्रतीतिस्तयोर्नीलत्वपीतत्वयोः, सापि न पारमार्थिकी किन्तु सांवृत्तिकीति बौद्धस्याशय ।

तदेतत् सिद्धान्ती निराकरोति 'न' इति । नीलत्वादीनामिति—एकस्मिन् विज्ञानरूपे धर्मिणि विरुद्धानां नीलत्वादीनां धर्माणां न सामानाधिकरण्यमित्यर्थः, अर्थात् नीलत्वं नीलनिष्ठं, पीतत्वं पीतनिष्ठमिति द्वावपि विरुद्धौ धर्मौ कथमेकस्मिन्नधिकरणे (विज्ञानात्मके) स्यातां पारयेताम् । इतरथा विरुद्धानामपि नीलत्वादीनां सामानाधिकरण्ये, विरोधावधारणस्यैवेति—विरोधनिश्चय कुत्रापि न स्यात् । सर्वस्मात् संसाराद्विरोधकथा सुदूरमुत्सारिता भवेदित्यर्थः ।

ननु—न वयं समूहालम्बने नीलाकारादिकं प्रतीमः किन्तु चित्राकारमेकमेवेति लोकदोष इतिवादिनो बौद्धस्य मुख्य वासनासङ्क्रमपक्षं दूषयति—'नचे'ति । अयमर्थः—यत्पूर्वमभिहितं मृगमद दृष्टान्तेन पूर्वपूर्वविज्ञानसंस्कारा उत्तरोत्तरमुत्पन्ने विज्ञाने सङ्क्रमिष्यन्ते तेन मम मतेऽनित्येऽपि विज्ञाना मानि न स्मरणानुपपत्तिरूपो दोष इति तदपि न, अत्रार्थे हेतुमाह—मातृपुत्रयोरिति—यदि वासनासङ्क्रमः स्यात् तर्हि मात्रानुभूतस्य गर्भस्थेन पुत्रेण स्मरणं कृतं भवेत् नत्वेव तस्मादयुक्तमेतत् ।

[1] ननु उपादानेनानुभूतमुपादेयेन स्मर्यते मातृपुत्रयोर्नोपादानोपादेयभाव इति न मातृदृष्टं पुत्रः स्मर्तुमर्हतीति अत आह—'नचे'ति। संक्रमासम्भवादिति—धर्मत्वाद्वासना धर्मिणं विहाय परत्र गन्तुं न समर्थेति भावः। मृगमदसंक्रमेऽपि कस्तूरिकायाः परमाणव एवाह्रष्टवणाद्युत्तरत्र परपुटे समुक्तिभाजो भवन्तीति सर्वथा बौद्धोऽज्ञातपदार्थस्वभावः।

पुनः शङ्कते—उत्तरस्मिन्निति। अयमर्थः—संक्रमः सञ्चारः पूर्वविज्ञानवासनाया उत्तरस्मिन्विज्ञाने उत्पन्ने तेन सहैवोत्पत्तिर्वासनानां सैव संक्रम इति ब्रूमः।

एतद्दूषयति—नेति। तदुत्पादकाभावादिति—तदुत्पादकमन्तरा कस्याप्युत्पत्तिः पूर्वविज्ञानन्तु नष्टमेव तत् कथं स्ववासनामुत्तरत्रोत्पादयेत्, तदुत्पादनक्षणे तस्याभावात्, तत्सत्त्वाङ्गीकारे तु अधिकक्षणस्थायित्वात् विज्ञानं क्षणिकमिति न सिध्येत् तस्माद् वासनासंक्रमनिरूपणा दुःशकं बौद्धस्येति नैयायिकस्याभिप्रायः।

दूषणान्तरमाह—चितामेवेति। अयमर्थः—मानाभजीजनत् पूर्वविज्ञानमुत्तरविज्ञाने वासनाम्, उत्तरोत्तरमुत्पद्यमानं विज्ञानं स्वपमेव वासनामप्युत्पादयिष्यतीति चेत्? तदा संस्कारानन्त्यप्रसङ्गः सहकारोत्पादकानां विज्ञानानामनन्तत्वात्। चिताम् विज्ञानानाम्।

क्षणिकविज्ञानेऽतिशयविशेषः कल्प्यत इति चेन्न, मानाभावात्कल्पनागौरवाच्च। एतेन क्षणिकशरीरेष्वेव चैतन्यमपि प्रत्युक्तं, गौरवादतिशये मानाभावाच्च। बीजादावपि सहकारिसमवधानासमवधानाभ्यामेवोपपत्तेः कुर्वद्रूपत्वाकल्पनाच्च

पुनः शङ्कते—क्षणिकविज्ञान इति। अतिशयविशेषः शक्तिविशेषः, अर्थात् उत्तरविज्ञाने अस्ति किमप्यलौकिकं सामर्थ्यं स्मृति-

रूपकार्यंगस्य येन अनुभवजन्यसंस्कारोत्पत्त्या स्मृतेर्नानुपपत्ति । उ-त्तरयति—'ने'ति । मानाभावादिति—यद्यपि स्मृतिकार्यान्यथानुप-पत्तिरेव मानं, तथापि अनन्तविज्ञानेष्वनन्ततादृशशक्तिकल्पने महद्गौरवं, वरं तस्माद्विज्ञानाद्भिन्नस्य नित्यस्य ज्ञानाधिकरणस्यात्मनः स्वीकार । कल्पनागौरवादिति—'स एवायम्' इत्याद्यभ्रमप्रत्यभिज्ञानात् क्षणिकानन्तशक्तितत्प्रागभावध्वंसकल्पने गौरवादित्यर्थः ।

एतेनेति—पूर्वोक्ततर्केण । क्षणिकशरीरेष्वेव चैतन्यम्, चेतनता क्षणिकशरीराणां धर्म इत्यर्थः, इत्युक्तम् खण्डितं वेदितव्यमित्यर्थः, यथा क्षणिकविज्ञानवादो वासनासंक्रमानुपपत्तिरूपतर्कासह तथा क्षणिकशरीरचेतनतावादोऽपि परेषां नास्तिकानां व्युदस्त इति भाव ।

सम्प्रति बौद्धस्य कुर्वद्रूपत्ववाद' खण्डयितुमाह—बीजा-दावपीति । अत्र बौद्धस्य वासनासंक्रमवादसाधनाय तर्क—क्षेत्रे उप्तस्यैव बीजस्याङ्कुरोत्पत्तिर्भवति ननु कुसूले स्थितस्य अतोऽङ्कुरव्यवहितक्षणे अङ्कुररूप कार्यम्प्रति * कुर्वद्रूप कारणं वाच्यम्, एव-मेव क्षणिकशरीरेष्वपि उत्तरोत्तरशरीरनिष्ठवासनोत्पादकत्वरूप कुर्वद्रूपत्व जातिविशेष स्वीकर्तव्यो यत्र नैव वासनासंक्रमानुपपत्ति रूपो दोष, किन्तु दृष्टान्त बीजे कुर्वद्रूपत्वस्य यथा समा व्याप्ति तथैव तस्य विज्ञानत्वेन सहापि समा व्याप्ति यत्र २ कार्यजनकत्व तत्र कुर्वद्रूपत्व यत्र २ कुर्वद्रूपत्व तत्र कार्यजनकत्वमिति तस्या आकार ।

एत खण्डनपर सिद्धान्तग्रन्थोऽय बीजादावपीति—यस्या-

---

* कुर्वत्—करोति मुख्य रूपं यस्य, तस्य भाव कुर्वद्रूपत्व' मित्यर्थ । अङ्कुरोत्पादकचरमक्षणबीजव्यक्तिमात्रवृत्तिर्बीजत्वव्याप्या जातिविशेष ।

समर्थं—बीजादावपि (अङ्कुरजननहेतुभूत कुर्वद्रूपत्वाङ्गीकारो निष्फल) सहकारीति—धरणिसलिलसंयोगादिरूपो य सहकारी तस्य समवधानं सान्निध्यविशेष तेनाङ्कुरोत्पत्ति, कुसूलादौ तु तदसमवधानात्—तादृशसहकारिसंयोगविशेषाभावादेव नाङ्कुरोत्पत्ति, एतौ हेतो कुर्वद्रूपत्वकल्पनं न युक्तम्।

अयमभिप्रायो नैयायिकस्य—फलजननाय योग्ये धान्यादिबीजे सहकारिभिर्धरणिसलिलसंयोगादिभि अतिशय (उपकार) आधीयते इत्येवावश्यं स्वीकर्त्तव्यम्, एतनैवाङ्कुरादिनियमोपपत्तौ अलं कुर्वद्रूपत्वकल्पनेन ततो बौद्धमते वासनासङ्क्रमानुपपत्तिरूपो दोषस्तदवस्थ एवेत्ययुक्तो विज्ञानवादिसमय।

इदमधिकमत्र वदितव्यम्—एक एव बुद्धो भगवानुपदेष्टा परन्तु भावनाभेदात् तस्य शिष्याश्चतुर्विधा आसन् तेषु मुख्यो माध्यमिकः सर्वशून्यतावादी—यस्येदं मतं सङ्क्षिप्तम् यत्सत् तन्निनश्यति अतः सर्वं शून्यं शून्यमिति भावनीयम् दृष्टार्थो व्यवहार स्वप्नव्यवहारवत् संवृत्या भासते अतएवोक्तम्—

परिव्राट्कामुकशुनामेकस्यां प्रमदातनौ।
कुणप कामिनी भक्ष्य इति तिस्रो विकल्पना॥

तस्मात् सर्वं क्षणिकं क्षणिकम्' 'दुःखं दुःखं' स्वलक्षणं स्वलक्षणं' 'शून्यं शून्यम्' इतिभावनाचतुष्टयबलात्सकलवासनानिवृत्तौ परं निर्वाणं 'शून्यत्वरूपं' प्राप्यते, तस्माद्वयं कृतार्था नास्माकमुपदेश्यं नाम किञ्चिदस्ति।

योगाचारास्तु—स्वयंप्रकाशं विज्ञानमवश्यं स्वीकर्त्तव्यम् अन्यथा जगदान्ध्यं प्रसज्येत ग्राह्यग्राहकभावविनिर्मुक्ता वस्तुतोऽभेदेऽपि पृथगवभास एकस्मिंश्चन्द्रमसि द्वित्वावभास इव भ्रम ततश्च भावनाचतुष्टयबलात् विविधविषयाकारविवर्जितशुद्धक्षणिकविज्ञानोदयस्वरूपमोक्षप्राप्तौ कृतार्थता भवति' इत्याहु।

सौत्रान्तिकास्तु—इत्थमाचक्षते—बाह्यं घटपटाद्यर्थजातम-स्त्येव परं न प्रत्यक्षं किन्त्वनुमेयमेव यथा भाषया देशः, यथा वा सम्भ्रमेण स्नेहः, एवं ज्ञानाकारेण ज्ञेयमनुमेयम्। अर्थात् ज्ञानाकारानुमेयक्षणिकबाह्यार्थं एवास्मेति।

वैभाषिकास्तु—द्विविधोऽर्थो ग्राह्याध्यवसायभेदात्। तत्र ग्राह्यग्राहकं निर्विकल्परूपं ग्रहणं (ज्ञानं) कल्पनापोढत्वादभ्रान्तं प्रत्यक्षं प्रमाणम्। अध्यवसायस्तु सविकल्परूपः (अनुमानम्) अप्रमाणं कल्पनारूपत्वात् सौत्रान्तिकवैभाषिकयोरियानेव भेदो यदाद्यो बाह्यानुमेयपदार्थवादी, परो बाह्यप्रत्यक्षार्थवादी।

कथमेषां तथा सञ्ज्ञा जातेति चेच्छृणु—शिष्यैस्तावत् योग-श्चाचारश्च इतिद्वयमपि करणीयम् तत्राप्राप्तप्राप्तये पर्यनुयोगो योगः गुरूक्तस्याङ्गीकरणमाचारः गुरूक्तस्याङ्गीकरणादुत्तमाः पर्यनुयोगस्य (प्रश्नस्य) अकरणादधमाश्च इत्येकेषां माध्यमिका इति सञ्ज्ञा सञ्जाता।

गुरूक्तभावनाचतुष्टयं बाह्यार्थशून्यत्वञ्चाङ्गीकृत्य आन्तरस्य शून्यत्वञ्चाङ्गीकृतं तत्कथमिति पर्यनुयोगकरणाद् अपरेषां 'योगा-चारा' इति प्रथाभूत्।

सूत्रस्य अन्त रहस्य पृच्छतां 'भवन्तः सूत्रस्यान्त पृच्छन्तः सौत्रान्तिका भवन्तु' इति भगवता बुद्धेन अभिधानात् परे 'सौत्रा-न्तिका' इति प्रसिद्धा आसन्।

बाह्येषु गन्धादिषु आन्तरेषु च रूपादिषु स्कन्धेषु सत्स्वपि तत्रानास्थामुत्पादयितुं सर्वशून्यमिति माध्यमिकान् प्रति, विज्ञानमे-वैकं सदिति योगाचारान् प्रति, उभयं सत्यमिति सौत्रान्तिकान् प्रति भगवान् बुद्धो तत्तद्विनेयबुद्धिमनुसरन् विरुद्धमप्योकृयत्' 'सेयं

विरुद्धा भगवतो भाषा' इति वर्णयन्तोऽपरे 'वैभाषिका' इति नाम्ना ख्यातिङ्गताः। सर्वेश्चाय बुद्धस्य भगवत उपदेशो विनेयबुद्धिभेदाद्भिन्नोऽपि भिक्षुपादप्रसारणन्यायेन सर्वशून्यतापर्यवसायीति संक्षेप। (एतेषां विशिष्टा प्रक्रिया ग्रन्थगौरवभयान्नेह प्रदर्शिता*अधिकजिज्ञासवस्तु अपोहप्रकरणादिबौद्धग्रन्थान् आमर्शा ( व्याससूत्रोपरिशाङ्करभाष्यटीकां चावलोकयन्तु)।

इति क्षणिकविज्ञानवादियोगाचारमतखण्डनम्।

---

अस्तु तर्हि क्षणिकविज्ञाने गौरवान्नित्यविज्ञानमेवात्मा "अविनाशी वाऽरेऽयमात्मा बृहदा० ५ ब्रा० । १४ कं० सत्यं ज्ञानमनन्तं ब्रह्म" तैत्ति० आ० व० । अनु० १। इत्यादिश्रुतेरिति चेन्न, तस्य विषयत्वासंभवस्य दर्शितत्वान्निर्विषयस्य ज्ञानत्वे मानाभावात्सविषयत्वस्याप्यननुभवात् अतो ज्ञानादिभिन्नो नित्य आत्मेति सिद्धम्।

योगाचारे परास्त नित्यविज्ञानवादी वेदान्ती वक्ति—अस्तु तर्हीति। गौरवादिति—पूर्वप्रदर्शितरीत्या गौरवपराहत योगाचारामतं न सम्यक इति स्वीकुर्मः किन्तु नित्यं=त्रैकालाबाध्यमेकरस विज्ञानं=स्वप्रकाशचैतन्य आत्मा अस्तु=सच्चिदानन्दस्वरूप ब्रह्मैवात्मा नान्य इत्यर्थः। अत्र बृहदारण्यकश्रुतिं प्रमाणयति—अविनाशीति। अस्मिन्नेवार्थे तैत्तिरीयश्रुतिं संवादयति-सत्यं ज्ञानमिति। सत्य=त्रैकालाबाध्यम, ज्ञान=चित्स्वभाव, अनन्त=त्रिविधपरिच्छेदरहितं ब्रह्म=आत्मा, 'बृहत्वाद्बृंहणत्वाच्च आत्मा

---

* अयं ग्रन्थ एशियाटिक सोसायटी मुद्रित।

ब्रह्मेति गीयत इत्युक्तेः। सत्यादिकं ब्रह्मणः स्वरूपलक्षणमित्यर्थः। यत्र निरस्तसमस्तपुन्दूषणा श्रुतिरेवात्मानं नित्यविज्ञानस्वरूपमाह तत्र किमन्यदपेक्षितव्यमितिभावः। इतिचेदिति—एवं वेदान्तिना स्वमते स्थापिते सिद्धान्ती उत्तरयति—नेति। तस्येति। तस्य = विज्ञानस्य। विषयासम्भवस्य दर्शितत्वात् 'जगद्विषयकत्वे' इत्यादिग्रन्थेन योगाचारमतखण्डनावसरे निरूपितत्वादित्यर्थः।

अयं भावः—भो वेदान्तिन् भवदभिमतं नित्यविज्ञानं सविषयकं निर्विषयकं वा? आद्ये तस्य को विषयः सर्वं जगदिति चेत्? सर्वे सर्वज्ञाः स्युः, यत्किञ्चिद्वस्तुजातं तस्य विषय इति चेत्? तदा सुषुप्तावपिरूपादिविषया भासु विनिगमकाभावात्। द्वितीयं पक्षं दूषयति—निर्विषयस्य ज्ञानत्व इति। *'विषयनिरूप्यं हि ज्ञानमिति नियमात्, नहि निर्विषयं किमपि ज्ञानम्। एतदेवोपपादयति सविषयत्वस्याप्यनुभवादिति—सर्वं ज्ञानं प्रत्यात्म सविषयकमनुभूयत इत्यर्थः। अत इति—यतो न तर्कसहो वेदान्तिसमय अतो ज्ञानादिभिन्नः ज्ञानसुखेच्छादिगुणवान् यः स नित्य आत्मेत्यनुमानप्रमाणसिद्धम्।

सत्यं ज्ञानमिति हि ब्रह्मपरं जीवेषु नोपयुज्यते। ज्ञानाज्ञानसुखित्वादिभिर्जीवानां भेदसिद्धौ सुतरामीश्वरभेदः, अन्यथा बन्धमोक्षव्यवस्थानुपपत्तिः। योऽपीश्वराभेदबोधको निर्देशोऽपि तदभेदेन तदीयत्वं प्रतिपादयन्तीति। अभेद-

* ज्ञानं विषयं प्रकाशयति घटादिविषयस्य ज्ञानप्रकाश्यः। विषयो ज्ञानं निरूपयति इति विषयो ज्ञाननिरूपकः ज्ञानन्तु विषयनिरूप्यम् इत्थं ज्ञानविषययोः प्रकाश्यप्रकाशकभाव निरूप्यनिरूपकभावश्च सम्बन्धो ज्ञेयः।

भावनयैव च यतितव्यमिति वदति । अत एव " सर्वे *
एवात्मनि समर्पिताः" इति श्रूयते । मोक्षदशायामज्ञानानि-
वृत्तावभेदो जायत इत्यपि न, भेदस्य नित्यत्वेन नाशायो-
गात् । भेदनाशेऽपि व्यक्तिद्वयं स्यास्यत्येव । नच द्वित्वमपि
नश्यतामिति वाच्यं, तत्र निर्धर्मके ब्रह्मणि सत्यत्वाभावेऽपि
सत्यस्वरूपं तदितिवद्द्वित्वाभावेऽपि व्यक्तिद्वयात्मकौ ता-
विति सुवचत्वात् ।

यदपि 'सत्य' मित्यादिश्रुतिरद्वैतब्रह्मात्मपक्षे प्रमाणमुपन्यस्ता
साप्यन्यार्थपरेत्याशयेनाह—सत्यं ज्ञानमिति । इद वाक्य ब्रह्म-
स्वरूप प्रतिपादयति नतु जीवस्वरूपनिर्णयपरमित्यर्थः ।

ननु—जीवब्रह्मणोरभेदान्नेद वाक्यमन्यार्थपरमित्याह—ज्ञा-
नाज्ञानेति ।

सुखित्वादीति—आदिना दुःखित्वपरिग्रहः. भेदसिद्धाविवि-
चयमर्थ—ईश्वर सर्वज्ञ सर्ववित् सर्वशक्तिमान् नियामकनित्य-
मुक्त, जीवस्तु अल्पज्ञोऽल्पशक्तिर्दुःखी नियाम्य [illegible] कथमत्यन्त-
विरुद्धधर्मयोर्जीवेश्वरयोरभेद सम्भवेत्, भेदस्य विरुद्धधर्माध्यास-
स्यात् । विपक्षे दण्डमाह—अन्यथेति । ईश्वरस्य जीवस्वरूपत्वे
इत्यर्थः । बन्धमोक्षेति—कश्चित्संसारी बद्धः कश्चिदसंसारी मुक्त
इति व्यवस्था नोपपद्येत वेदान्तिमते सर्वस्य ब्रह्मरूपत्वादिति भावः ।

ननु—तत्त्वमस्यादिवाक्यानामखण्डार्थपरतया जीवब्रह्मणो-
रभेद पर्यवस्यत आह—योऽपीति ।

---

* 'सर्वे एवात्मनि समर्पिताः' इति पाठं सम्यक्त्वं मन्ये । [illegible] इयं
श्रुतिरिति गवेषणावसरो न प्राप्तः ।

'तत्त्वमसि' इतिमहावाक्यं छान्दोग्योपनिषदि उद्दालकश्वेत-केतुप्रसङ्गे नवकृत्व समाम्नातम्, तस्य त्रीणि पदानि, तत्—त्वम्—असि इति। अत्र तत्पदवाच्य परोक्षत्वादिधर्मविशिष्ट ईश्वरोऽन्तर्यामी। त्वम्पदवाच्य अपरोक्षत्वादिधर्मविशिष्टो जीव पुण्यापुण्य-कर्त्ता नियाम्य.। 'तत् त्वं' मितिपदद्वयं तु समानविभक्तिकमभेदा-न्वययोग्यम्, परन्तु पदद्वयवाच्ययोर्विशिष्टयोरैक्यं नोपपद्यते, यतः [illegible] त्वादिविशिष्टेन [illegible] ( सत्यार्थयो-[illegible] ) तयोरैक्यसिद्धये चिन्मात्रवपुषि ब्रह्मणि द्वयोः पदयोर्ज-हदजहल्लक्षणया ( सर्वज्ञत्वाल्पज्ञत्वादिविरुद्धधर्मत्यागेन चैतन्यमात्रे, भागत्यागलक्षणया ) तथा सदयमद्वितीय ब्रह्मेति युक्तं तत्त्वमस्यादि-वाक्यानामभेदप्रतिपादकत्वमिति वेदान्तिनः सचितोऽभिप्रायः। तत्र नैयायिक आह एवविध सर्वोऽप्यभेदबोधको वेदः तदीयत्वेन तदभेद प्रतिपादयति नतु वास्तव जीवब्रह्मणोरभेदं यथा पुत्रविषये पितु-वाक्यं 'ममात्मा भद्रसेन' इति। अत्र भद्रसेनस्य तत्पितुश्च भेदे स्पष्टे उपचारेण ( स्वजन्यजनकत्वसम्बन्धेन ) आत्मपदद्वारा अ-भेदव्यवहारः तथैव पितृस्थानीयस्योत्पादकस्येश्वरस्य पुत्रस्थानीयैः* जीवैः सह तदीयत्वेन ( † तत्सम्बन्धित्वेन ) अभेद औपचारिको न वास्तव इतिध्येयम्।

[illegible] तीति—तथाचान्यान्यप्यभेदवाक्यानि सन्ति वास्तवे भेदे वेदे सन्त्येव यथा 'यजमान' प्रस्तर' 'आदित्यो यूप' इत्यादीनि। अत्र [illegible] अभेदभावनयेति—भावना-उपासना विजातीयप्रत्यया-नन्तरितः समानाकारप्रत्ययप्रवाहश्चेत्ससो निदिध्यासनाभिधइति

* तत्सम्पुत्र प्रकृते नियाम्यनियामकभावादि।

† 'अमृतस्य पुत्राः' इति श्रुति।

यावत् निरतिशयानन्दे ब्रह्मणि परानुरक्तिसम्पादनायाभेदोपासनापराण्यभेदवाक्यानीति भावः । उक्तार्थदृढतायै श्रुतिं प्रमाणयितुमाह—अतएवेति । यस्मात्परानुरक्तिसम्पादनपरकत्वमभेदवाक्यानामतो हेतोरित्यर्थः । *सर्व एवात्मनीति । भेदाभेदवादिनम्प्रत्याह—मोक्षदशायामिति । तत्र हेतुमाह—भेदस्य नित्यत्वेनेति । अभ्युपगमसिद्धान्तेनाह—भेदनाशेऽपीति । व्यक्तिद्वयमिति—जीवब्रह्मरूप व्यक्तिद्वयम् । ननु—व्यक्तिद्वये सत्यपि द्वित्वं न भविष्यति मोक्षे इत्याह—न चेत्यादि । निर्धर्मक इति—यथा सकलधर्मशून्य ब्रह्म सत्यत्वधर्माभाववत् तव मते स्वरूप मवैव मोक्षे द्वित्वधर्माभावेऽपि तौ जीवेश्वरौ व्यक्तिद्वयात्मकौ व्यक्तिद्वयस्वरूपावेवेत्यपि मया वक्तुं शक्यत इति भावः ।

मिथ्यात्वाभावोऽधिकरणात्मकस्तत्र सत्यत्वमिति चेदेकत्वाभावो व्यक्तिद्वयात्मको द्वित्वमित्यप्युच्यताम् । प्रत्येकमेकत्वेऽपि पृथिवीजलयोर्न गन्ध इतिवदुभयं नैकमित्यस्य सर्वजनसिद्धत्वात् । योऽपि तदानीमभेदप्रतिपादको वेदः सोऽपि निर्दुःखत्वादिना साम्यं प्रतिपादयति । सम्पदाधिक्ये पुरोहितोऽयं राजा संवृत्त इतिवत्, अत एव "निरञ्जनः परमं साम्यमुपैति" इति श्रूयते ॥

ननु—न मया ब्रह्मणि सत्यत्वं भवदभिमतरीत्या स्वीक्रियते 'यन्मिथ्या तदसत्' एव मिथ्यात्वाभाव एव ब्रह्मणि सत्यत्वं कल्पितवस्तुनो नाशस्याधिकरणस्वरूपत्वात् ततश्च नोक्तदोष इत्यभिप्रायवान् 'मिथ्यात्वाभावस्तत्र' इत्यारभ्य 'इति' पदान्तो ग्रन्थः पूर्वपक्षः ।

तत्रोत्तरमाह—एकत्वाभाव इति । यथा तव नये मिथ्याप्रप-ञ्चाभावाधिकरणं ब्रह्मैव सत्स्वरूपं सत्यत्वं ततो नातिरिक्तम्, एव-मस्मन्नयेऽपि एकत्वसङ्ख्याया अभावस्वरूपमेव व्यक्तिद्वयात्मकं द्वित्वमित्यपि वक्तुं सुशकम् सर्वथाऽपि मोक्षे नैव जीवब्रह्मणो-रैक्यमिति सिद्धान्तिनो हृदयम् । स्वोक्तिं दृष्टान्तेन समर्थयति सिद्धा-न्ती—प्रत्येकमिति । अयमर्थः—गन्धः पृथिवीगुणो न तु जलस्य तथापि 'पृथिवीजलयोर्न गन्धः' इति व्यवह्रियते तस्य नायमर्थो यत्पृ-थिव्यामपि न गन्धः तथैव प्रत्येकं सर्वासु व्यक्तिषु एकत्वे (अभेदे) सत्यपि 'उभयं नैकम्' इत्ययं सद्ग्राहकः प्रत्ययः सर्वानुभवसिद्धो नापलपितुं शक्यः । सम्प्रति 'ब्रह्मविद् ब्रह्मैव भवति' इति मोक्षदशायामभेदबोधकस्यागमस्य व्यवस्थामाह—योपीति । तदानीं मोक्षकाले । स्वपदमन्यत् । अतएवेति—साम्यप्रतिपादकवाक्यस्यार्थः । निरञ्जन इति—निर्दुःखः सन् मुक्तः परमम्=अपुनर्भवं साम्यं=मोक्षाख्यम् उपैति=प्राप्नोति । इति श्रुतेरर्थः ।

ईश्वरो न ज्ञानसुखात्मा किन्तु ज्ञानाद्याश्रयः "नित्यं विज्ञानमानन्दं ब्रह्म" विज्ञानपदेन ज्ञानाश्रय एवोक्तः "यः सर्वज्ञः स सर्ववित्" मु० १।९। इत्यनुरोधात् । आनन्द-मित्यस्याप्यानन्दवदित्यर्थः । अर्शआदित्वान्मत्वर्थीयोऽच्प्र-त्ययः, अन्यथा पुंल्लिङ्गत्वापत्तेः । आनन्दोऽपि दुःखाभावे उपचर्यते, भाराद्यपगमे सुखी संवृत्तोऽहमितिवत्, दुःखाभावेन सुखित्वप्रत्ययात् । अस्तु वा तस्मिन्नानन्दो न त्वसावानन्दः "असुखम्" इति श्रुतेः । न विद्यते सुखं यस्येति कुतो नार्थ

इति चेन्न, क्लिष्टकल्पनापत्तेः, प्रकरणविरोधादानन्दमित्यत्र मत्वर्थीयाच्प्रत्ययविरोधाच्चेति संक्षेपः ।

यत्तु वेदान्तिना ईश्वरस्य ज्ञानसुखस्वरूपत्वमुक्तं तदपि न युक्तमिति दर्शयति—ईश्वरोपीति । ज्ञानाश्रय इति—नित्यज्ञानाधिकरणम् इत्यर्थः । श्रुतिस्थविज्ञानपदं धर्मधर्मिभावपरतया व्याचष्टे—विज्ञानपदेनेति । विज्ञानमस्मिन्नस्तीति 'विज्ञानम्' इति व्युत्पत्त्या 'ज्ञा' धातो 'करणाधिकरणयोश्च' इति सूत्रेण अधिकरणार्थकल्युट्प्रत्ययान्त पदमिदमितिभाव ।

अस्मिन् पक्षे मुण्डकश्रुतिमुपन्यस्यति—यः सर्वज्ञ इति ।

ननु—ज्ञानब्रह्मणो गुणागुणिभावपक्षे 'विज्ञानमानन्दं ब्रह्म' इति श्रुतिस्थानन्दपदस्य का गतिरित्याह—आनन्दमित्यस्यापीति । 'अर्शआदिभ्योऽच्' ५ । २ । १२७ इति पाणिनिसूत्रेण मतुबर्थकाच्प्रत्ययनिष्पन्नमिदं नपुंसकलिङ्गमानन्दपदम्—आनन्दोऽस्यास्तीति व्युत्पत्ते ततश्च 'आनन्द' मित्यस्यानन्दवदर्थो बोध्यः ।

ननु—आनन्दवदित्यर्थो न युक्त ईश्वरे आनन्दाभावात् ( सुखापरपर्यायस्य आनन्दस्य पुण्यफलत्वात् ईश्वरस्य च पुण्यादेरभावात् ) इत्याह—आनन्दोपीति । लक्षणाद्दृत्या दुःखाभावबोधकोऽयमानन्दशब्दो नतु 'समवायेनानन्दवान्' इत्यर्थपरक, ततो नोक्तदोष इत्यर्थः । एतद् दृष्टान्तेन स्फुटयति—भाराद्यपगम इति । सम्भवति मुख्येऽर्थे जघन्यवृत्तिकल्पनमन्याय्यमिति तत्राह—अस्तु वेति । नानन्दब्रह्मणोरभेद इत्यर्थः अत्र श्रुतिमाह 'असुख'मिति । 'न सुख'मिति नञ् ब्रह्मणः सकाशात् सुखस्य भेदं बोधयति । तस्मात्सुखाधिकरणमिति काम स्यात् ।

वेदान्ती शङ्कते—न विग्रह इति । नैयायिकः समाधत्ते—नेति । अयमाशयः—भवत्कृतो बहुव्रीहिः समासः, सचान्यपदार्थप्रधानः तत्र 'नञ्' पदस्यान्यपदार्थे लक्षणा क्लिष्टकल्पनैव तत्पुरुषसमासे तु नायं दोषः अत्र हेतुमाह प्रकरणविरोधादिति । बार्हदारण्यके 'अस्थूला'दिशास्य सर्वत्र नञ्तत्पुरुषसमास एवाश्रितः समानप्रवाहपतिताऽसुख'पदस्यापि प्रकरणेन स आश्रयणीयो नतु बहुव्रीहिः ।

अत्रैव विरोधान्तरमाह—आनन्दमित्यत्रेति । मतुवर्थाऽच्प्रत्ययस्पष्टमानन्दाधिकरणमाचष्टे नत्वानन्दस्वरूपम् 'असुख'मित्यत्र बहुव्रीहिसमासाश्रयणे तु एतेनापि विरोधः स्यात् । 'अपिच आनन्दं ब्रह्मणो विद्वान्' इत्यादिश्रुत्या आनन्दब्रह्मणो स्पष्ट एव भेदः प्रतीयते सोऽप्यस्माकं गुणगुणिनोर्भेदवादिनां मते सङ्गच्छते नत्वभेदवादिनामित्याशयवानाह—संक्षेप इति ।

अयमस्य वेदान्तमतस्य संक्षिप्तसारः—सच्चिदानन्दस्वरूपमद्वैतं ब्रह्मैव परमार्थसत्यं ततोऽन्यत्प्रतीयमानं मरुमरीचिकेव, शुक्तिरजतमिव भ्रान्तिविलसितं मिथ्यैव, मिथ्यात्वञ्च यत्र यस्यात्यन्ताभावः तत्रैव तस्य प्रतीयमानत्वं, तदिदं 'प्रतिभास' शब्देनाप्युच्यते, तदेवैकं ब्रह्मोपाधिवशाज्जीवभावं प्राप्तमिव भाति । उपाधीनामनेकत्वान्नाना जीवा, यथा घटमठाद्युपाधिभेदेन एकस्मिन्नप्याकाशे नानात्वव्यवहारः सचोपाधिर्द्विविधो मायाऽविद्या च, मायोपाधिकं चैतन्यमीश्वरः, अविद्योपाधिकश्चैतन्यं जीवः । रागद्वेषात्मकप्रवन्धानुपाती संसारो बन्धः । अविद्यैव तस्य निदानम् । जीवस्य (ब्रह्म-) स्वरूपानिर्भासो मोक्षः तत्त्वमस्यादिमहावाक्यजन्यो 'अहम्ब्रह्मास्मि' इत्यखण्डाकारा वृत्तिर्ब्रह्मविद्या सेयमुक्तबन्धं समूलघातं हन्तीति मोक्ष एव परः पुरुषार्थः । उक्तञ्च—

यथैव बिम्बं मृदयोपलिप्तं तेजोमयं भ्राजते तत्सुधौतम् ।
तद्वदात्मतत्त्वं प्रसमीक्ष्य देही एकः कृतार्थो भवते वीतशोकः ॥
यदात्मतत्त्वेन तु ब्रह्मतत्त्वं दीपोपमेनेह युक्तः प्रपश्येत् ।
अजं ध्रुवं सर्वतत्त्वैर्विशुद्धं ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥
श्वेता० २ । १४, १५ ।

---

**एतेन** प्रकृतिः कर्त्री पुरुषस्तु पुष्करपलाशवन्निर्लेपः किंतु चेतनः । कार्यकारणयोरभेदात् कार्यनाशे सति कार्यरूपतया तन्नाशो न स्यादित्यकारणत्वं तस्य । बुद्धिगतचैतन्याभिमानान्यथानुपपत्त्या तत्कल्पनम् । बुद्धिश्च प्रकृतेः परिणामः । सैव महत्तत्त्वम्, अन्तःकरणमित्युच्यते । तत्सत्त्वासत्त्वाभ्यां पुरुषस्य संसारापवर्गौ । तस्या एवेन्द्रियप्रणालिकया परिणतिर्ज्ञानरूपा घटादिना संबन्ध ।

साङ्ख्यमतं दूषयितुमुपन्यस्यति—एतेनेति । एतेन पूर्वप्रयुक्त्या आत्मनो ज्ञानवत्त्वसाधनेन, वक्ष्यमाणग्रन्थेन च, 'मतमपास्त' मित्यनेनान्वय । प्रकृतिरिति मूलप्रकृतिरित्यर्थ ।

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥

इति साङ्ख्याभिमता पञ्चविंशति पदार्था तत्र प्रकृतिरेव [ सकलजगत ] कर्त्री=उपादान कारणमित्यर्थ परिणामस्वभावत्वात्, तदनुकूलकृतिमत्त्व कर्तृत्वरूपमिष्ट साङ्ख्याना तेषां मते तस्य अन्त करणधर्मत्वात् । पुरुष=जीवश्चेतनावत्तया अपरिणामी।

'निर्गुणत्वान्न चिद्धर्मा' इत्युक्ते । पुष्करपलाशवत् पद्मपत्रवत् । निर्लेपः असङ्ग, 'असङ्गोह्ययं पुरुष' इत्युक्ते । यथा पद्मपत्रम् म्भसा न लिप्त तथा पुरुष कर्तृत्वादिधर्माश्रयो न भवतीत्यर्थ । इत्थमिदमनुमानं फलितम्—'पुरुष' कर्तृत्वादिधर्माभाववान् कारणत्वाभावात् यन्नैव तन्नैव यथा प्रकृति । कारणत्वाभावादित्यस्य हेतोः सिद्धिशङ्का वारयति-कार्यकारणयोरिति । साङ्ख्यमत इति शेष । तन्नाशः पुरुषनाश । न स्यात् माभूद इत्यकारणत्व तस्य पुरुषस्य । अयमभिप्राय —पुरुषश्चेत्कारण स्यात् तर्हि धर्मलक्षणावस्थापरिणामैर्धर्मस्यमन्यतमपरिणामाश्रयः स्यात्,तेन च, तस्य कौटस्थ्य श्रुतियुक्तिसिद्ध व्याहन्येत ।

ननु—एवंविधनिरतिशयपुरुषसत्त्वे किं मानम् अत आह,—बुद्धिगतेति । बुद्धिगत यच्चैतन्य तस्य अन्यथानुपपत्त्या=पुरुषानङ्गीकारेऽसिद्ध्या । तत्कल्पनं पुरुषसिद्धिरित्यर्थ । इदमत्र तत्त्वम् साङ्ख्यसिद्धान्ते बुद्धि प्रकृते प्रथम परिणाम प्रकृतिश्च जडा तत्कार्यभूताया बुद्धेरपि जाड्य स्वभाव , उपादानानुविद्धत्वात् उपादेयस्य यथा मृदनुविद्धत्वाद् घटोऽपि मृदेव, परन्तु तत्र ज्ञानेच्छादिधर्मोपलब्धेश्चैतन्यमपि प्रतीयते तस्मादचेतनस्वभावपुरुषसम्बन्धमन्तरा नार्हति भवितुम्, क्वचित्प्रसिद्धस्यैव चैतन्यस्य बुद्धावारोपसम्भवात् यथा " रक्तः स्फटिक " इत्यत्र , जपाकुसुमोपरागेणैव स्फटिके लौहित्य तद्वत् । सैवेति—सैव बुद्धि महत्तत्त्वम्, अन्तःकरणमिति च कथ्यते । तत्सत्त्वासत्त्वाभ्याम् बुद्धिसत्त्वासत्त्वाभ्यामित्यर्थ पुरुषस्य जीवस्य । संसारापवर्गौ बन्धमोक्षौ । नित्यशुद्धबुद्धमुक्तस्वभावस्यापि पुरुषस्य बुद्ध्युपरागकृत संसार कुसुमोपरागकृते लौहित्यमिव तदपगमे च मोक्ष स्वोभाव, कुसुमापगमे यथा स्फटिकस्य स्वोभाव श्वेतिमा । तस्या एवेति -

'तस्या' इति पदस्य 'परिणति' रिति पदेन सम्बन्धः। इन्द्रियप्रणालिकया चक्षुरादीन्द्रियरूपनालिकाद्वारा यो घटादिना घटपटादिविषयेण सह सम्बन्धः अर्थात् बुद्धेरेव महत्तत्त्वाख्यायाः सा, ज्ञानरूपा ज्ञानाकारा परिणति बुद्धेरित्यन्वितार्थः। एवमिच्छाद्या अपि बुद्धेः परिणामाः इदमेव ज्ञानमध्यवसायपदेनाप्यभिलप्यते।

इदन्तु बोध्यम्—यथा स्वभावतः चलनस्वभावमपि जलाशयान्तर्गतं सलिलं निर्गममार्गप्रतिबन्धे सति न क्षेत्रमुपसृत्य तदाकारं भवति, तदेव तु प्रतिबन्धापगमे छिद्रद्वारा बहिर्निर्गत्य कुल्यात्मना क्षेत्रमुपसर्पत् केदाराकारेण परिणत जायते, तथा स्वभावतः सर्वविषयप्रकाशनसमर्थमपि बुद्धिसत्त्वं तमोगुणेन प्रतिबद्धं सत् स्वयं घटपटादिविषयोपसर्पणेऽसमर्थमपि चक्षुरादीन्द्रियसन्निकर्षद्वारा तमोनिरासे सति इन्द्रियात्मकनालिकाद्वारा विषयदेशङ्गत्वा तत्तद्विषयाकारेण परिणमते सोऽयं बुद्धितत्त्वस्य विषयाकारपरिणामः अध्यवसायो वृत्तिरिति ज्ञानमिति चाभिधीयते। उक्तञ्च योगभाष्यकारैः—'फलमविशिष्टः पौरुषेयश्चित्तवृत्तिबोध' इति।

इन्द्रियप्रणालिकया अर्थसन्निकर्षानन्तरं जायमाना 'अयं घट' इत्याकारा चित्तवृत्तिः, तद्विषयको यः 'अहं घटं जानामि' इत्याकारोऽनुभवः स प्रमाणभूतायाश्चित्तवृत्तेः फलम्, सचानुभवः पौरुषेयः चितिचित्तयोरभेदाग्रहात्पुरुष उपचर्यमाणत्वेन पुरुषधर्मो[illegible]।

पुरुषे कर्तृत्वाभिमानो बुद्धौ चैतन्याभिमानश्च भेदाग्रहा[illegible]व। ममेदं कर्तव्यमिति मदंशः पुरुषोपरागो बुद्धेः स्वच्छत[illegible]प्रा[illegible]तत् प्रतिबिम्बादतात्त्विको दर्पणस्येव मुखोपरागः। इद[illegible]मेति विषयोपरागः, इन्द्रियप्रणालिकया परिणतिभेदस्तात्[illegible]त्त्विको निःश्वा-

सामिहतदर्पणस्येव मलिनिमा । कर्तव्यमिति व्यापारांशः । तेनांशत्रयवती बुद्धिस्तत्परिणामेन ज्ञानेन पुरुषस्यातात्त्विकः सम्बन्धो दर्पणमलिनिम्नेव मुखस्योपलब्धिरुच्यते । ज्ञानादिवत्सुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मा अपि बुद्धेरेव कृतिसामानाधिकरण्येन प्रतीतेः । नच बुद्धिश्चेतना परिणामित्वादिति मतमपास्तं, कृत्यदृष्टभोगानामिव चैतन्यस्यापि सामानाधिकरण्यप्रतीतेस्तद्भिन्ने मानाभावाच्च ॥

पुरुष इति—कर्तृत्वाभिमानः अहं करोमि इत्याकारोऽहङ्कारस्य । बुद्धौ चैतन्याभिमानः 'अहं चेतनोऽस्मी'ति प्रत्ययः । भेदाग्रहात् बुद्धिपुरुषयोरसंसर्गाग्रहात् विवेकग्रहाभावात् पुरुषगतं चैतन्यं बुद्धौ बुद्धिगतं कर्तृत्वं च पुरुषे प्रतीयत इति तत्र कारणं द्वयोर्विविच्य ग्रहाभाव इत्यर्थः ।

'बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्' न्या० १। १। १५। इति नैयायिको बुद्ध्युपलब्ध्योर्भेदं न स्वीकरोति तन्मतं परास्यितुं बुद्धित उपलब्धेर्भेदं दर्शयन् तस्याः प्रपञ्चं प्रदर्शयति—अभेदमित्यादिना । बुद्धिपुरुषयोर्भेदाग्रहात् एकत्वाभिमानं पुरुषोपराग इत्यर्थः । पुरुषोपरागः पुरुषसम्बन्धः दर्पणस्य यथा मुखसम्बन्धः । ममेति प्रयोगः । इदमितीति विषयोपरागः विषयसम्बन्धः, तद्दर्शयति—इन्द्रियप्रणालिकयेति तदस्तदधस्तात्कृतव्याख्यानम् । निश्वासेनाभिहतः यो दर्पणः तत्र च मलिनिमा मालिन्यम् । परिणतिभेदः 'अयं घट' इत्यादिज्ञानरूपः बुद्धेः परिणाम एव विषयेण=घटादिना, अयमेव ज्ञानमुपलब्धिर्वृत्तिरिति चोच्यते इति द्वितीयोंऽशः । कर्त्त-

ष्यामितीति--पूर्वोक्त पुरुषोपरागविषयोपरागाभ्यां कर्त्तव्यस्य=घटादे रवमास तेन कर्त्तव्य' मिति निश्चयात्मकाऽध्यवसायो व्यापाराय इत्यर्थ' इति तृतीयांश । तेनेति--इत्यमशत्रयवती बुद्धिरित्यर्थ । तत्परिणामेन ज्ञानन वृत्तिरूपेण पुरुषस्य निरतिशयचैतन्यस्वभावस्य अतात्त्विकः आरोपित सम्बन्ध वस्तुत पुरुषस्य असङ्ग त्वात्, सोऽयमतात्त्विक सम्बन्ध यत्र ( दर्पणस्य मलिनिम्नेव मुख स्य ) उपलब्धिरिति ख्यायते साङ्ख्यै इतान्ते । अतात्त्विकभावे रणन्तो दर्पणस्येति ।

तथा च 'चेतनोऽहञ्जानामि इत्याकारो बुद्धावारोपितस्य य सम्बन्धोऽतात्त्विक स उपलब्धि ननु बुद्धिरेवोपलब्धिरितिभाव । ज्ञानवदिति--यथा ज्ञान ( वृत्तिरूपम् 'अयं घट' इत्याकारकम् ) बुद्धिधर्म तथा सुखाद्या अपि तस्या एव परिणामविशेषा । कृति- सामानाधिकरण्येनेति--अर्थात् अह करोमीति यत्र प्रत्यय तत्रैव अह सुखी अह दु खीत्यादि प्रत्ययोपि बाध्य । कृतिस्तु बुद्धेरेव धर्म साच परिणामनस्वभावा न चेतना पुरुषोनेत्यर्थ अतएवानि त्येत्याशयवान् 'नच' इत्यादिग्रन्थ । इतिसाङ्ख्यमिति--उक्त वक्ष्यमाणयुक्त्या खण्डितमि यर्थ । कृत्यदृष्टभोगानामिति--कृतिः प्रयत्न, यस्मिन्नधिकरणे कृत्यादय प्रतीयन्ते तत्रैव चैतन्यस्यापि प्रतीति अर्थात् कृति स्वसमानाधिकरणमदृष्ट जनयति, अदृष्ट स्वसमानाधिकरणमेव भोग जनयति इति कृत्यदृष्टभोगाना परस्प रया सामानाधिकरण्य=एकाधिकरणवृत्तित्वम् तत्प्रतीतिवत् 'चेत- नोऽह करोमि' इति प्रतीतिरपि एकाधिकरणवृत्तित्वसम्बन्धेनैव तस्मात् चैतन्य पुरुषस्वभाव कृत्यादयो बुद्धरथेति साङ्ख्यमतम- सम्मतमेव । तद्भिन्न इति--कर्तृभिन्ने चेतने नैव प्रमाण परयाम इत्यर्थ ।

उक्तं च कुसुमाञ्जलावाचार्यैः—

कर्तृधर्मा नियन्तारश्चेतिता च स एव नः ।
अन्यथानपवर्गः स्यादसंसारोऽथवा ध्रुवः ॥ इति

चेतनोऽहं करोमीति प्रतीतिश्चैतन्यांशे भ्रम इति चेत्कर्त्रंशे किं नेष्यते । अन्यथा बुद्धेर्नित्यत्वे मोक्षाभावोऽनित्यत्वे तत्पूर्वमसंसारापत्तिः । नन्वचेतनायाः प्रकृतेः कार्यत्वाद्बुद्धेरचैतन्यं कार्यकारणयोस्तादात्म्यादिति चेन्न, असिद्धेः । कर्तुरन्यत्वे मानाभावात् । वीतरागजन्मादर्शनाद्नादित्वम् । अनादेर्नाशासंभवान्नित्यत्वम् । तत्किं प्रकृत्यादिकल्पनेन ।

सांख्यस्य शङ्कां—चेतनोऽहमिति । अयमभिप्रायः—स्वयं जडापि बुद्धिः चेतनपुरुषसम्बन्धात् तत्प्रतिबिम्बोद्ग्राहिणी भूत्वा स्वस्या मिथ्यैवाभिमानं धत्ते चेतनोऽहं करोमीति तस्माच्चैतन्यं (ज्ञानं) न कृत्यादिसमानाधिकरणकमिति । नैयायिक उत्तरयति—कर्त्रंशे इति । यदि चैतन्यांशे भ्रमं मन्यसे तथैव युक्त्या कर्त्रंशेऽपि भ्रमो मन्यताम् ? अर्थात् यथा चैतन्यं पुरुषनिष्ठमपि बुद्धावारोपितमेव कृतिरपि पुरुषनिष्ठा सती बुद्धौ भ्रमेण भासते वस्तुतोऽसौ पुरुषधर्म एवेत्यपि स्वीक्रियताम् तथा च तवानुमानबाधकमनुमानम्—'बुद्धिः कर्तृत्वाभाववती अन्यधर्माश्रयत्वात् इति । अन्यथेति—कर्तृचेतनयोर्भेदाङ्गीकारे । बुद्धेर्नित्यत्व इति—अस्यायमाशयः—तव मते चेतने सुखदुःखयोरभावः तत्र बन्धमोक्षव्यवहारः सर्वथाऽसम्भवी, तस्मादसौ बुद्धिसत्त्वासत्त्वहेतुक एव मन्तव्यः तद्यदि बुद्धिर्नित्या तदा तद्धेतुकसंसारस्य सदातनत्वापत्तौ मोक्षाभावः । यद्यनित्या तदा तु

उत्पत्ते पूर्वं बुद्धेरभावात्ससारोत्पत्तिरेव न स्यात्, अर्थात् बुद्ध्युत्पत्ते पूर्वं ससारनिमित्तमदृष्टमेव न स्यात् तदभावे च कुतो बुद्धेरुत्पत्ति, एव सति ससाराभाव इति सर्वथा साङ्ख्यो निरुत्तर। पुन शङ्कते स एव नवेति। स्पष्टम्। सिद्धान्ती खण्डयति—नेति। असिद्धेरिति–बुद्धि प्रकृतिकार्यमित्यस्याऽसिद्धेरित्यर्थ। कर्तुरिति—य ■ कर्ता स स सर्वोऽपि जन्य एवेत्यत्रापि प्रमाणाभाव। कर्तृत्वस्य जन्यत्वेऽनुकूलतर्काभावादितिभाव। प्रत्युत तद्विपरीतानादित्वग्राहकतर्कसत्वादनादिरेव कर्ता इत्याह—वीतरागेति। सरागो जायत इति सूत्रस्यार्थांयं। अनादित्वमिति–अयमर्थं — स्तन्यपाने या बालस्य प्रवृत्ति सा इष्टसाधनताज्ञान विना न भवति तच्च नानुभवरूप बाधात्, किन्तु स्मरणरूपम्, तच्च सस्कारापेक्षम् सस्काराश्चानुभवसापेक्षा अनुभवश्च अनुभवितार मन्तरा नोपपद्यत ततश्च पूर्वजन्मसिद्धि तताऽपि पूर्वप्रवृत्त्यनुरोधेन पूर्वं पूर्वं जन्म सिद्ध्यतीति ज मप्रवाहस्यानादित्वे सुतरा पुरुषस्यानादित्वमिति। अनादेरित्यस्य भावस्येति शेष। जन्यभावस्य नाशकारणनियमिति भाव। तत्किमिति -तस्मात्प्रकृत्यादिकल्पना मुधैव साङ्ख्याना पुरुषस्यैव कर्तृत्वात्। कृत्यादीना चैतन्यसामानाधिकरण्यस्य युक्तिसिद्धतया साङ्ख्यप्रक्रिया नैवादरार्हेति भाव।

नच—"प्रकृते क्रियमाणानि गुणै कर्माणि सर्वशः।
अहङ्कारविमूढात्मा कर्ताहमिति मन्यते॥" गीता अ. ३ श्लो. २७ इत्यनेन विरोध इति वाच्यम्, प्रकृतेरदृष्टस्य गुणैरदृष्टजन्यैरिच्छादिभि. कर्ताहमेवेत्यस्य तदर्थत्वात्। "तत्रैव सति कर्तारमात्मानं केवल तु य." इत्यादि वदता भगवता प्रकटीकृतोऽयमुपरिष्टादाशय इति सक्षेप॥

पुनराशङ्क्य साङ्ख्यमतं निरस्यति सिद्धान्ती—नचेत्यादिना प्रकृति=प्रधानं सत्त्वरजस्तमसां साम्यावस्थेति यावत्, तस्या=गुणैः=सत्त्वादिलक्षणैः क्रियमाणानि=अनुष्ठीयमानानि कर्माणि=शुभाशुभलक्षणाः क्रियाः सन्तीति यत्र अहङ्कारोऽहमितिप्रत्यय स्तेन विमूढ आत्मा अन्तःकरणं यस्य तथाविधः पुरुषः अहङ्कर्तेति मन्यते इति भगवदाशय इत्याशयेन सह विरोधस्तथ नैयायिकस्य पुरुषनिष्ठकर्तृत्वेत्यादिना इत्याशय साङ्ख्यस्य। अस्यास्तत्त्वमर्थान्तर योजनया सिद्धान्तो दर्शयति—प्रकृतेरिति। नहि प्रकृतिपदं सर्वद-भिमतप्रधानपरकं किन्तु जीवादृष्टपरकम्। अहमेवेति—तथा च य मदृष्टादिनिरपेक्षं कर्मारभमाणं कर्तारं मन्यते स एव मूढ इति भगवदभिप्राय। अत्रैव किं गमकमित्याह—तत्रैवमिति॥

अधिष्ठानं तथा कर्ता करणं च पृथग्विधम्।
विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम्॥

इति पञ्चानामेव कर्मसमुपपाद्य 'तत्रैव—मित्यादिना स्वतन्त्र कर्तृत्वस्यैव निषेधः कृतो भगवता। सङ्क्षेप इति—यत्तु कार्यकारणयोरभेद इत्युक्तं तदपि न पूर्वापरभावादिभेदेन तद्वदसिद्धेरित्याधिकं विस्तरभयान्नोक्तमित्यर्थः।

**धर्माधर्माश्रयाध्यक्षो विशेषगुणयोगतः ॥ ४९ ॥**

**धर्माधर्माश्रय इति**। आत्मेत्यनुषज्यते। शरीरस्य तदाश्रयत्वे देहान्तरकृतकर्मणा देहान्तरेण भोगानुपपत्तेः। **विशेषगुणयोगत इति**। योग्यविशेषगुणस्य ज्ञानसुखादेः सम्बन्धेनात्मनः प्रत्यक्षत्वं सम्भवति न त्वन्यथा, अहं जाने अहं करोमीत्यादिप्रतीतेः॥ ४९॥

धर्माधर्माश्रय इतीति—अयमात्मा धर्माधर्मयोराश्रय समवा- येनाधिकरणम्, शरीरमेव कुतो नाश्रयो धर्मादेरित्याशङ्क्यसम्भावन- माह—शरीरस्येति भोगानुपपत्तेरिति तथाच कृतविप्रणाशाकृता- भ्यागमप्रसङ्गोऽनिवार्यः स्यात् तदुक्तं "शरीरदाहे पातकाभावात्" न्यायसू० ३।१।४ भाष्ये बहुस्पष्टमिति गौरवभयान्नेह प्रपञ्चितम् "अहञ्जान" इति आत्मनो मानसप्रत्यक्षे हेतुरुक्तः ।

**प्रवृत्त्याद्यनुमेयोऽयं रथगस्येव सारथिः ।**
**अहंकारस्याश्रयोऽयं मनोमात्रस्य गोचरः ॥ ५० ॥**

अयमात्मा परदेहादौ प्रवृत्त्यादिनाऽनुमीयते । प्रवृत्तिरत्र चेष्टा । ज्ञानेच्छाप्रयत्नादीनां देहेऽभावस्योक्तप्रायत्वाच्चेष्टायाश्च प्रयत्नसाध्यत्वाच्चेष्टया प्रयत्नवानात्माप्यनुमीयत इति भावः । अत्र दृष्टान्तमाह । रथेति । यद्यपि रथकर्मचेष्टा न भवति तथापि तेन कर्मणा सारथिर्यथाऽनुमीयते तथा चेष्टात्मकेन कर्मणा परात्मापीति भावः ॥ **अहंकारस्येति** । अहङ्कारोऽ हमिति प्रत्ययस्तस्याश्रयो विषयः आत्मा न शरीरादिरिति । **मन इति** । मनोभिन्नेन्द्रियजन्यप्रत्यक्षाविषयो मानसप्रत्यक्ष- विषयश्चेत्यर्थः । रूपाद्यभावेनेन्द्रियान्तरायोग्यत्वात् ॥ ५० ॥

यद्यप्यात्मा प्रत्यात्म प्रत्यक्षः तथापि परस्य परदेहादौ न भवति तत्र तस्यानुमानेन ज्ञानं सुशकमित्याह—अयमात्मेति। पर- कीयप्रवृत्त्यादेरतीन्द्रियत्वेन ज्ञातुमशक्यत्वात् स्वरूपासिद्धिर्हेतु- दोषः स्याद् इत्याह—प्रवृत्तिरत्रेति । तथाच चैत्रशरीरं चेतनाधि

वृत्तिं प्रवृत्तिमत्त्वात् स्ववत् इत्यनुमानं फलितम् । दृष्टान्तासिद्धिमाशङ्क्य निराकरोति—यद्यपीति । 'हिताहितप्राप्तिपरिहारानुकूलक्रिया चेष्टा' इति चेष्टाया लक्षणं सा च जडे रथादौ नास्तीति मतितुम्, तथापि रथव्यापारस्य यथा सारथेरनुमानं तथैव प्रयत्नजनितेन चेष्टात्मकेन कर्मणा परदेहस्याप्यनुमातुं शक्यते तथाचोक्तसंयोगयोग्यक्रियाश्रयत्वमेव 'प्रवृत्तिमत्त्व' हेतुना विवक्षितमिहेति भावः ।

आत्मनो मनोमात्रजन्यज्ञानविषयत्वे कारणमाह—रूपाद्यभावेनेति ।

## विभुर्बुद्ध्यादिगुणवान्—

विभुत्वं परममहत्त्वम् । तच्च पूर्वोक्तमपि स्पष्टार्थमुक्तम् ॥

परममहत्त्वमिति—'आकाशकालदिगात्मनां सर्वगतत्वं परमं महत्' इति २८ कारिकायां तथा 'बुद्ध्यादिषट्क' मिति ३५ कारिकायामुक्तमपि ।

अत्रेदं बोध्यम्—सर्वोऽयमात्मग्रन्थो न्यायाचार्यविश्वनाथेन सिद्धान्तरीत्या यथा प्रणीतः तथैवार्षग्रन्थेषूपलभ्यते—तथाहि—

प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तरविकाराः ।
सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानि ॥ वै. अ.३ आ. २ सू.४

प्रशस्तपादसंग्रहेऽपि—"आत्मत्वाभिसम्बन्धादात्मा" इत्याद्यभिधाय शरीरसमवायिनीभ्यां हिताहितप्राप्तिपरिहारयोग्याभ्यां प्रवृत्तिनिवृत्तिभ्यां रथकर्मणा सारथिवत् प्रयत्नवान् विग्रहस्याधिष्ठातानुमीयते प्राणादिभिश्चेति बहूक्तम् । तस्मादाधुनिका स्वयम्प्रतिभातया ग्रन्था न्यायमुक्तावलीं कपोलकल्पितां वदन्त स्वयं तथा वेदितव्याः ।

बुद्धयादीतिगुणवानिति-बुद्धिसुखदुःखेच्छादयश्चतुर्दशगुणाः पूर्वोक्ता वेदितव्याः ।

बुद्धयादीति स्पष्टम् ।

इति सप्रभायां न्यायमुक्तावल्यां आत्मस्वरूप-
निरूपणनाम्नी तृतीया मुक्ता ।

---

**बुद्धिस्तु द्विविधा मता ।**
**अनुभूतिः स्मृतिश्च स्यादनुभूतिश्चतुर्विधा ॥५१॥**

अत्रैव प्रसङ्गाद्बुद्धेः कतिपयं प्रपञ्चं दर्शयति । बुद्धिस्त्विति । द्वैविध्यं व्युत्पादयति । अनुभूतिरिति । अनुभूतिश्चतुर्विधेति । एतासां चतसृणां करणानि चत्वारि 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानी'ति सूत्रोक्तानि वेदितव्यानि ॥ ५१ ॥

आत्मनिरूपणानन्तरं मनोद्रव्यनिरूपणे प्राप्ते तद्विहाय बुद्धि[गुण] निरूपणप्रयोजनमाह—अत्रैव प्रसङ्गादिति । अनुभूतेश्चातुर्विध्यं महर्षिसम्मतमित्याह सूत्रोक्तानीति । अयं भावः—प्रत्यक्षात्मिकैवानुभूतिरिति चार्वाकाः । अनुमितिरपीति कणादसुगतौ । उपमितिरपीति साङ्ख्याः । अर्थापत्तिरपीति, प्राभाकराः । अनुपलब्धिरपीति भाट्टा वेदान्तिनश्च । सम्भवैतिह्ये अपीति पौराणिकाद्याः, तत्सर्वमयुक्तमिति सूचयितुं अनुभूतेश्चातुर्विध्यमुक्तं न्यायशास्त्रप्रवर्तकगोतममुनिसूत्रञ्च प्रमाणत्वेनोद्धृतम् इद

सूत्रे प्रथमाध्याये प्रथमाह्निकस्य तृतीयम् । प्रमाणचतुष्टयेषु अधिकानामन्तर्भाव न्यूनसङ्ख्यायाश्च निर्याह्यानुपपत्तिरिति बोध्यम् । एतच्चाग्रे १४० कारिकाव्याख्यायां स्फुटीकरिष्याम ।

**प्रत्यक्षमप्यनुमितिस्तथोपमितिशब्दजे ।**
**घ्राणजादिप्रभेदेन प्रत्यक्षं षड्विधं मतम् ॥५२॥**

इन्द्रियजन्य ज्ञान प्रत्यक्षम् । यद्यपि मनोरूपेन्द्रियजन्यं सर्वमेव ज्ञान, तथापीन्द्रियत्वेन रूपेणेन्द्रियाणां यत्र ज्ञाने कारणत्व तत्प्रत्यक्षमिति विवक्षितम् । ईश्वरप्रत्यक्ष तु न लक्ष्यम् । इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षमिति सूत्रे तथैवोक्तत्वात् ।

परममूले प्रत्यक्षमनुमितिरिति । प्रतिगत प्रतिगमक वा इन्द्रियमिति व्युत्पत्त्या व्युत्पन्न प्रत्यक्षशब्द प्रत्यक्षप्रमाकरणमिन्द्रिय बोधयति तादृशेन्द्रियजन्य ज्ञान प्रत्यक्षप्रमारूपाऽनुभूतिरित्यर्थ एव -मनुमीयतेऽनेनेत्यनुमानम् अनुमितिकरण तज्जन्य ज्ञानमनुमितिप्रमारूपा द्वितीयानुभूति । उपमीयतेऽनेनेति उपमानम् उपमितिकरण तज्जन्य ज्ञानमुपमितिप्रमारूपा तृतीयानुभूति । शब्द्यते प्रतिपाद्यतेऽर्थोऽनेनेति शब्द शाब्दीप्रमाकरणम् तज्जन्य ज्ञान शब्दजा ( शाब्दी ) प्रमारूपा चतुर्थी अनुभूतिरित्यर्थ । एवञ्चतुर्विधानामनुभूतीनां करणान्यपि चतुर्विधान्येवेति महर्षिगौतमसम्मतोऽय पक्ष इति सिद्धम् ।

उक्तञ्च तार्किकरक्षायाम्—

प्रत्यक्षमेक चार्वाका कणादसुगतौ पुन ।
अनुमानञ्च तच्चाथ साङ्ख्या शब्द च ते अपि ॥

न्यायैकदेशिनोऽप्येवमुपमानञ्च केचन ।
अर्थापत्त्या सहैतानि चत्वार्याह प्रभाकरः ॥
अभावषष्ठान्येतानि भाट्टा वेदान्तिनस्तथा ।
सम्भवैतिह्ययुक्तानि तानि पौराणिका जगुः ॥

उद्दिष्टासु प्रमासु प्रथमोपस्थितं प्रत्यक्षं लक्षयति मुक्तावल्या-मिन्द्रियजन्यमिति । इन्द्रियजन्यमिन्द्रियरूपादावप्यस्ति चक्षुरादीन्द्रियगतरूपादेश्चक्षुरादीन्द्रियजन्यत्वादतस्तत्रातिव्याप्तिः तां वारयितुं 'ज्ञानं' मित्युक्तम् । यदि 'ज्ञानं प्रत्यक्षं' मित्येतावदेव उच्येत तदा अनुमित्यादिप्रमासु अतिव्याप्तिः स्यात् अतः 'इन्द्रियजन्यं' मित्युपात्तम् ।

तथा कृतेऽप्यनुमित्यादावतिव्याप्तिस्तदवस्थैव सर्वस्यानुमित्यादिज्ञानस्य मनोरूपेन्द्रियेणापि जन्यत्वादित्याशयेनाशङ्कते—यद्यपीति । समाधत्ते—तथापीति । अयमाशयः —'शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति' इत्याग्रे इन्द्रियलक्षणं निरूपयिष्यते, तल्लक्षणाक्रान्तेनेन्द्रियत्वेन रूपेण यस्मिन् ज्ञाने इन्द्रियाणां कारणता तादृशं ज्ञानं प्रत्यक्षमित्यभिप्रेतम् मनसस्तु मनस्त्वेन रूपेण ज्ञानमात्रं प्रति ( अनुमित्यादिसकलसाधारणज्ञानंप्रति ) कारणता नत्विन्द्रियत्वेन रूपेण, सुखादिसाक्षात्कारप्रत्यक्षे मनस इन्द्रियत्वेन कारणता नत्वितरत्र तथाच ज्ञानमात्रंप्रति मनः साधारणं कारणं चक्षुरादीनीन्द्रियाणि तु तत्तद्रूपादिज्ञानंप्रत्यसाधारणकारणानि अतोऽनुमित्यादौ कथमपि नातिव्याप्तिः ।

ननु—ईश्वरप्रत्यक्षस्य इन्द्रियजन्यत्वाभावादव्याप्तिर्लक्षणदोषः ? अत आह ईश्वरप्रत्यक्षन्तु न लक्ष्यमिति । जैव ( जन्य ) प्रत्यक्षं लक्ष्यमित्यर्थः अत्र पारमर्षं सूत्रं प्रमाणयति—इन्द्रियार्थ-

सन्निकर्षोत्पन्नमिति । सूत्रे भ्रमवारणाय अव्यभिचारीत्युक्तम् । अव्यपदेश्य=निर्विकल्पकम् । व्यवसायात्मक=सविकल्पकम् इति द्विविधं प्रत्यक्षमित्यर्थः ।

अथवा ज्ञानाकरणकं ज्ञानं प्रत्यक्षम् । ( अनुमितौ व्याप्तिज्ञानस्योपमितौ सादृश्यज्ञानस्य शाब्दबोधे पदज्ञानस्य स्मृतावनुभवस्य करणत्वात्तत्र तत्र नातिव्याप्तिः ) । इदं लक्षणमीश्वरप्रत्यक्षसाधारणम् परामर्शजन्यं ज्ञानमनुमितिः । यद्यपि परामर्शप्रत्यक्षादिकं परामर्शजन्यं तथापि परामर्शजन्यं हेत्वविषयकं यज्ज्ञानं तदेवानुमितिः । न च कादाचित्कहेतुविषयकानुमितावव्याप्तिरिति वाच्यम्, तादृशज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् ।

यदि तु जीवेश्वरसाधारणं प्रत्यक्षज्ञानं लक्ष्यमभिमतं तदा लक्षणान्तरं करणीयमित्याह—अथवेति ज्ञानाकरणकमिति—"ज्ञानं न करणं यस्य तद् ज्ञानाकरणकं तादृशं ज्ञानं प्रत्यक्षम् । 'ज्ञान' पदेनात्र व्याप्तिज्ञानादेर्ग्रहणं तथाच अनुमितिं प्रति व्याप्तिज्ञानं उपमितिम्प्रति सादृश्यज्ञानं शाब्दबोधम्प्रति पदज्ञानं करणं प्रत्यक्षम्प्रति किमपि ज्ञानं न करणं, एवं 'ज्ञानाकरणकं ज्ञानं प्रत्यक्षं' जीवेश्वरसाधारणमनुमित्यादावतिव्याप्तिशून्यञ्चेति निर्दुष्टमिदं प्रत्यक्षप्रमालक्षणम् ।

ननु—कपोलकल्पितमिदं लक्षणं न सौत्रमिति चेद् ? भ्रान्तोसि—सूत्रस्थ इन्द्रियार्थसन्निकर्षोत्पन्न मितिपदं सावधारणं, तेनास्य "इन्द्रियार्थसन्निकर्षातिरिक्तानुत्पन्न" मित्यर्थः अतिरिक्त

चात्र ज्ञानमेव तथा दर्शितरीत्या व्याप्तिज्ञानादिकमेति मौलमिद लक्षणं नायुक्तम् इत्येतत्सर्वमभिप्रेत्य 'अनुमिता' विश्वारस्य 'साधारणा' मित्यन्तमुक्तम् ।

प्रत्यक्षप्रमां लक्षयित्वा अनुमितिं लक्षयति—परामर्शेति । व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः । तादृशपरामर्शजन्यं ज्ञानमनुमितिः । भवति हि 'वह्निव्याप्यधूमवानयं पर्वत' इतिज्ञानं व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शरूपम्, तज्जन्यं ' पर्वतोवह्निमान् ' इत्याकारकं यज्ज्ञानं तदेवानुमितिरितिलक्षणसमन्वय, अर्थात् उक्तपरामर्शरूपव्यापारद्वारा व्याप्तिज्ञानं यस्य ज्ञानस्य जनक, तादृशं यज्ज्ञानं ' पर्वतोवह्निमान् ' इत्याद्याकारकं तदेवानुमितिरिति । एतच्च विस्तृतमग्रेऽनुमानखण्डे स्फुटीकरिष्यते ।

अतिव्याप्तिं शङ्कते—यद्यपीति । परामर्शप्रत्यक्षादिकमिति । आदिना परामर्शध्वंसोऽपि । अयमर्थः—विषयविधया परामर्शप्रत्यक्षं परामर्शजन्यमेव, तथा प्रतियोगिविधया च परामर्शध्वंसोऽपि परामर्शजन्यः स्वप्रत्यक्षप्रति, स्वस्य कारणत्वात् एवं परामर्शजन्ये परामर्शप्रत्यक्षे परामर्शध्वंसे च भवत्येव दर्शितानुमितिलक्षणस्यातिव्याप्तिः ।

समाधत्ते—तथापीति । हेत्वविषयकमिति—अयमर्थः—हेतुं यद् न विषयीकरोति तादृशं यद् ' पर्वतो वह्निमान् ' इत्याकारकं ज्ञानं तदेवानुमिति. । ' वह्निव्याप्यधूमवानयं पर्वत ' इत्याकारके, परामर्शज्ञाने धूमात्मको हेतुर्भासते ( विषयीभवति ) तादृशज्ञानविषयके अनुव्यवसायात्मके परामर्शप्रत्यक्षेपि हेतुर्भानमावश्यकं ज्ञानेन यद् यद् विषयीक्रियते ज्ञानज्ञानेनापि तदवश्यं विषयीक्रियत इति नियमसत्त्वात् तथाच विवक्षितप्रकारेण न परामर्शप्रत्यक्षेऽनुमिति-

अव्याप्त्यतिव्याप्ती 'पर्वतो वह्निमान्' इत्याकारकस्य ज्ञानस्य हेतु-विषयकत्वात् परामर्शजन्यत्वाच्च।

ननु- धूमवान् पर्वतो वह्निमान्' इत्याकारके कदाचिज्जायमाने ऽनुमितिज्ञाने धूमहेतुरपि पक्षतावच्छेदकविधया (पक्षनिष्ठविशेषणविधया) भासते तदनुज्ञानमनुमितिरूपमपि हेत्वविषयकं न किन्तु धूमात्मकहेतुविषयकमेवेत्यत्राऽव्याप्तिरेवोक्तलक्षणस्य इत्याशङ्काप-नयनाय 'नच' इत्यारभ्य 'विवक्षितत्वाद्' इत्यन्तो ग्रन्थः।

तादृशज्ञानवृत्तीति समाधानग्रन्थस्यायमर्थः 'तादृशज्ञान' पदेन 'व्याप्तिविशिष्टपक्षधर्मताज्ञान' रूपोऽर्थो बोध्यः, तथाच व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यं यदनुमित्यात्मकं ज्ञानं तस्मिन् वृत्तिर्वर्तनं यस्या सा चासौ अनुभवत्वव्याप्या जाति अर्थात् अनुमितित्वं तादृशजातिमत्त्वमेव प्रकृते "परामर्शजन्ये" त्यादिलक्षणवाक्येन विवक्षितम् तेन 'धूमवान् पर्वतो वह्निमान्' इत्याकारायामनुमितौ 'हेत्वविषयकत्व' रूपलक्षणघटकस्याभावेऽपि अनुमितित्वजातिरूपविवक्षितधर्मसत्त्वान्नाव्याप्तिः (नाऽव्याप्तिः)।

**घ्राणस्य गोचरो गन्धो गन्धत्वादिरपि स्मृतः।**
**तथा रसो रसज्ञायास्तथा शब्दोऽपि च श्रुतेः॥५३॥**

गोचर इति ग्राह्य इत्यर्थः। **गन्धत्वादिरिति।** आदि-पदात् सुरभित्वादिपरिग्रहः। गन्धस्य प्रत्यक्षत्वात्तद्वृत्तिजातिरपि प्रत्यक्षा। गन्धाश्रयग्रहणे तु घ्राणस्य न सामर्थ्यमिति बोध्यम्। **तथा रस इति।** रसत्वादिसहित इत्यर्थः। तथा शब्दोऽपि शब्दत्वादिसहितः। गन्धो रसश्च उद्भूतो बोध्यः॥ ५३॥

सम्प्रति येषामिन्द्रियाणां यस्य विषयस्य ग्रहणे शक्तिः तत् पृथक् २ दर्शयति घ्राणस्येति—परममूले । मूले गोचर इति । गोचरो ग्राह्यो विषय इत्यनर्थान्तरमित्यर्थः । सुरभित्वादीति—आदिना गन्धत्वव्याप्ये सुरभित्वासुरभित्वे ग्राह्ये एवं गन्धाभावोऽपि घ्राणेन्द्रियग्राह्यः, 'येनेन्द्रियेण यद्गृह्यते तेनेन्द्रियेण तद्गुणः तन्निष्ठा जातिः तदभावश्च गृह्यते' इति नियमात् । गन्धाश्रयेति—गन्धाश्रयः पृथिवी तस्या ग्रहणे साक्षात्कारे घ्राणेन्द्रियस्य न शक्तिरित्यर्थः, द्रव्यसाक्षात्कारे चक्षुस्त्वचश्च सामर्थ्यं नत्वितरेषामिन्द्रियाणाम् तेषां योग्यविषयावभासकत्वनियमात् । रसज्ञायाः रसनेन्द्रियस्य रसत्वादिसहितो रसोऽपि गोचरः अर्थात् रसः, रसत्व जातिः, रसाभावश्चेति रसनेन्द्रियविषयाः । एवं श्रुतेः श्रोत्रेन्द्रियस्य शब्दः, शब्दत्व जातिः, शब्दाभावश्चेति विषयत्रयी । उद्भूत इति—तथाच अनुद्भूतस्य गन्धस्य रसस्य च नैव प्रत्यक्षं जायते इति भावः ।

*अथवा व्याप्तिज्ञानकरणं ज्ञानमनुमितिः। एवं सादृश्यज्ञानकरणकं ज्ञानमुपमितिः । पदज्ञानकरणकं ज्ञानं शाब्दबोधः । वस्तुतोयां काञ्चिदनुमितिव्यक्तिमादाय तद्व्यक्तिवृत्तिप्रत्यक्षावृत्तिजातिमत्त्वमनुमितित्वम् । एवं यत्किञ्चित्प्रत्यक्षादिकमादाय तद्व्यक्तिवृत्त्यनुमित्यवृत्तिजातिमत्त्वं प्रत्यक्षत्वादिकं वाच्यमिति । जन्यप्रत्यक्षं विभजते—घ्राणजादीति । घ्राणजं रासनं चाक्षुषं स्पार्शनं श्रौत्रं मानसमिति षड्विधं प्रत्यक्षम् । नन्वेश्वरप्रत्यक्षस्याविभजनान्न्यूनत्वम्, जन्यप्रत्यक्षस्यैवनिरूपणीयत्वादुक्तमूलानुसारात् ॥ ५२ ॥

* 'अथवा' इति मूलमारभ्य 'दर्शितसूत्रानुसारा दित्यर्थ' इति प्रमान्तो ग्रन्थः २०० पृष्ठे 'ना जाति.' इत्यस्याग्र पठनीय ॥

परोक्तं लाघवमभिसन्धाय लक्षणान्तरं वक्तुमाह-अथवेति। व्याप्तिज्ञानकरणकमिति—व्याप्तिज्ञान ( अनुमानखण्डे वक्ष्यमाण, हेतुनिष्ठात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यरूपाया व्याप्ते: प्रत्यक्षात्मक ज्ञान) साध्यहेत्वो: साहचर्यज्ञानं करणं ( व्यापारवद् साधारण कारणं ) यस्य ज्ञानस्य तज्ज्ञानमनुमितिः । एवमिति— सादृश्यज्ञानं करणं यस्य तत् ज्ञानमुपमितिः, पदज्ञानं करणं यस्य तत् ज्ञानं शाब्दबोध इति लक्षणकरणे कुत्रापि न दोष । एतच्चाग्रे तत्र तत्र स्फुटीभविष्यति ।

अनुमित्यादिकप्रत्यक्षे न व्याप्तिज्ञानत्वादिना करणत्वं किन्तु मनस्त्वेनैव अनुमित्यादिफलवैलक्षण्यञ्च सामग्रीभेदादेव भविष्यति यथा प्रत्यक्षम्प्रति मनस्त्वेन करणत्वेऽपि चाक्षुषादिप्रमाभेद चक्षुरादिसामग्रीनिबन्धन तथाच दर्शितलक्षणानामसम्भवो दोष सिद्धान्तलक्षणमाह—वस्तुतस्त्विति । यां काञ्चिदिति—'पर्वतो वह्निमान्' इत्यादिव्यक्तिमात्रं गृहीत्वेत्यर्थं तस्यां व्यक्तौ वृत्तिर्यस्या प्रत्यक्षे चावृत्तिर्या जाति अर्थात् अनुमितित्वमेव तादृशजातिमत्त्वं । अनुमितिलक्षणम् एवमिति-एवमेव प्रत्यक्षादिष्वपि लक्षण घटनीयम् इत्यग्रमन्यत् । ननु—ईश्वरप्रत्यक्षमपि सतत कुतो नोक्त, तथाच न्यूनता ग्रन्थस्येत्यत आह 'नचे' त्यादि पूर्वोत्तरपक्षग्रन्थम । उक्तसूत्रेति—'इन्द्रियार्थसन्निकर्षोत्पन्न मित्यादिदर्शितसूत्रानुसारादित्यर्थं ।

उद्भूतरूपं नयनस्य गोचरो
द्रव्याणि तद्वन्ति पृथक्त्वसंख्ये ।
विभागसंयोगपरापरत्व-
स्नेहद्रवत्वं परिमाणयुक्तम् ॥ ५४ ॥

ग्रीष्मोष्मादावनुद्भूतरूपमिति न तत्प्रत्यक्षम् । तद्वन्ति उद्भूतरूपवन्ति ॥ ५४ ॥

*क्रिया जातिर्योग्यवृत्तिः समवायश्च तादृशः ।
गृह्णाति चक्षुः संयोगादालोकोद्भूतरूपयोः ॥५५॥

योग्येति । पृथक्त्वादिकमपि योग्यवृत्तितया बोध्यम् । तादृशः योग्यव्यक्तिवृत्तिरित्यर्थः । चक्षुर्योग्यत्वमेव कथं तदाह-गृह्णातीति । आलोकसंयोग उद्भूतरूपं च चाक्षुषप्रत्यक्षे कारणम् । तत्र द्रव्यचाक्षुषं प्रति तयोः समवायसम्बन्धेन कारणत्वम् । द्रव्यसमवेतरूपादिप्रत्यक्षे स्वाश्रयसमवायसम्बन्धेन द्रव्यसमवेतस्य रूपत्वादेः प्रत्यक्षे स्वाश्रयसमवेतसमवायसम्बन्धेनेति ॥ ५५ ॥

ग्रीष्मोष्मादाविति—आदिना चूर्णप्रविष्टतेज परिग्रहः । उद्भूतरूपवन्तीति—नयनस्य गोचरा इति विभक्तिव्यत्ययेनान्वय. । गोचरपदोऽजहल्लिङ्ग । योग्यवृत्तितयेति—तेन परमाण्वादिगतपृथक्त्वसङ्ख्यादीनां न चाक्षुषं प्रत्यक्षम । उद्भूतरूप, उद्भूतरूपवद्द्रव्य, पृथक्त्व, सङ्ख्या, विभाग, संयोग, परत्वम, अपरत्व, स्नेह, द्रवत्व, परिमाणम प्रत्यक्षयोग्या क्रिया, जाति, तथा समवायश्चेति सर्वे चक्षुषो विषया, एतेषां चाक्षुषं प्रत्यक्षमित्यर्थः । आलोकसं-

---

* क्वचित् २ 'क्रिया जाति' मित्यादि द्वितीयान्तः पाठ स न युक्तो भाति तया सति 'नयनस्य गोचर' इत्यनेनान्वयो नार्हति भवितुम् इति । ननु—प्रथमान्तपाठेऽपि गृह्णाति' पदेनान्वयो दुर्घट' ? सत्यम् तत्र 'एतान् पदार्थान्' इति पदद्वयाध्याहारे निराकाङ्क्षप्रतिपत्तिरस्त्येव ।

योग इति—मोरायालोकस्य सयोग सन्निकर्षः उद्भूतरूपञ्च एत-द्द्रय चाक्षुषप्रत्यक्षम्प्रति कारणम्=हेतुः एतदभावे द्रव्यप्रत्यक्षानुप-पत्त । एतयो कारणतावच्छेदकसम्बन्ध दर्शयति—तत्रेत्यादिना ।

द्रव्यचाक्षुषमिति—घटपटादिद्रव्यीयचाक्षुषसाक्षात्कारम्प्रति । समवायसम्बन्धेनेति—तथाचात्र तयो कारणतावच्छेदकसम्बन्ध-समवाय, यतो घटालोकयो सयोग उभयवृत्ति, गुणगुणिनोश्च समवाय । एवमुद्भूतरूपमपि घटपटादिद्रव्ये समवायसम्बन्धेन वर्तत, विषयनिष्ठसाक्षात्कारम्प्रति समवायेनैव तयोर्हेतुतेति युक्तमुक्त 'द्रव्यचाक्षुष प्रती'त्यादि । द्रव्यसमवेतसमवेतेति—द्रव्ये=घटादौ समवेत रूप, तत्र रूपत्वस्य समवाय, अतो द्रव्यसमवेतसमवेत रूपत्वादि । स्वाश्रयसमवेतेति—अत्र 'स्व' पदेन आलोकसयोग उद्भूतरूपञ्च गृह्यते तयोराश्रय =अधिकरणं यद्घटादि द्रव्यं, तत्र समवेत रूपादिकं तत्र रूपत्वादि समवायेन वर्तते, जातिव्यक्त्योः सम-वायाभ्युपगमात् । एवंविधपरम्परासम्बन्धेन रूपत्वादिप्रत्यक्षे 'आ-लोकसयोगोद्भूतरूपयो कारणभावो ज्ञेय ।

यद्यालोकसयोग कारण न स्यात् तदान्धकारेऽपि घटादीनां चाक्षुष प्रत्यक्ष स्यात्, उद्भूतरूपञ्चेत् कारण न स्यात्, तदा पिशा-चादीनामपि प्रत्यक्षापत्तिरनिवार्या इत्युभयमावश्यकम् ।

**उद्भूतस्पर्शवद्द्रव्यं गोचरः सोऽपि च त्वचः ।**

**रूपान्यच्चक्षुषो योग्यं रूपमत्रापि कारणम् ॥ ५६ ॥**

द्रव्याध्यक्षे—

उद्भूतस्पर्शवद्द्रव्यं त्वचो गोचरः । सोऽपि उद्भूत-स्पर्शोऽपि स्पर्शत्वादिसहितः । रूपान्यदिति । रूपभिन्नं रूप-

त्वादिभिन्नं यच्चक्षुषो योग्यं तत्त्वगिन्द्रियस्यापि ग्राह्यम्। **तथाच** पृथक्त्वसंख्यादयो ये चक्षुर्ग्राह्या गुणा उक्ता एवं क्रियाजातयो योग्यवृत्तयश्च ते त्वचो ग्राह्या इत्यर्थः। **अत्रापि** त्वगिन्द्रियजन्येऽपि रूपं द्रव्यप्रत्यक्षे कारणम्। **तथाच** बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे रूपं कारणम्।

चाक्षुषप्रत्यक्षं निरूप्य त्वाचं निरूपयति उद्भूतस्पर्शवदिति। स्पर्शत्वादिसहित इति। उद्भूतस्पर्शं स्पर्शान्तर्जातिं स्पर्शाद्यभावञ्च त्वगिन्द्रियस्य गोचर इत्यर्थः। रूपभिन्नमिति—रूपभिन्नं रूपत्वाभिन्नं रूपाभावभिन्नं रूपत्वाभावभिन्नञ्चेत्यर्थः। तदिति—तत्सर्वं पूर्वकारिकोक्तं त्वगिन्द्रियस्यापि विषयः। तदेव स्पष्टयति—तथाचेति। अत्रापि त्वाचे प्रत्यक्षेऽपि रूपं कारणम्। तदेव सङ्कलय्य दर्शयति—तथाचेति। बहिरिन्द्रियजन्येति—बहिरिन्द्रियजन्यत्वावच्छिन्नद्रव्यप्रत्यक्षत्वावच्छिन्नं प्रति रूपं कारणम्, तथा चैतस्मिन्मते वायुगतस्पर्शस्य त्वाचप्रत्यक्षे सत्यपि वायुर्न प्रत्यक्षः किन्त्वनुमेय एवेतिभावः।

नवीनास्तु **बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे न रूपं कारणं** प्रमाणाभावात्। **किन्तु** चाक्षुषप्रत्यक्षे रूपं स्पार्शनप्रत्यक्षे स्पर्शः कारणमन्वयव्यतिरेकात्। **बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे किं कारणमिति चेन्न** किंचित्। आत्मावृत्तिशब्दभिन्नविशेषगुणवत्त्वं वा प्रयोजकमस्तु। **रूपस्य** कारणत्वे लाघवमिति **चेन्न**, वायोस्त्वगिन्द्रियेणाग्रहणप्रसङ्गात्। **इष्टापत्तिरिति** चेदुद्भूतस्पर्श एव लाघवात्कारणमस्तु। **प्रभायां** अप्रत्यक्षत्वे

त्विष्टापत्तिरेव किं नेष्यते । **तस्मात्** प्रभां पश्यामीतिवत् वायुं स्पृशामीति प्रत्ययस्य सम्भवाद्वायोरपि प्रत्यक्षं सम्भवत्येव । **बहिरि**न्द्रियजन्यद्रव्यप्रत्यक्षमात्रे न रूपस्य न वा स्पर्शस्य हेतुत्वम् । वायुप्रभयोरेकत्वं गृह्यत एव, क्वचिद्द्वित्वादिकमपि, क्वचित्संख्यापरिमाणाग्रहो दोषादित्याहुः ॥ ५६ ॥

नवीनास्त्विति—गङ्गेशोपाध्यायप्रभृतयो नव्यान्यायाचार्या बहिरिन्द्रियजन्येत्यादि । एतामयमाशय —बहिरिन्द्रियजन्यद्रव्य प्रत्यक्षसामान्यं प्रति रूपमेव कारणमित्यत्र नैव किञ्चित्प्रमाणमुपलभामह किन्तु रूपसत्त्वे चाक्षुष प्रत्यक्ष तदभावे तदभाव, स्पर्शसत्त्वे त्वाच प्रत्यक्ष तदभावे तदभाव' इत्यन्वयव्यतिरेकबलेन चाक्षुषप्रत्यक्ष प्रति रूप, त्वाचप्रति स्पर्श कारणमस्तु, तेन च वायोरपि त्वाच प्रत्यक्षं भवत्येवेति न वायुरनुमेय ।

जरन्नैयायिकः यदुक्तं—बहिरिन्द्रियेति । प्रत्यक्षमात्र इति प्रत्यक्षसामान्यइत्यर्थ । किं कारणमिति—किमनुगतं कारणमित्यर्थं । नव्यः समाधातुमाह- नेति । न किमप्यनुगत कारणम्, किन्तु विभिन्नैव कार्यकारणभाव यथाचोपरि दर्शितम । कल्पान्तर माह—आत्मावृत्तीति—आत्मनि न वृत्तिर्यस्य तादृशोय शब्दभिन्नो विशेषगुण [ अर्थात् पृथिव्यादिचतुष्टयवृत्ति रूपादिरेव ] तादृश गुणवत्त्वमेव [ रूपादिविशेषगुण एवेत्यर्थ ] बहिरिन्द्रियजन्यप्रत्यक्ष सामान्यप्रति हेतुरस्तु । अत्र आत्मनो बहिरिन्द्रियप्रत्यक्षवारणाय आत्मवृत्तीति। आकाशस्य बहिरिन्द्रियप्रत्यक्षवारणाय शब्दभिन्नेति कालादेस्तद्वारणाय विशेषेति ।

जरठ यदुक्ते-रूपस्येति । लाघवम् शरीरकृतलाघवमित्यर्थं । नवीनः समाधत्त—नेति । यदि बाह्यद्रव्यप्रत्यक्षसामान्यप्रति रूप

तथापि बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षत्वावच्छिन्नंप्रति किं नियामक मिति भवत्येवाकाङ्क्षा । ननु महदुद्भूतस्पर्शवत्त्वमेवास्तु नियामक-मितिचेद् ? प्रभाया प्रत्यक्षं न भविष्यति इष्टापत्तिरितिचेद् ? प्रभायास्तेजोरूपत्वात् 'प्रभां पश्यामी'ति प्रतीतेश्च अनिष्टापत्तिरत्र ना । अत एव प्रतीतौ 'रूपं पश्यामी'तिवद् (प्रभायाः) द्रव्यत्वाभाव-स्वयुपपत्तिरिति चेद् ? 'प्रभा चलति' 'प्रभा शुक्ला' इति प्रत्ययः कथम् ? । भ्रान्तिरूपोऽयं प्रत्यय इतिचेद् ? बाधकं ब्रूहि बाधकप्रत्ययं विना पूर्वप्रत्ययस्य भ्रमत्वायोगात् । । अस्तु तर्हि उद्भूतरूपवत्त्वमेव बहि-रिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रं प्रति हेतुः ? एवं सति वायोः ऊष्मादेश्च स्पार्शनं प्रत्यक्षं न भविष्यति । नैव भवतीति स्वीकुर्म इतिचेद् ? शरीरपवनसंयोगानन्तरं 'शीतो वायुः' 'उष्णो वायु'रित्यादिकं जायमानं स्पार्शनं प्रत्यक्षं वारयतु भवान् ।

ननु—स्पर्शमात्रगोचर एवायं प्रत्ययो न तु द्रव्यगोचर इतिचेद्? 'वायुं स्पृशामि' इत्याकारकानुव्यवसायापलापः कथं ? कथन्तराञ्च वायुविषयकत्वभानम् । अपिच महत्त्वोद्भूतस्पर्शवत्त्वस्यैव बाह्यद्रव्य-प्रत्यक्षमात्रंप्रति कारणत्वमुच्यताम् प्रभाया प्रत्यक्षत्वाभावश्चैव मन्यताम् ? 'प्रभां पश्यामीति' प्रत्यक्षं बलवान् महदुद्भूतरूपवत्त्वस्य कारणमात्रं इति चेद् ? 'वायुं स्पृशामी' त्यत्र प्रत्ययेऽपि दृष्टिपातो विधीयताम् । तन्नैव कश्चिदेव सिद्धान्तो न निर्णीत इति चेत्? बहि-रिन्द्रियजन्यद्रव्यप्रत्यक्षत्वावच्छिन्नं प्रति न तादृशं रूपं तथा तादृशं स्पर्शः कारणं किन्तु तत्र विभुवृत्तिभिन्नविशेषगुणवत्त्वमेव तन्त्रमस्तु तथाच प्रभायामपि प्रत्यक्षत्वे न किञ्चिद्बाधकमित्येव एव न्यायसिद्धा-न्तमञ्जरीसारादिमार ।

## त्वचो योगो मनसा ज्ञानकारणम् ।

त्वङ्मनसंयोगो ज्ञानसामान्ये कारणमित्यर्थः। किं तत्र प्रमाणं, सुषुप्तिकाले त्वचं त्यक्त्वा पुरीतति वर्तमानेन मनसा ज्ञानाजननमिति।

सकलज्ञानस्य साधारणकारणमाह—त्वचोयोग इति। ज्ञानसामान्य इति—जन्यज्ञानमात्र इत्यर्थः। अत्र प्रमाणं पृच्छति—किमिति। उत्तरयति—सुषुप्तिकाल इति। निद्रानाड्यवच्छिन्नात्ममनोयोगःसुषुप्तिः। इयमेव 'गाढा निद्रो'च्यते। निद्रानाडी पुरीतत्। अत्र श्रुतिः—'हिता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते' बृहदा० ५।१।२१ इति। यदि त्वङ्मन संयोगो ज्ञानसामान्यंप्रति कारणं न भवेत् तदा सुषुप्त्यवस्थायामपि ज्ञानेन भाव्यं, तत्र ज्ञानानुत्पत्तिरेवात्र प्रमाणमित्यर्थः।

ननु सुषुप्तिकाले किं ज्ञानं भविष्यति अनुभवरूपं स्मरणरूपं वा ?। नाद्यः अनुभवसामग्र्यभावात्। तथाहि। प्रत्यक्षे चक्षुरादिना मनःसंयोगस्य हेतुत्वात्तदभावादेव न चाक्षुषादिप्रत्यक्षम्। ज्ञानादेरभावादेव न मानसं प्रत्यक्षम्। ज्ञानाद्यभावे चात्मनोऽपि न प्रत्यक्षमिति। एवं व्याप्तिज्ञानाभावादेव नानुमितिः। सादृश्यज्ञानाभावान्नोपमितिः। पदज्ञानाभावान्न शाब्दबोधः। इत्यनुभवसामग्र्यभावान्नानुभवः। उद्बोधकाभावाच्च न स्मरणम्। मैवम्। सुषुप्तिप्राक्कालोत्पन्नेच्छादिव्यक्तेस्तत्सम्बन्धेनात्मनश्च प्रत्यक्षत्वप्रसङ्गात्। तदतीन्द्रियत्वे मानाभावात्। सुषुप्तिप्राक्काले निर्विकल्पकमेव नियमेन जायत इत्यत्रापि प्रमाणाभावात्।

सुषुप्तौ त्वङ्मनःसंयोगसत्त्वेऽपि ज्ञानसम्भावनैव नेति मन्वानः शङ्कते—नन्विति । प्रथमपक्षं निराकरोति—नाद्य इति । अनुभवसामग्र्या अभावं वर्णयति—तथाहीति । प्रत्यक्ष इति—चतुर्विधेष्वनुभवेषु आद्योऽनुभवः प्रत्यक्षं, तत्र चाक्षुषप्रत्यक्षम्प्रति चक्षुर्मनःसंयोगः कारणं, त्वाचम्प्रति त्वङ्मनःसंयोगो रासनम्प्रति रसनेन्द्रियमनोयोग इत्यादि स्वयमूह्यम् ।

सुषुप्तौ तत्तदिन्द्रियसंयोगात्मकसामग्र्या अभावादेव न बाह्यप्रत्यक्षात्मकोऽनुभव इत्यर्थः । ननु बाह्यं प्रत्यक्षं माभूत् मानसन्तु स्याद् अत आह—ज्ञानादेरभावादेवेति । द्विविधो मानसोऽनुभवः आत्मगतज्ञानादिगुणविषयक आत्मविषयकश्च, ज्ञानादेर्विशेषगुणस्याभावाच्चाद्यः, ज्ञानादियोग्यगुणसम्बन्धेनैव आत्मनोऽपि मानसं प्रत्यक्षं नान्यथेति कृत्वा योग्यविशेषगुणात्मकप्रत्यक्षसामग्र्यन्तर्गतस्य ज्ञानादेरभावादेव द्वितीयोऽपि नेति अवधार्यं । व्याप्तिज्ञानाभावादेवेति—व्याप्तिज्ञानं साहचर्यनियमात्मकं वक्ष्यमाणं 'यत्र धूमस्तत्र वह्नि'रित्यादि । नानुमितिरिति—अनुमितिम्प्रति तस्य करणत्वादिति भावः । सादृश्यज्ञानाभावादिति—अनुयोगितासम्बन्धेन तद्गतभूयोधर्मवत्त्वं सादृश्यं तस्य ज्ञानं, यथा 'घटसदृशः पटः' यथा वा 'गोसदृशो गवयः' इत्याद्याकारकम्, नोपमितिरिति—उपमितेः सादृश्यज्ञानजन्यत्वादित्यर्थः पदज्ञानाभावादिति—'शक्तं पदम्' इति वक्ष्यमाणशक्यरूपविषयकं ज्ञानं यथा 'घटो घटपदवाच्यः' इत्याकारकं तस्याभावादित्यर्थः, न शाब्दबोध इति—वाक्यार्थबोधो नेति शाब्दबोधम्प्रति पदज्ञानस्य करणत्वात् । इत्यनुभवेति—अनया रीत्या अनुभवात्मकज्ञानसामग्री सुषुप्तौ नास्ति अत एवानुभवात्मकं ज्ञानमपि तत्र न । नन्वस्तु तत्र स्मरणात्मकं ज्ञानम् अत आह—उद्बोधकाभा-

वादिति । संस्कारजन्य ज्ञानं स्मृतिः संस्काराश्च सादृश्यादिद्वारा उद्बुद्धाः सन्त एव स्मृतिं जनयन्ति नानुद्बुद्धाः सुषुप्तौ संस्कारोद्बोधक किमपि कारणं न, अतस्तत्र स्मृतिरपि नेत्यर्थः । तस्मात्सुषुप्तौ त्वङ्मनोयोगे सत्यपि तत्तज्ज्ञानसामग्र्यभावाच्च ज्ञानसम्भावना तत्कथं सुषुप्तौ ज्ञानाजननं ज्ञानसमान्यम्प्रति त्वङ्मनोयोगस्य कारणाभावाय गमकं स्यादित्याक्षेप्तुराशय । तदेतत् खण्डयितुमाह—नैवमित्यादि । सुषुप्तिप्राक्काल इति—यस्मिन् क्षणे सुषुप्तिः तदव्यवहिते पूर्वस्मिन् क्षणे, उत्पन्ना या इच्छादिव्यक्तिः ( इच्छाया आदिरितिव्युत्पत्त्या ) ज्ञानव्यक्तिः ('अयं घट अयं पटो' इत्याकारक यत् किमपि ज्ञानमित्यर्थः ) तत्सम्बन्धेन = संयुक्तसमवेतसम्बन्धेन 'अहं सुखी अहं ज्ञानवान्' इत्यकारकं यदात्मनः प्रत्यक्षं तस्य प्रसङ्गोऽवश्यम्भावी यदि त्वङ्मनःसंयोगो ज्ञानसामान्यं प्रति कारणं मन्येत, मम तु तदा त्वङ्मनःसंयोगाभावात् सुषुप्तेः पूर्वक्षणे विद्यमानायामपि यस्यां कस्याश्चिद्‌ज्ञानव्यक्तौ नैवात्मनः प्रत्यक्षमिति सिद्धान्तग्रन्थार्थः । नन्वास्तां तदतीन्द्रियमेवेत्यत आह—तदतीन्द्रियत्व इति । ज्ञानातीन्द्रियत्व इत्यर्थः । मानाभावात् प्रत्यक्षादिप्रमाणाभावात् । ननु-निर्विकल्पकत्वात् सुषुप्तिप्राक्कालीन ज्ञानमतीन्द्रियमित्यत आह—सुषुप्तिप्राक्काल इति । नहि प्रकारताविशेष्यतासंसर्गतानवगाहिज्ञानं नियमेन सुषुप्तिपूर्वक्षणे उत्पद्यत इति भाव ।

[1] अथ ज्ञानमात्रे त्वङ्मनःसंयोगस्य यदि कारणत्वं तदा रासनचाक्षुषादिप्रत्यक्षकाले त्वाचप्रत्यक्षं स्यात् । विषयत्वक्संयोगस्य त्वङ्मनःसंयोगस्य च सत्त्वात् । परस्परप्रतिबन्धादेकमपि वा न स्यादिति । अत्र केचित्पूर्वोक्तयुक्त्या त्वङ्मनोयोगस्य ज्ञानहेतुत्वे सिद्धे चाक्षुषादिसामग्र्याः स्पार्शनादिप्रति-

'बन्धकत्वमनुभवानुरोधात्कल्प्यत इति । अन्ये तु सुषुप्त्यनुरोधाच्चर्ममनःसंयोगस्य ज्ञानहेतुत्वं कल्प्यते । चाक्षुषादिप्रत्यक्षकाले त्वङ्मनःसंयोगाभावान्न स्पार्शनप्रत्यक्षमिति वदन्ति ॥'

त्वङ्मनःसंयोगस्य ज्ञानसामान्यम्प्रति कारणभावमसहमान उद्भूते—अथेति । आम्रादिरसानां रसनेन्द्रियजन्यप्रत्यक्षकाले आम्ररूपादिगतचक्षुरिन्द्रियजन्यप्रत्यक्षकाले वा त्वाचप्रत्यक्ष=त्वगिन्द्रियजन्य स्पर्शादि प्रत्यक्षमपि स्यात् । अत्र हेतुमाह—विषयत्वक्संयोगस्येति, 'सत्त्वाद्' इत्यन्तम । ननु चाक्षुषादिसामग्र्या (इन्द्रियसन्निकर्षरूपाया) स्पार्शनादिप्रतिबन्धकत्वं कल्पयिष्यते इत्यत आह—परस्परेति । रासनसामग्र्या चाक्षुषप्रतिबन्धकत्वात् चाक्षुषसामग्र्या रासनप्रतिबन्धकत्वात् परस्परप्रतिबन्धकत्वम् तेन एकमपि=किमपि ज्ञान न स्यादित्यर्थ ।

ज्ञानसामग्रीषु परस्पर प्रतिबन्धकप्रतिबध्यभावस्य कल्पनायान्तु विषयेन्द्रियसंयोगस्य इन्द्रियमन संयोगस्य च सर्वत्र सत्त्वात् किमपि ज्ञान न जायेत संयोगरूपायास्तस्या परस्परप्रतिबन्धकत्वादिति भाव ।

ज्ञानसामान्यम्प्रति त्वङ्मन संयोगस्य कारणवादी समाधत्ते—अत्र केचिदिति । पूर्वोक्तयुक्त्या=सुषुप्तिकाले त्वच त्यक्त्वा पुरीतति वर्तमानेन मनसा ज्ञाना जननमित्याकारया युक्त्या इत्यर्थ । त्वङ्मनोयोगस्य ज्ञानहेतुत्वे=ज्ञानकारणत्वे सिद्धे= प्रमाणसम्पन्न । चाक्षुषादिसामग्र्या इत्यादि, अस्यायमर्थ —चाक्षुषादिप्रत्यक्षसामग्री स्पार्शनप्रत्यक्षप्रतिबन्धिका तेन चाक्षुषादिज्ञानकाले त्वङ्मन संयोगसत्त्वे ऽपि न स्पार्शन प्रत्यक्षमिति । एतदेव मूल इत्यत आह—अनु-

भवानुरोधादिति । तथाचायं प्रयोगः—घटचक्षुरिन्द्रियसन्निकर्षं स्पार्शनप्रत्यक्षप्रतिबन्धकं रूपी घट इत्याकारकज्ञानजनकत्वात् यन्नैवं तन्नैवमिति ।

अत्रैव पक्षधरमिश्रमतमाह—अन्येत्विति । सुषुप्त्यनुरोधेन सुषुप्तौ ज्ञानानुत्पादानुरोधेन । चर्ममनःसंयोगस्य त्वगिन्द्रियगोलकस्थानेन सह मनःसंयोगस्य । ज्ञानहेतुत्वं ज्ञानसामान्यं प्रति कारणत्वं । कल्प्यते अनुमीयते । एतेन कल्पेन चाक्षुषादिप्रत्यक्षकाले उक्तस्पार्शनापत्तिरूपो दोषो न, तदा मनसः त्वगिन्द्रियेण साकं सन्निकर्षाभावात्, नापि च प्रतिबध्यप्रतिबन्धकभावकल्पनागौरवमित्यभिसन्धायाह—त्वङ्मनःसंयोगाभावादित्यादि । अत्र यद्यु वक्तव्यं ग्रन्थगौरवभयान्नोक्तम् ।

**मनोग्राह्यं सुखं दुःखमिच्छा द्वेषो मतिः कृतिः ॥५७**

**मनोग्राह्यमिति ।** मनोजन्यप्रत्यक्षविषयमित्यर्थः । मतिर्ज्ञानम् । कृतिः प्रयत्नः । एवं सुखत्वादिकमपि मनोग्राह्यम् । एवमात्मापि मनोग्राह्यः किन्तु मनोमात्रस्य गोचर इत्यनेन पूर्वमुक्तत्वादत्र नोक्तः ॥ ५७ ॥

मनसोऽसाधारणविषयानाह मनोग्राह्यमिति परममूले । मनोग्राह्यत्वस्य सार्वत्रिकत्वादाह—मनोजन्येति । मनोमात्रजन्येत्यस्यार्थ न्यूनतां परिहरति एवमिति ।

**ज्ञानं यन्निर्विकल्पाख्यं तदतीन्द्रियमिष्यते ।**
**महत्त्वं षड्विधे हेतुरिन्द्रियं करणं मतम् ॥ ५८ ॥**

चक्षुःसंयोगाद्यनन्तरं घट इत्याकारकं घटत्वादिविशिष्टं ज्ञानं न सम्भवति पूर्वं विशेषणस्य घटत्वादेर्ज्ञानाभावात् ।

विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात् । तथात्र प्रथमतो घटघटत्वयोर्वैशिष्ट्यानवगाह्येव ज्ञानं जायते । तदेव निर्विकल्पकम् । तच्च न प्रत्यक्षम् ।

एवमिन्द्रियगोचरं प्रत्यक्षमुक्त्वा इन्द्रियागोचरो यत् तदाह—ज्ञानं यदिति परममूले । निर्गतो विकल्प प्रकारतादिकतो विशेषो यस्मात् तत् तथाभूत यज्ज्ञान तदिन्द्रियाद्यतिक्रम्य वर्त्तत इति अतिन्द्रियम् इन्द्रियागोचर इत्यर्थ इष्यते नैयायिकैरिति शेषः । उक्तञ्च तार्किकरक्षायाम्—

नामादिभिर्विशिष्टार्थविषयं सविकल्पकम् ।
अविशिष्टार्थविषयं प्रत्यक्षं निर्विकल्पकम् ॥

नामादि विशेषणावैधुर्येण स्वलक्षणमात्रविषयं निर्विकल्पकम् । इति । विशेष्यविशेषणासम्बन्धैतत्त्रितयातिरिक्ताविषयतानिरूपकं । अयं भावः—निर्विकल्पके चतुर्थी विषयता स्वीक्रियते ननु त्रिविधविषयतामध्ये कापि तत्रास्ति विषयता, अतएव यथा 'इदं किञ्चित्' इति तदुदाहरन्ति ।

भट्टपादोऽपि—

अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्विकल्पकम् ।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥

इत्याह । शुद्धवस्तुज विशेषणविशेष्यभावानुल्लेखीत्यर्थः । एत-स्सर्वं विवृणोति मुक्तावलीकारः चक्षुःसंयोगाद्यनन्तरमिति । घट-चक्षुःसंयोगानन्तर जायमान 'अयं घट' इत्याकारक ज्ञान घटत्वादि-प्रकारकघटत्ववद्विशेष्यकस्वरूपं यद्विशिष्ट ज्ञानं तादृश न भवितुमर्ह-तीत्यर्थ. अत्र हेतुमाह पूर्वमिति । 'विशेषणाद्यये' त्यादर्निर्विकल्पक'मित्यन्तस्यायमर्थः—'अयं घट' इत्याकारक ज्ञानं विशिष्ट ज्ञान, यतो-

ऽत्र घटघटत्वे तयोः सम्बन्धश्च भासते, तत्र घटत्वं विशेषणं घटो विशेष्यः तयोः ( जातिव्यक्तिरूपयोः ) परस्पर समवायः सम्बन्धः उक्तेन ज्ञानेनैतत्त्रितयमेव विषयीक्रियते विशिष्टज्ञानञ्च विशेषणज्ञानपूर्वकमेवेत्यस्ति नियमः ततश्चयत्पूर्वं घटघटत्वयोर्विषयकावितं ( पृथक् पृथक् ) ज्ञानं वैशिष्ट्यानवगाहि 'इमे घटघटत्वे' इत्याकारकं तदेव निर्विकल्पकं भवति । तच्च न प्रत्यक्षमिति—नेन्द्रियसन्निकर्षजन्यमित्यर्थः ।

तथाहि । वैशिष्ट्यानवगाहिज्ञानस्य प्रत्यक्षं न भवति घटमहं जानामीति प्रत्ययात् । तत्रात्मनि ज्ञानं प्रकारीभूय भासते । ज्ञाने घटस्तत्र घटत्वम् यः प्रकारः स एव विशेषणमित्युच्यते । विशेषणे यद्विशेषणं तद्विशेषणतावच्छेदकमित्युच्यते । विशेषणतावच्छेदकप्रकारकं ज्ञानं विशिष्टवैशिष्ट्यज्ञाने कारणम् । निर्विकल्पके च घटत्वादिकं न प्रकारस्तेन घटत्वादिविशिष्टघटादिवैशिष्ट्यभानं ज्ञाने न संभवति । घटत्वाद्यप्रकारकं च घटादिविशिष्टज्ञानं न संभवति, जात्यखण्डोपाध्यतिरिक्तपदार्थज्ञानस्य किंचिद्धर्मप्रकारकत्वनियमात् ॥

यथेत्थं तथोपपादयति—तथाहीत्यादिना । वैशिष्ट्यानवगाहिज्ञानस्य विशेष्यताविशेषणतासंसर्गताऽविषयकस्य ज्ञानस्य प्रत्यक्षं न भवति अर्थात् उक्त ज्ञानमनुव्यवसाये न भासते किन्तु विशिष्टमेव भासते—अत्रोपपत्तिमाह घटमहमिति । अयमर्थः ज्ञानस्य ज्ञानमनुव्यवसाय उच्यते तस्यायमाकारः 'घटमहञ्जानामि' इति । अस्यां प्रतीतौ आत्मनि ज्ञानं विशेषणतारूपेण भासते 'घटज्ञानवानहं' मिति

एतस्मिन्ननुव्यवसायात्मके ज्ञाने तु घटो विशेषणतारूपेण भाति, तादृशे घटे च घटत्व जातिरूपो धर्म विशेषणं, प्रकारो विशेषणमित्यनर्थान्तरम् । विशेषणे इति—विशेषणे=ज्ञाने विशेषणीभूते घटे यत् घटत्व विशेषणं तदेव 'विशेषणतावच्छेदक' मिति शास्त्रसङ्केतः । विशेषणतावच्छेदकप्रकारकमिति—विशेषणतावच्छेदकं (घटत्व) प्रकारो यस्य तादृश यज्ज्ञान 'अयं घट' इत्याकारकं विशिष्टज्ञान तदेव विशिष्टवैशिष्ट्यज्ञाने 'घटमहञ्जानामि' इत्याकारके अनुव्यवसायात्मके ज्ञाने कारणं हेतुरित्यर्थ । इत्थञ्च प्रथमं जायमान घटत्वादिविशेषणज्ञान वैशिष्ट्यानवगाह्येव स्वीकर्त्तुमुचित, अन्यथा 'अयं घट' इति विशिष्ट ज्ञान नैव भवेत् तदभावे च 'घटमहञ्जानामि इति विशिष्टवैशिष्ट्यावगाहि ज्ञानमपि न स्यात् ।

एतत्समर्थयति—निर्विकल्पक इति ।' घटत्वादिधर्माणां प्रकारतारूपेण नैव भान निर्विकल्पके, तेन हेतुना घटत्वादिविशिष्टा ये घटाद्याः तेषां वैशिष्ट्यभानं=विशेषणतावगाहि ज्ञान ज्ञाने निर्विकल्पकाख्ये नैव जायत इत्यर्थ । घटत्वाद्यप्रकारकमिति—घटत्वादिः न प्रकारो विशेषणं यस्मिन् तादृश यज्ज्ञान, अर्थात् घटादिरेव यत्र प्रकार तज्ज्ञान विशिष्टमेव न सम्भवति ।

अयमत्राशयः—यदि प्रथम निर्विकल्पकज्ञान न स्वीक्रियेत तदा 'अयं घट' इति घटघटत्वादिविशिष्ट सविकल्पकं ज्ञानमपि न स्वीकर्त्तव्यं स्यात् तत्तु न 'घटमहञ्जानामि' इत्यबाधितानुव्यवसायप्रतीतिवशात्स्वीकर्त्तव्यत्वात् । तस्मात् - सविकल्पकज्ञानात्पूर्वं घटघटत्वयोर्यत् पृथक् प्रकारताविनिर्मुक्तं तदेव निर्विकल्पकमेव तथाच प्रयोग—'अयं घट' इति विशिष्टज्ञान विशेषणज्ञानजन्य विशिष्टज्ञानत्वात् 'दण्डी पुरुष' इति विशिष्टज्ञानवत् ननु—विशेषणज्ञानमपि ज्ञानत्वात्सविकल्पक किं न स्यादितिचेद् ?

न, तस्यापि सविकल्पकत्वे अनवस्थाप्रसङ्गान्निर्विकल्पकसिद्धि-तत्साधूक्तमतीन्द्रियमिति। अत्रैव ( विशेषणज्ञानस्य निर्विकल्पकत्वे) हेतुमाह—जात्यखण्डोपाध्यतिरिक्तेति। घटत्वादिजातिश्च प्रति-योगित्वानुयोगित्वाद्यनिर्वचनीयधर्मेभ्योऽखण्डोपाधिपदवाच्येभ्योऽतिरिक्तानां भिन्नानां पदार्थानां यज्ज्ञानं तस्य किञ्चिद्धर्मप्रकारत्व-नियमः, किञ्चिद्धर्मः प्रकारो यस्मिन् तादृशो नियमः + अयमर्थः-जात्यादिधर्माणां निरवच्छिन्नं ज्ञानं तद्भिन्नानां जातिमदादिपदार्थानां ज्ञानन्तु केनचिद्विशेषणेनावच्छिन्नमेव भवतीति नियमः तस्मादवश्य निर्विकल्पकज्ञानस्वीकार।

प्राभाकरास्तु निर्विकल्पकं नाङ्गीकुर्वन्ति। यतो विशेषणज्ञानस्य विशिष्टज्ञानम्प्रति कारणतैव न भवति द्रव्यविशिष्ट प्रत्यक्षे प्रतिसन्धान-विशिष्टोऽपि हेतुः। यदाहुः—

विशेषणं विशेष्यञ्च सम्बन्धं लौकिकीं स्थितिम्।
गृहीत्वा सङ्कलय्यैतत् तथा प्रत्येति नान्यथा॥

इति पदार्थरत्नमालाकारः। तदयमत्र सारः—

नामजात्यादियोजनारहितं निष्प्रकारकं ( विशेषणमात्र ) ज्ञानं वस्तुस्वरूपमात्रग्रहणस्वभावं निर्विकल्पकमिति नैयायिकाः यथा 'किञ्चिदिदम्' इति अथवा दूरात्। 'अस्ति किञ्चिद्' इति।

अलौकिक आलोचनात्मको ज्ञानविशेषस्तदिति साङ्ख्याः। ज्ञातृज्ञेयादिविभागशून्यं ब्रह्मात्मैक्यविषयमखण्डाकारकं वि-शेष्यविशेषणसम्बन्धरहितं ज्ञानं तदिति अद्वैतवादिनः।

**महत्त्वमिति।** द्रव्यप्रत्यक्षे महत्त्वं समवायसम्बन्धेन कारणम्। द्रव्यसमवेतानां गुणकर्मसामान्यानां प्रत्यक्षे स्वाश्रय-समवायसंबन्धेन कारणं द्रव्यसमवेतसमवेतानां गुणत्वकर्म-त्वादीनां प्रत्यक्षे स्वाश्रयसमवेतसमवायसम्बन्धेन कारणमिति।

परममूले षड्विध इति-उक्तरूपे षड्विधे प्रत्यचे अर्थात् चाक्षुषे रासने घ्राणजे श्रोत्रजे त्वाचे मानसे च महत्व कारणम्, तन्महत्व केन केन सम्बन्धेन कुत्र २ कारणमिति विवरीतुमाह-द्रव्यप्रत्यक्ष इत्यादि । समवायसम्बन्धेनेति-महत्त्वस्य गुणत्वात् द्रव्यत्वस्य च गुणित्वाद् गुणगुणिनो समवायाङ्गीकाराद्, यत्र द्रव्ये महत्त्व समवेत तस्यैव प्रत्यक्ष नान्यस्येत्यर्थ । स्वाश्रयेति- स्व'पदेन महत्परिमाणमद् तदाश्रयो द्रव्यम्, तत्र गुणकर्मसामान्यानि समवेतानि यत । द्रव्यसमवेतसमवेतानामिति—द्रव्ये घटादौ समवेता गुणादा. तत्र समवेता गुणत्वाद्या तेषामित्यर्थ । स्वाश्रयसमवेतेति'स्व' महत्त्व तदाश्रयो द्रव्य, तत्र समवेता गुणाद्या तेषु समवेता गुणत्वाद्या इत्यर्थ ।

इन्द्रियमिति । अत्रापि षड्विध इत्यनुषज्यते इन्द्रियत्वं तु न जातिः पृथिवीत्वादिना सांकर्यप्रसङ्गात् । शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वमिन्द्रियत्वम् । आत्मादिवारणाय सत्यन्तम् । उद्भूतविशेषगुणस्य शब्दस्य श्रोत्रे सत्त्वाच्छब्देतरेति । विशेषगुणस्य रूपादेश्चक्षुरादावपि सत्त्वादुद्भूतेति ।

परममूल इन्द्रियं कारणमिति । एतस्यार्थं योजयितुमाह मूले अत्रापीति । षड्विध प्रत्यक्षे इन्द्रिय करणमित्यर्थ । करण' बक्ष्यमनुपद वक्ष्यते । इन्द्रियाणि नाना इन्द्रियत्वश्चैको धर्म सकलेन्द्रियवृत्ति तस्मादिन्द्रिय व जातिरूपोधर्मःस्यादिति शङ्का वारयितुमाह इन्द्रियत्वमिति । न जाति किन्तु सखण्डोपाधि जाति आभावे सङ्कर बाधकमाह-पृथिवीत्वादिनेति अयमर्थ —पृथिवीत्व विहाय इन्द्रियत्व धर्मश्चक्षुरादिषु वर्त्तते । इन्द्रियत्व धर्म विहाय पृथिवीत्व धर्मोघटादिषु वर्त्तते उभयोरनयोरकत्र घ्राणेन्द्रिये समावेशरूप सङ्कर ।

तस्मान्नेन्द्रियत्वस्य जातिः। अस्य सखण्डोपाधित्वं समर्थयितुं इन्द्रियं निर्वक्ति-शब्देतरोद्भूतेति। शब्दाद् इतरे भिन्ना ये रूपादयः सुखादयश्च उद्भूताः (प्रत्यक्षयोग्याः) विशेषगुणाः तेषामनाश्रयत्वे सति अर्थात् शब्दं विहाय अन्ये यावन्तो रूपसुखाद्या अनुद्भूतविशेषगुणाः तेषां यदाश्रयः अथच ज्ञानस्य कारणीभूतो नाम साधारणकारणं यो मनःसंयोग तस्य चाश्रयः तदेवेन्द्रियत्वमिति निर्वचनार्हत्वाद् इन्द्रियत्वं सखण्डोपाधिर्नतु जातिरित्यर्थः।

लक्षणस्य पदकृत्यं दर्शयति-आत्मादीति यदि सत्यन्तं नोच्येत तदा 'ज्ञानकारणमनःसंयोगाश्रय' पदेन आत्माऽपि ग्रहीतुं शक्यत इति तत्रेन्द्रियलक्षणातिव्याप्तिः स्याद् अतः सत्यन्तो ग्रन्थ उक्तः, तादृशसंयोगाश्रयोऽप्यात्मा शब्दादन्ये ये उद्भूतविशेषगुणा ज्ञानसुखाद्याः तेषामाश्रय एव नाऽनाश्रय। यदि लक्षणे 'शब्देतरे' ... लक्षणाव्याप्तिः स्यात् नहि श्रोत्र

... अव्याप्तिवारक 'शब्देतर' ... पदेति श्रोत्रे अव्याप्तिवारक 'शब्देतर' पदं विहाय शिष्ट लक्षणमुच्येत तदा चक्षुरादिविशेषगुणस्य रूपादेराश्रय एव न नाश्रय इति तेष्वव्याप्तिः स्यात् तद्वारणाय 'उद्भूत' पदनिवेशः। चक्षुरादीन्द्रियं रूपादिविशेषगुणस्याश्रयोऽपि नोद्भूतगुणाश्रयः किन्त्वनुद्भूतरूपादिगुणाश्रय इति न तेष्वव्याप्तिगन्ध।

उद्भूतत्वं न जातिः शुक्लत्वादिना सांकर्यात्। न च शुक्लत्वादिव्याप्यं नानैवोद्भूतत्वमिति वाच्यम्, उद्भूतरूपवत्त्वादिना चाक्षुषादौ जनकतानुपपत्तेः। किंतु शुक्लत्वादिव्याप्यं नानैवानुद्भूतत्वं तदभावकूट उद्भूतत्वम्। तच्च संयोगादावप्यस्ति तथा च शब्देतरोद्भूतगुणः संयोगादिश्चक्षुरादेरप्यस्त्यतो वि-

**ज्ञेयेति** । कालादिवारणाय विशेष्यपदम् । इन्द्रियावयवविषयसंयोगस्यापि प्राचां मते प्रत्यक्षजनकत्वादिन्द्रियावयववारणाय **नवीन**मते कालादौ रूपाभावप्रत्यक्षे संनिकर्षघटकतया कारणीभूतचक्षुःसंयोगाश्रयस्य कालादेश्च वारणाय **मनः**पदम् । ज्ञानकारणमित्यपि तद्वारणाय । **करणमिति** । असाधारणं कारणं करणम् । असाधारणत्वं व्यापारवत्त्वम् ॥ ५८ ॥

विशेष' पदस्य प्रयोजनं वक्तु भूमिकां (-प्रयोजनसम्पादिकां युक्ति-) माह—उद्भूतत्वमिति । साङ्कर्यादिति—तथाच शुक्लत्वं धर्मं विहाय उद्भूतत्व—उद्भूतगन्धे वर्तते, एवमुद्भूतत्वं धर्मं विहाय शुक्लत्वं धर्मं अनुद्भूतशुक्ले वर्तते उद्भूतशुक्ले तु द्वयोरेव धर्मयोः समावेशरूपं सङ्कर तस्मादुद्भूतत्वं न जाति किन्तु उपाधिरेव ।

नानोद्भूतत्वपक्षमिदं पक्षमुत्थाप्य प्रतिक्षिपति—नचे त्यादिना । शुक्लत्वादिव्याप्यमिति । आदिना नीलत्वादिपरिग्रहः । शुक्लत्वादिनिष्ठा या व्यापकता, तन्निरूपिता या व्याप्यता 'यत्र २ उद्भूतत्वं तत्र २ शुक्लत्व' मिति व्याप्तिरेव, तदाश्रयं उद्भूतत्वमिति नानैव तद्रूपरसादिष्विति पूर्वपक्षी ।

उद्भूतरूपवत्त्वादिनेति—अयमर्थः यदि उद्भूतत्वं नाना तर्हि तस्य चाक्षुषादिप्रत्यक्षं प्रति कार्यकारणभावो न स्यात् प्रत्येकं उद्भूतरूपत्वादिव्यक्तेः कारणतास्वीकारे एकस्या व्यक्तेर्विद्यमानतायामपि उद्भूतत्वव्यक्त्यन्तरस्य अभावेन कार्यकारणभावव्यभिचार एव, सकलान्येवोद्भूतत्वादीनि एकस्यां घटपटादिव्यक्तौ वर्तन्त इत्यत्र तु नैव मानं नापि सम्भव एवमुद्भूतनानात्ववादिनये उद्भूतत्वं न कारणतावच्छेदकमिति सिद्धान्तपक्षी ।

कथं सदुद्भूतं व निरुच्यत अत आह--किन्त्विति । शुक्लत्वा दिव्याप्यनानुद्भूतवाभावसमुदाय एवोद्भूतत्वमिति बोध्यम् । स्यादेव प्रकृत क्रियायातमित्यत आह- तचेति । तादृशमुद्भूत व सयोगादाप्यस्ति सयोगादिरप्युद्भूगुणाश्चचुरादरिति तत्रवाव्याप्ति स्यात् अतस्तद्वारणाय 'विषय' पदोपादानम् ।

ननु--'शब्देतराद्भूतविशेषगुणानाश्रय यमात्र लक्षण' स्याद् ज्ञानकारणेत्यादि न वक्तव्यम अत आह कालादाविति । कालादिर्न कस्यापि विषयगुणस्याश्रय ततश्च तत्र स्यादेवातिव्याप्ति ज्ञानकारण 'त्यादिपदोपादान तु नाकदोष आदिपदेन दिग्ग्रह । 'मन पदनिवेशस्य फलमाह--इन्द्रियावयवेत्यादि । चक्षुरादीन्द्रियाणा यऽवयवा येगचा य विषया सपाय परस्पर सयोग सोऽपि प्रत्यक्षप्रति कारणमिति पूर्व तथाचोक्त तर्कभाषायाम्-चतुष्टयसन्निकर्षो यथा इन्द्रियावयवैरवयविनाम इन्द्रियावयविनामवयवानाम इन्द्रियावयवैरवयवानाम अवयविनामिन्द्रियावयविना सन्निकर्ष इति । एव इन्द्रियवयोऽपि ज्ञानकारणसयोगाश्रय शब्दतराद्भूतविषयगुणानाश्रयश्च तेन ताचा मत, तत्र ( इन्द्रियावयव ) इन्द्रियलक्षणातिव्याप्ति स्यात् तद्वारणाय मन ' पद दत्तम ।

नव्यास्तु--'काले रूप नास्ति ' इत्याकारकस्य रूपात्यन्ताभावस्य चाक्षुष प्रत्यक्ष, तादृशचाक्षुषप्रत्यक्षकारणीभूता यश्चक्षु सयोग तस्याश्रय कालादिरपि ततश्च कालादावप्यतिव्याप्तिर्नवीनमत स्याद् अतोऽपि मन पदमुपात्तम । यदि तु ज्ञानकारण मिति पदम दत्वा लक्षण क्रियत तदा सर्वस्य लक्षणस्य कालादावतिव्याप्ति सा माभूदित्यर्थं ज्ञानकारण ' तिपदम इत्यभिप्रायेणाह--ज्ञानकारणमिति । इन्द्रियस्य ऋजु लक्षणं तु--'शरीरसयुक्तत्वे सति ज्ञान-

कारणमतीन्द्रियमिन्द्रियमिति ध्येयम्। परममूले 'करण' मित्युक्तं तस्य लक्षणमाह—असाधारणमित्यादि। असाधारणत्वमेव किमत आह—असाधारणत्वमिति।

व्यापारश्च तज्जन्यत्वे सति तज्जन्यजनकः, यथा कुठारजन्यत्वे सति कुठारजन्यायाः छिदायाः जनकः कुठारदारुसंयोगः तादृशसंयोगात्मकव्यापारवत्त्वात् छिदायाः असाधारणं कारणं कुठार एव छिदाकरणमुच्यते, एतदेव 'साधकतमं करणम्' इति पाणिनिशासनम्। एवं प्रकृतेऽपि विषयेन्द्रियसन्निकर्षरूपव्यापारवत्त्वात् कारणत्वाच्च इन्द्रियं चाक्षुषादिप्रत्यक्षप्रमारूपफलं प्रति करणमिति भावः।

'फलायोगव्यवच्छिन्नं कारणं करणमिति तु प्राञ्चः, अर्थात् यत्सत्वेऽव्यवहितोत्तरक्षणेऽवश्यं कार्यं जायते तदेव करणमिति प्राचां नैयायिकानां मतम्, एवं नव्यानां यो व्यापारः प्राचां मते तत्करणं, यच्च नव्यमते करणं प्राचां मते तत्कारणमत्र बोध्यम्।

यत्र श्रोत्रेण शब्दसाक्षात्कारः तत्र नव्यनयानुसारं समवाय एव व्यापारः स्यात्, परं तत्र तज्जन्यजनकत्वलक्षणं न घटते समवायस्य नित्यत्वेन श्रोत्राजन्यत्वात्, तस्मात्सर्वत्र षड्विधप्रत्यक्षे इन्द्रियमनःसंयोगस्यैव नव्यमते व्यापारत्वं बोध्यम्। प्राचां लक्षणे तु नैव दोषः।

विषयेन्द्रियसम्बन्धो व्यापारः सोऽपि षड्विधः।
द्रव्यग्रहस्तु संयोगात्संयुक्तसमवायतः ॥ ५९ ॥
द्रव्येषु समवेतानां तथा तत्समवायतः।
तत्रापि समवेतानां शब्दस्य समवायतः ॥ ६० ॥
तद्वृत्तीनां समवेतसमवायेन तु ग्रहः।
प्रत्यक्षं समवायस्य विशेषणतया भवेत् ॥ ६१ ॥

विशेषणतया तद्वदभावानां ग्रहो भवेत् ।
यदि स्यादुपलभ्येतेत्येवं यत्र प्रसज्यते ॥ ६२ ॥

व्यापारः संनिकर्षः। षड्विधं संनिकर्षमुदाहरणद्वारा दर्शयति।
द्रव्यग्रह इति । द्रव्यप्रत्यक्षमिन्द्रियसंयोगजन्यम् । द्रव्यसमवेतप्रत्यक्षमिन्द्रियसंयुक्तसमवायजन्यम् । एवमग्रेऽपि । वस्तुतस्तु द्रव्यचाक्षुषं प्रति चक्षुःसंयोगः कारणं द्रव्यसमवेतचाक्षुषं प्रति चक्षुःसंयुक्तसमवायः कारणं द्रव्यसमवेतसमवेतचाक्षुषं प्रति चक्षुःसंयुक्तसमवेतसमवायः । एवमन्यत्रापि विशिष्यैव कार्यकारणभावः । परन्तु पृथिवीपरमाणुनीले नीलत्वं पृथिवीत्वं च चक्षुषा कथं न गृह्यते तत्र परंपरयोद्भूतरूपसम्बन्धस्य महत्त्वसम्बन्धस्य च सत्त्वात् । तथाहि—नीलत्वं जातिरेकैव घटनीले परमाणुनीले च वर्तते । तथाच महत्त्वसंबन्धो घटनीलमादाय वर्तते । उद्भूतरूपसंबन्धस्तूभयमादायैव, एवं पृथिवीपरमाणौ पृथिवीत्वेऽपि घटादिकमादाय महत्त्वसंबन्धो बोध्यः । एवं वायौ तदीयस्पर्शादौ च सत्तायाश्चाक्षुषप्रत्यक्षं स्यात् । तस्मादुद्भूतरूपावच्छिन्नमहत्त्वावच्छिन्नचक्षुःसंयुक्तसमवायस्य द्रव्यसमवेतचाक्षुषप्रत्यक्षे तादृशचक्षुःसंयुक्तसमवेतसमवायस्य द्रव्यसमवेतसमवेतचाक्षुषे कारणत्वं वाच्यम् ।

करणजन्यस्य व्यापारघटितत्वसङ्गमनाय करणमुक्त्वा तद्व्यापारमाह परममूले--विषयेन्द्रियसम्बन्ध इति । एतदेव व्याख्यातुमाह मूले व्यापार इति ।

द्रव्यप्रत्यक्षमिति—घटादिद्रव्यवृत्तिलौकिकविषयतासम्बन्धेन प्रत्यक्षं चक्षुरादीन्द्रियसंयोगजन्यम् अर्थात् इन्द्रियसंयोगस्तत्र व्यापारः। द्रव्यसमवेतेति—द्रव्यसमवेतानां रूपादीनां संयुक्तसमवायेन प्रत्यक्षम् द्रव्यसमवेतवृत्तिलौकिकविषयतासम्बन्धेन रूपादिप्रत्यक्षे संयुक्तसमवायो व्यापार इत्यर्थः ।

एवमग्रेऽपीति—द्रव्यसमवेतसमवेतवृत्तिलौकिकविषयतासम्बन्धेन रूपत्वादीनां प्रत्यक्षं इन्द्रियसंयुक्तसमवेतसमवायजन्यमित्यर्थः इन्द्रियसंयुक्तो घटादिः तत्र समवेतं रूपादिकं, तेषु रूपत्वादीनां समवायात् ।

ननु—द्रव्यप्रत्यक्षे इन्द्रियसन्निकर्षस्य कारणत्वचेत् ? तदा त्वक्प्रभासंयोगादपि प्रभायाश्चाक्षुषं स्यात् एवमन्धकारेऽपि घटचक्षुः संयोगात्स्पार्शनापत्तिश्च, प्रत्यक्षहेतोर्द्रव्येन्द्रियसंयोगस्य विद्यमानत्वात् इत्यस्वरसात् सामान्यतः कार्यकारणभावं विहाय विशिष्य कार्यकारणभावं वक्तुमाह—वस्तुतस्त्विति । द्रव्यचाक्षुषप्रतीति-घटपटादिद्रव्यविषयलौकिकसाक्षात्कारप्रतीत्यर्थः । द्रव्यसमवेतेति—घटादिद्रव्ये समवायसम्बन्धेन वर्तमानस्य रूपादेरुक्तसाक्षात्कारम्प्रति, चक्षुःसंयुक्तसमवायः=चक्षुःसंयुक्तो घटादिः रूपादेस्तत्र समवाय इत्यर्थः । द्रव्यसमवेतसमवेतेति—घटादिद्रव्यसमवेत रूपादिकं; तत्र समवेत रूपत्वादिकं तस्य चाक्षुषप्रत्यक्षम्प्रति चक्षुःसंयुक्तसमवेतसमवायः सन्निकर्षः कारणमित्यर्थः । एवमेव त्वाचादिप्रत्यक्षम्प्रत्यपि उक्तसन्निकर्षस्य विशिष्य कार्यकारणभावो बोध्यः ।

यद्भूते परन्त्विति—अयमाशयः परमाणुनीलनिष्ठा या नील त्वजातिः तथा पृथिवीपरमाणुनिष्ठा या पृथिवीत्वजातिः तस्या अपि चाक्षुषं साक्षात्कारः स्यात् ? कुत इति चेत् ? उद्भूतरूपं महत्त्वञ्च चाक्षुषप्रत्यक्षम्प्रति हेतुरित्यस्ति नियमः, तत्र यथा रूपत्वादिजाति

साक्षात्कारे चक्षुःसंयुक्तसमवेतसमवायः परम्परासम्बन्धः कल्पितः तथात्रापि उद्भूतरूपस्य महत्त्वस्य च स्वाश्रयसमवेतसमवेतत्वादि-परम्परासम्बन्धेन परमाणुनीलनिष्ठनीलत्वम्प्रति पृथिवीपरमाणु-वृत्तिपृथिवीत्वम्प्रत्यपि च कारणभाव उन्नेतुं शक्यते, स्व' पदेन उद्भूतरूपस्य महत्परिमाणस्य च ग्रह तस्याश्रय त्रसरेणु सच द्व्यणुके समवेत इति स्वाश्रयसमवेतं द्व्यणुकं तच्च परमाणौ समवेतमिति 'स्वाश्रयसमवेतसमवेता' ख्यपरम्परासम्बन्धेन महत्त्वोद्भूतरूपे परमाणुषु वर्त्तेते इति भवेत्परमाणुग्रहे तद्वृत्तिनीलादिपरिग्रहः।

इदमेव आचेता स्वय विवृणोति तथाहीत्यादिना। नीलत्वं जातिरेकैवेत्यादि—ग्रन्थस्तु-उपरिदर्शितव्याख्यानेनैव गतार्थः किन्तु 'उभय' मित्यस्य घटनील परमाणुनीलञ्चोभयमित्यर्थः।

एतद्दोषपरिजिहीर्षया उत्तरपक्षत्वेनाह—तस्मादिति। उद्भूतरूपावच्छिन्नेति-उद्भूतरूपावच्छिन्नमहत्त्वावच्छिन्न यश्चक्षु सयुक्तसमवायः रूपादिगुणसाक्षात्कारे हेतु, उद्भूतरूपावच्छिन्नमहत्त्वावच्छिन्नचक्षु सयुक्तसमवेतसमवायश्च रूपत्वादिजातिसाक्षात्कारे हेतुर्वक्तव्य.।

इत्थं च परमाणुनीलादौ न नीलत्वादिग्रहः। परमाणौ चक्षुःसंयोगस्य महत्त्वावच्छिन्नत्वाभावात्। एवं वाय्वादौ न सत्तादिचाक्षुषं तत्र चक्षुःसंयोगस्य रूपावच्छिन्नत्वाभावात्। एवं यत्र घटस्य मध्यावच्छेदेनालोकसंयोगः चक्षुःसंयोगस्तु बाह्यावच्छेदेन तत्र घटप्रत्यक्षाभावादालोकसंयोगावच्छिन्नत्वं चक्षुःसंयोगे विशेषणं देयम्। एवं द्रव्यस्पार्शनप्रत्यक्षे त्वक्संयोगः कारणं द्रव्यसमवेतस्पार्शनप्रत्यक्षे त्वक्संयुक्तसमवायः द्रव्यसमवेतसमवेतस्पार्शनप्रत्यक्षे त्वक्संयुक्तसमवेतसमवायः का-

रणम् ।' अत्रापि महत्त्वावच्छिन्नत्वमुद्भूतस्पर्शावच्छिन्नत्वं च
पूर्ववदेव बोध्यम् । एवं गन्धप्रत्यक्षे घ्राणसंयुक्तसमवायः ।
गन्धसमवेतस्य घ्राणजन्यप्रत्यक्षे घ्राणसंयुक्तसमवेतसमवाय
कारणम् ।

उक्तसम्बन्धस्वरूपविवक्षाया फलमाह—इत्थञ्चेति । मह
त्त्वावच्छिन्नत्वाभावादिति—स्वाश्रयसमवेतसमवेतत्वपरम्परास
म्बन्धे विद्यमानेऽपि स सम्बन्ध उद्भूतरूपावच्छिन्नमहत्त्वावच्छिन्नो
नास्ति, अर्थात् उक्तसम्बन्ध उद्भूतरूप महत्त्वञ्च विशेषणे न वर्तते
तद्विशिष्ट एव चोक्तसम्बन्ध तथासाक्षात्कारहेतुर्न तु केवल । एतत्स्वय
स्पष्टीकृत ग्रन्थकर्त्रा परमाणौ चक्षुःसंयोगस्येत्यादिना ।
स्थलान्तरे महत्त्वोद्भूतरूपयोर्व्याप्तिं वारयितु प्रत्यक्षस्य या पुष्कला
सामग्री वक्तुमग्रिम ग्रन्थ रचयति—एवमत्रेत्यादि । अस्याय स्प
ष्टोऽर्थः यदा घटस्य मध्यभागे दीप स्थाप्यते घटचक्षुःसंयोगस्तु घट
स्य बाह्यदेशे भवेत् तदा महत्त्वोद्भूतरूपयो सत्तायामपि घटस्य प्रत्यक्ष
न भवति तत्रानयोरन्वयव्यभिचार, अस्य वारणाय चक्षुःसंयोग
आलोकावच्छिन्नत्वविशेषणादानेन भवति—तथा च आलोकसंयोगाव
च्छिन्नोद्भूतरूपावच्छिन्नमहत्त्वावच्छिन्नचक्षुःसंयोग घटादिद्रव्य
प्रत्यक्षप्रति हेतु ।

प्रकृते महत्त्वोद्भूतरूपयो चक्षुःसंयोगविशेषणयो सत्तायामपि
आलोकसंयोगरूपविशेषणाभावाद्बाह्यघटस्य न प्रत्यक्षम् । एवमेवान्य
सम्बन्धा रूपादिसाक्षात्कारप्रत्यक्षेषु बोध्य ।

सर्वसारस्तु—चक्षुरादीन्द्रियं करणं चक्षुरादीन्द्रियसन्निकर्ष
( संयोगादि ) व्यापार महत्त्वं उद्भूतरूपं, आलोकसंयोगश्चेतित्रय
सहकारिकारणं, सर्वमिदं प्रत्यक्षस्य पुष्कला सामग्री यत्रैकमपि न

स्यात् तस्य प्रत्यक्ष न भवति । तथाच पारमर्षं सूत्रम्—महत्त्वानेक-
द्रव्यवत्त्वाद्रूपाच्चोपलब्धिः' वै० ४ । १ । ७ । उक्तश्चाक्षुषसन्निकर्षं
सम्प्रति स्पार्शनादिप्रत्यक्षेऽपि त दर्शयति—एवमित्यादिना । स्पष्टम् ॥

एवं रसप्रत्यक्षे रसनासंयुक्तसमवायः । रससमवेतरा-
सनप्रत्यक्षे रसनासंयुक्तसमवेतसमवायः कारणम् । शब्दप्रत्यक्षे
श्रोत्रावच्छिन्नसमवायः कारणम् । शब्दसमवेतश्रावणप्रत्यक्षे श्रो-
त्रावच्छिन्नसमवेतसमवायः कारणम् । अत्र सर्वं प्रत्यक्षं लौ-
किकं बोध्यम् । वक्ष्यमाणमलौकिकं प्रत्यक्षमिन्द्रियसंयोगादिकं
विनापि भवति । एवमात्मनः प्रत्यक्षे मनःसंयोगः, आत्मसम-
वेतमानसप्रत्यक्षे मनःसंयुक्तसमवायः, आत्मसमवेतसमवेतमान-
सप्रत्यक्षे मनःसंयुक्तसमवेतसमवायः कारणम् ।

एवमिति—रासनप्रत्यक्ष न संयोगजन्य किन्तु संयुक्तसम-
वायादिजन्यमिति संयोग सन्निकर्षं विहायान्यानुक्तम्, अत्र हेतुस्तु
चक्षुस्त्वग्घ्राणरसनानि श्रोत्रेन्द्रियाणि द्रव्यग्राहकाणि । शब्दप्रत्यक्ष-
इति—श्रोत्रस्य आकाशरूपत्वात् शब्दस्य गुणत्वाच्च श्रोत्रावच्छिन्न-
समवाय । शब्दसमवेतेति शब्दत्व शब्दसमवेता जातिः तत्प्रत्यक्षे ।

इदन्तु बोध्यम्—द्विविध तावत् प्रत्यक्ष लौकिकमलौकिकञ्चेति
तत्र अलौकिक वक्ष्यति, लौकिक प्रदर्शयितुमाह—अत्रसर्वमिति ।
आत्मसमवेतेति आत्मसमवेता ज्ञानाद्याः । आत्मसमवेतसमवेता
ज्ञानत्वाद्या. । शिष्ट स्पष्टम् ।

अभावप्रत्यक्षे समवायप्रत्यक्षे चेन्द्रियसंबद्धविशेषणता हेतुः ।
वैशेषिकमते तु समवायो न प्रत्यक्षः । अत्र यद्यपि विशेषणता
नानाविधा । यथाहि भूतलादौ घटाद्यभावः संयुक्तविशेषणतया

गृह्यते। **संख्यादौ** रूपाद्यभावः संयुक्तसमवेतविशेषणतया। संख्यात्वादौ रूपाद्यभावः संयुक्तसमवेतसमवेतविशेषणतया। शब्दाभावः केवलश्रोत्रावच्छिन्नविशेषणतया। कादौ खत्वाद्यभावः श्रोत्रावच्छिन्नसमवेतविशेषणतया। एवं कत्वाद्यवच्छिन्नाभावे गत्वाभावादिकं श्रोत्रावच्छिन्नविशेषणविशेषणतया। एवं घटाभावादौ पटाभावः चक्षुःसंयुक्तसंयुक्तविशेषणतया। एवमन्यदप्यूह्यम्। **तथापि** विशेषणतात्वरूपेणैकैव सा गण्यते। **अन्यथा** षोढा संनिकर्ष इति भाषा प्रवादो व्याहन्येतेति।

इन्द्रियसम्बद्धेति—चक्षुरादीन्द्रियसम्बद्धो भूतलादि (अभावाधिकरणम्) तत्र घटाद्यभावो विशेषणीभूतः यथा 'घटाभाववद्भूतलम्' इत्याकारायां प्रतीतौ भासते एवमिन्द्रियसम्बद्धा रूपादिरपि समवेत तत्र समवायो विशेषणीभूतः यथा 'रूपी (रूपसमवायवान्) घटः' इति। अयमेव विशेषणविशेष्यभावः सन्निकर्ष' इत्युच्यते, यस्यार्थः—इन्द्रियसम्बद्धविशेष्यत्वं इन्द्रियसम्बद्धविशेषणत्वमिति यावत्। यदा घटाभाववद् भूतलम्' इति प्रत्ययः तदा इन्द्रियसम्बद्धविशेषणत्वं सन्निकर्षः, इन्द्रियसम्बद्धं भूतलं तत्र घटाभावस्य विशेषणत्वात्। यदा 'इह भूतले घटो नास्ति' इति प्रत्ययः तदा अभावप्रत्यक्षे इन्द्रियसम्बद्धविशेष्यता सन्निकर्षः इन्द्रियसम्बद्धोऽभावः तत्र भूतलस्य विशेषणत्वात् सप्तम्यन्तं विशेषणमिति नियमात्।

एवं समवायप्रत्यक्षमपि बोध्यम्। परन्तु गौतममते समवायप्रत्यक्षो ननु वैशेषिकमते इत्यत आह—वैशेषिकमते इति। यदि समवायः प्रत्यक्षः स्यात्तर्हि रूपादिसमवायवतां परमाण्वादीनामपि प्रत्यक्षतापत्तिः वा समवायस्यैकतया एकदा आविर्भूतसकलसमवायाप्रत्यक्षता प्रत्यक्षः स्यात् सम्यक् च प्रत्यक्षे यावदाश्रयप्रत्यक्षस्य हेतुत्वं यत इति काणादानामभिप्रायः।

गौतमास्तु—सम्बन्धप्रत्यक्षत्वं न कार्यतावच्छेदकम्, अर्थात् यावदाश्रयप्रत्यक्षं न तस्य कारणं सम्बन्धस्य निर्वक्तुमशक्यत्वात्, किन्तु संयोगप्रत्यक्षत्वमेव कार्यतावच्छेदकोधर्मः समवायस्तु न संयोगः तस्मादसौ न प्रत्यक्षः धर्मिणोः प्रत्यक्षं संयोगाख्यसम्बन्धविशेषप्रत्यक्षप्रत्येव कारणं तत्सम्बन्धसामान्यप्रत्यक्षताप्रयोजकमित्याहुः।

ननु विशेषणतासन्निकर्षस्तु नानाविध इति कथं षड्विध सन्निकर्ष इत्युक्तमिति शङ्कासमाधानाय 'अत्र हि' इत्यारभ्य 'एकैव सा गण्यत' इत्यन्तो ग्रन्थोनिगदव्याख्यात.। विशेषणतात्वेनेति—तथाच विशेषणतात्वमेक रूपमदाय षड्विधत्वकथन नासङ्गतमिति भाव.। नन्वेवं संयुक्तसमवायादीनामप्यनुगमः कुतो न कृत इतिचेत् न, स्वतन्त्रेच्छुर्मुनिर्नियोगपर्यनुयोगानर्हो यतः।

यदि स्यादुपलभ्येतेति। अत्राभावप्रत्यक्षे योग्यानुपलब्धिः कारणम्। तथाहि। भूतलादौ घटादिज्ञाने जाते घटाभावादिकं न ज्ञायते। तेनाभावोपलम्भे प्रतियोग्युपलम्भाभावः कारणम्। तत्र योग्यताप्यपेक्षिता सा च प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वरूपा। तदर्थश्च प्रतियोगिनो घटादेः सत्त्वप्रसक्त्या प्रसञ्जित उपलम्भरूपः प्रतियोगी यस्य सोऽभावप्रत्यक्षे हेतुः। तथाहि। यत्रालोकसंयोगादिकं वर्तते तत्र यद्यत्र घटः स्यात्तर्हि उपलभ्येतेत्यापादयितुं शक्यते। तेन घटाभावादेरन्धकारे न चाक्षुषप्रत्यक्षम्, स्पार्शनप्रत्यक्षं तु भवत्येव, आलोकसंयोगं विनापि स्पार्शनप्रत्यक्षस्यापादयितुं शक्यत्वात्। गुरुत्वादिकं यदयोग्यं तदभावस्तु न प्रत्यक्षस्तत्र गुरुत्वादिप्रत्यक्षस्यापादयितुमशक्यत्वात्। वायौ रूपाभावः।

पाषाणे सौरभाभावः । गुडे तिक्ताभावः । श्रोत्रे शब्दाभावः । आत्मनि सुखाभावः । एवमादयस्तत्तदिन्द्रियैर्गृह्यन्ते तत्तत्प्रत्यक्षस्यापादयितुं शक्यत्वात् । संसर्गाभावप्रत्यक्षे प्रतियोगिनो योग्यता । अन्योन्याभावप्रत्यक्षे त्वधिकरणयोग्यताऽपेक्षिता । अतः स्तम्भादौ पिशाचादिभेदोऽपि चक्षुषा गृह्यत एव ॥५९॥ ६० ॥ ६१ ॥ ६२ ॥

अभावप्रत्यक्षे सहकारिकारणं वक्तुमाह परममूले 'यदि स्यादि' ति । एतद्विवृणोति मुक्तावल्यां—अत्राभावप्रत्यक्ष इति । योग्यानुपलब्धि =योग्यस्य प्रत्यक्षयोग्यस्य घटादेः अनुपलब्धिः उपलम्भाभावः प्रतीत्यभावः कारणमित्यर्थः । उपलम्भः उपलब्धिः प्रतीतिर्ज्ञानमित्यनर्थान्तरम् । अनुपलम्भः अनुपलब्धिः प्रतीत्यभाव इति चानर्थान्तरम् । अयमाशयः—'यद्यत्र घटादि स्यात् तर्हि तस्योपलम्भोऽपि स्यात्' इत्याकारा यत्र यदा प्रसक्तिः तत्रैव उक्तविशेषणतासन्निकर्षेण अभावस्य प्रत्यक्षं नान्यत्र नान्यदेति च । तदेतत्स्पष्टीकरोति—भूतलादाविति । अक्षरार्थस्तु—भूतलादौ अभावाधिकरणे इत्यर्थः । घटादिज्ञाने 'अयं घटः' इत्याकारके साक्षात्कारे । जाते सति । घटाभावादिकं स्वप्रतियोग्यभाव इत्यर्थः न ज्ञायते न विषयीक्रियते प्रत्यक्षेण ( इन्द्रियेण ) इत्येव ।

तेन प्रतियोगिसत्त्वदशायां अभावज्ञानाभावेन । अभावोपलम्भे अभावप्रत्यक्षे । प्रतियोग्युपलम्भाभावः प्रतियोगिनो घटादेः प्रतीत्यभावः कारणं हेतुः ( न तु करणमित्यर्थः ) । परन्तु तत्र प्रतियोग्युपलम्भावे योग्यता वक्ष्यमाणा अप्यपेक्षिता अवश्यमिति । अन्यथा प्रत्यक्षायोग्येष्वपि जलपरमाण्वादौ पृथिवीत्वाभावादेः प्रत्यक्षं स्यादिति भावः ।

ननु–कीदृशी सा योग्यतेति जिज्ञासायां न्यायचिन्तामणिकार· ( गङ्गेशोपाध्याय ) मतेन तां निर्वक्ति—साचेति । निरुक्तग्रन्थस्यार्थं स्वयमेव दर्शयति—तदर्थश्चेति । तात्पर्यार्थस्तु यस्मिन्नधिकरणे प्रतियोग्युपलम्भ आपादयितुं शक्यते तत्रैव तत्प्रतियोगिकाभावप्रत्यक्षं जायते नान्यत्र । यथा—भूतलाद्यधिकरणे 'यदि भूतले घट स्यात् तर्हि चक्षुषा ( भूतलवद् ) उपलभ्येत' इति रीत्या घटात्मकस्य प्रतियोगिन उपलम्भः ( प्रतीति· ) आपादयितु ( आरोपयितुं ) शक्यते तस्मादत्र भूतलादौ· घटप्रतियोगिकाभावप्रत्यक्ष भवितुमर्हति। यत्र [illegible] नैव तत्र नाभाव प्रत्यक्ष यथा—' जलीयपरमाणुषु यदि पृथिवीत्वं स्यात् तर्ह्युपलभ्येत' अनया रीत्या पृथिवीत्वारोपेण जलीयपरमाणुषु पृथिवीत्वोपलम्भस्याप्यारोपः कर्तुं न शक्यते पृथिवीत्वाभावस्य प्रत्यक्षयोग्यत्वेऽपि जलीयपरमाणुषु प्रत्यक्षयोग्यताया अभावात् ।

अय भावः—आश्रयप्रत्यक्षमेव जातिप्रत्यक्षप्रयोजकमित्यस्ति नियम तेन जलपरमाणुषु यथा जलस्य न प्रत्यक्ष, तथैव तत्र आरोपितपृथिवी·ोपलम्भारोपोऽपि न शक्य सम्भव ।

एतदेव दर्शयति—तथाहीत्यादिना । यत्र भूतलादौ ( अभावाधिकरणे ) । सुगममन्यत् स्पार्शनप्रत्यक्षन्त्विति—त्वाचं प्रत्यक्षमित्यर्थ आलोकसयोगं विनापि त्वाचप्रत्यक्षस्य सत्त्वात् "यद्यत्र घटः स्यात्तर्हि त्वचा उपलभ्येत" इत्यापादयितु शक्यत एव, अर्थाद् घन्धकारे घटाभावस्य स्पार्शन प्रत्यक्षं ननु चाक्षुषमित्युक्तनियमात् । गुरुत्वादिकमिति—आदिपदेन धर्माधर्मादिपरिग्रहः । गुरुत्वादिप्रत्यक्षस्येति–'यदि घटे गुरुत्वं स्यात् तर्ह्युपलभ्येत' इत्याकारमा-

---

* घटः प्रतियोगी यस्य तादृशो योऽभाव, तस्य प्रत्य क्षमित्यर्थ ।

पापादन नार्हति मरितु, गुरुत्वस्य सर्वथा प्रत्यक्षायोग्यत्वात् किन्तु तुलयानुमीयते तत्, एवं धर्मोऽपि न प्रत्यक्षयोग्यतावान्, नहि " यदि मयि धर्मः स्यात् तर्ह्युपलभ्येत " इति भवत्यापादनम्, किन्तु सुखादिलिङ्गेनानुमेयः वस्तुतस्तु चोदनालक्षणः । एतेन अधर्मोऽपि व्याख्यात ।

यत्र तूक्तमापादन सुवचं तत्राभाव. प्रत्यक्ष इत्युक्तमेव, यथा वायाविव्याद्युदाहरति । "वायौ यदि रूपं स्यात्तर्हि चक्षुषोपलभ्येत", इत्यापादयितुं शक्यते, तत्र कारणं तु महत्त्वविशिष्टोद्भूतरूप चाक्षुषप्रत्यक्षहेतुरित्यवोचाम, प्रकृते वायौ महत्त्वस्य * सत्वेऽपि उद्भूतरूप नास्ति तेन वायावुद्भूतरूपाभावस्य चाक्षुष प्रत्यक्षम् ।

एवमेव यथाक्रम 'पाषाणे यदि सौरभं स्यात् तर्हि घ्राणेनोपलभ्येत' यदि गुडे तिक्तरसः स्यात्तर्हि रसनयोपलभ्येत, यद्यग्नावनुष्णः स्पर्शः स्यात्तर्हि त्वचोपलभ्येत, यदि श्रोत्रे शब्दः स्यात् तर्हि तेनैवोपलभ्येत, यद्यात्मनि सुखं स्यात् तर्हि मनसोपलभ्येत, इत्याद्यापादन कर्त्तुं शक्यते, अतस्तत्र तत्तदभावस्य प्रत्यक्षादिप्रत्यक्ष भवत्येव इत्यत आह—एवमादश इति । आदिना प्रभायामुद्भूतस्पर्शाभावपरिग्रह तत्र प्रभायामुद्भूतस्पर्शः स्यात् तर्हि त्वचोपलभ्येत इत्यापादयितुं सुवचत्वादिति भाव ।

सम्प्रति संसर्गाभाव प्रत्यक्षे अन्योन्याभावप्रत्यक्षे च यो भेदः-भेदं दर्शयति—संसर्गाभावप्रत्यक्ष इति । त्रिविध संसर्गाभाव. प्रागभावादिभेदेन पूर्वमुक्त तस्य प्रत्यक्षे प्रतियोगिनो घटादे योग्यता प्रत्यक्षयोग्यता अवश्यमपेक्ष्यते, अर्थात् येन केनापीन्द्रियेण य.

---

* अत एव वायो स्पार्शन प्रत्यक्षमित्येकीय मतेन पूर्वमुक्तम् ।

प्रतियोगी प्रत्यक्षयोग्य तस्यैव प्रागभावस्य ध्वंसाभावस्य अत्यन्ताभावस्य वा प्रत्यक्ष स्यात्, यस्तु प्रतियोगी सर्वथा इन्द्रियागोचर तदीयसंसर्गाभावस्य कदापि न प्रत्यक्षम् । अन्योन्याभावप्रत्यक्षे त्विति—संसर्गाभावभिन्नाभावप्रत्यक्षे तु अधिकरणयोग्यता अभावाधिकरणस्यैव प्रत्यक्षयोग्यता अपेक्षिता आवश्यकी अर्थात् यद्यधिकरणं प्रत्यक्षयोग्य स्यात् प्रतियोगी प्रत्यक्षयोग्यो भवेद् न वा भवेत् तदा अन्योन्याभावस्य प्रत्यक्षम्भवत्येव । एतस्य फलमाह—अत इति—स्तम्भः पिशाचो न' इति प्रतीत्या स्तम्भरूपाधिकरणप्रत्यक्षायोग्यत्वेऽपि पिशाचस्य भेदः चक्षुषा प्रत्यक्ष स्तम्भस्य (चाक्षुष) प्रत्यक्षयोग्यत्वादितिभावः ।

एवं प्रत्यक्ष लौकिकालौकिकभेदेन द्विविधम् । तत्र लौकिकप्रत्यक्षे षोढा संनिकर्षो वर्णितः । अलौकिकसंनिकर्षस्त्विदानीमुच्यते—

अलौकिकस्तु व्यापारस्त्रिविधः परिकीर्तितः ।
सामान्यलक्षणो ज्ञानलक्षणो योगजस्तथा ॥ ६३ ॥

सामान्यलक्षण इति सामान्यं व्यापारः संनिकर्षः । सामान्यलक्षण इति सामान्यं लक्षणं यस्येत्यर्थः । तत्र लक्षणपदेन यदि स्वरूपमुच्यते तदा सामान्यस्वरूपा प्रत्यासत्तिरित्यर्थो लभ्यते । तच्चेन्द्रियसंबद्धविशेष्यकज्ञाने प्रकारीभूतं बोध्यम् । तथाहि ।

अलौकिकसन्निकर्षनिरूपणाय पातनिकामाह एवमिति । कारिकां निर्वक्तुमाह—व्यापार इति । धूमत्वादिलक्षणाया, इन्द्रियजन्यत्वाभावात् (व्यापारस्य च तज्जन्यत्वे सति तज्जन्यजनकत्वरूपत्वात्) व्यापारत्वकथनमयुक्तमित्यतः 'व्यापार' पदं व्याख्याति संनिकर्ष इति ।

सामान्यमिति—समानानां भावोऽनागन्तुको नित्यो धर्मः सामान्यम्, पूर्वोक्तं द्रव्यगुणकर्मेतत्त्रितयवृत्ति, उक्तञ्च वात्स्यायनेन' या समानां बुद्धिं प्रसूते भिन्नेष्वधिकरणेषु, यया बहूनीतरेतरतो न व्यावर्त्तन्ते, योऽर्थोऽनेकत्र प्रत्ययानुवृत्तिनिमित्तं तत्सामान्यम्। न्या० भा० २।२।७१। यथा घटत्वादि जातिः। 'लक्षण' शब्दस्य 'स्वरूप' मित्यर्थः, लक्ष्यते व्यवच्छिद्यत इति लक्षणं स्वरूपमेव, असाधारणधर्मेण धर्म्यन्तरेभ्यो व्यावर्त्यते यतः। एवं सामान्य लक्षणं स्वरूपं यस्येति बहुव्रीहिसमासाश्रयणे 'सामान्यस्वरूपा प्रत्यासत्ति' रिति-प्रथमालौकिकसन्निकर्षस्यार्थः पर्यवसितो भवति। प्रत्यासत्तिश्च सम्बन्धः। तच्चेति—सामान्यञ्चेत्यर्थः।

इन्द्रियसम्बद्धेति-इन्द्रियसम्बद्धं विशेष्यं यस्य तदिन्द्रियसम्बद्धविशेष्यकं यज्ज्ञानं तत्सामान्यस्वरूपं प्रत्यासत्तिः तादृश घटे घटत्व धूमे धूमत्वमित्यादि बोध्यम्। एतदुक्तं भवति—यत्र घटादौ चक्षुः सन्निकर्षानन्तरम् 'अयं घटः' 'अयं धूमः' इत्याकारकं प्रत्यक्षं जातं तस्य कारणं घटादिना सह चक्षुषः संयोग सन्निकर्षः, स च लौकिकः (प्राकृतः) घटघटत्वे धूमधूमत्वे चोभे विषयीकरोति, तत्र घटं धूमञ्च विशेष्यविधया, घटत्वं धूमत्वञ्च प्रकारविधया विषयीकरोतीत्येतावान्विशेषः। एतदेव स्वयं दर्शयति तथाहीत्यादिना।

यत्रेन्द्रियसंयुक्तो धूमादिस्तद्विशेष्यकं धूम इति ज्ञानं यत्र जातं तत्र ज्ञाने धूमत्वं प्रकारः। तत्र धूमत्वेन संनिकर्षेण धूमा इत्येवंरूपं सकलधूमविषयकं ज्ञानं जायते। अत्र यदीन्द्रियसंबद्धमित्येवोच्येत तदा धूलीपटले धूमत्वभ्रमानन्तरं सकलधूम-

विषयकं ज्ञानं न स्यात् तत्र धूमत्वेन सहेन्द्रियसंबन्धाभावात् । मन्मते तु इन्द्रियसंबद्धं धूलीपटलं तद्विशेष्यकं धूम इति ज्ञानम्, तत्र प्रकारीभूतं धूमत्वं प्रत्यासत्तिः । इन्द्रियसंबन्धश्च लौकिको ग्राह्यः । इदं च बहिरिन्द्रियस्थले । मानसस्थले तु ज्ञानप्रकारीभूतं सामान्यमात्रं प्रत्यासत्तिः ॥ ६३ ॥

यत्रेति—यस्मिन् ज्ञान इत्यर्थः । इन्द्रियसंयुक्तः इन्द्रियसम्बद्धः । धूमादिः आदिना घटादिः । तद्विशेष्यकमिति—सः धूमादिर्विशेष्यो यस्य ज्ञानस्य तत् तद्विशेष्यकम् । धूमत्वं प्रकार इति धूमत्वमेव अलौकिकः सन्निकर्षः येन सकलधूमानां=अतीतानागतानां दूरविप्रकृष्टानामिन्द्रियासम्बद्धानामपि धूमत्वाश्रयाणां ज्ञानं जायते, धूमत्वस्य सकलधूमव्यक्तिष्वनुगतत्वात्, अर्थात् एकस्मिन् धूमे इन्द्रियसम्प्रयुक्ते सति यत् 'धूमाः' इतिसकलधूमव्यक्तीनां भानं तत्र 'स्वजन्यज्ञानप्रकारीभूतधूमत्ववत्ता' अलौकिकः सन्निकर्षो हेतुः । प्रथमक्षणे पुरोवर्तिधूमस्य लौकिकं ज्ञानं ततो द्वितीयक्षणे उक्तसम्बन्धेन सकलधूमभाने चाक्षुषमेव, अत्र 'स्व' पदेन चक्षुरादीन्द्रियग्रहणं तज्जन्य ज्ञानं 'अयं घटः' इत्याकारक लौकिकसन्निकर्षजन्य तत्र प्रकारीभूत दर्शितरीत्या धूमत्वमेव, तद्वत्ता धूमत्वधर्मसम्बन्धः सकलधूमेषु विद्यत एवेति उक्तालौकिकसम्बन्धो निर्वाहितः ।

ननु—इन्द्रियसम्बद्धेत्यादि गुरुभूतं लक्षणं विहाय 'प्रकारत्वेनेन्द्रियसम्बद्ध' मित्येव प्रत्यासत्ति लौकिकयत्नाम धूमचक्षुसंयोगानन्तरं भवति हि प्रकारत्वेन धूमत्वमिन्द्रियसम्बद्धमिति, अत आह-यदीति । यदा पुरोवर्तिनि धूलिपटले 'अयं धूम' इत्याकारकं भ्रमात्मकं ज्ञानं जातं, सकलधूमविषयकमिति-'धूमाः' इत्याकारकमित्यर्थः, न स्यात्,

अत्र हेतुमाह धूमत्वेनेति । वस्तुत इन्द्रियसम्बन्धो धूलीपटलेनैव । ममं मतंतु नायं दोषः, किन्तु तथापि सकलधूमविषयकज्ञानं भवितुमर्हत्येवेति दर्शयति मन्मते त्विति, इन्द्रियसम्बद्धविशेष्यकज्ञान प्रकारीभूतसामान्य प्रत्यासत्तिरिति मते । धूलीपटलेऽपि इन्द्रियसम्बद्धविशेष्यक धूलिपटलविशेष्यकधूमत्वप्रकारकत्वसत्त्वादित्यर्थः, सुबोधमन्यत् । इदञ्चेति—इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतसामान्यस्य, प्रत्यासत्तित्वकथनम् ।

' पुरोवर्तिपदार्थे इन्द्रियसम्बन्धो लौकिको माह्य इत्याह इन्द्रियसम्बन्धश्चेति परन्तु इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूत सामान्यं प्रत्यासत्तिरित्याकारो य सम्बन्धो दर्शितः तस्योपयोग बहिरिन्द्रियस्थल एव, मानसालौकिकप्रत्यक्षविषये तु ज्ञानप्रकारीभूत सामान्यमात्र प्रत्यासत्तिरिति विभाग करोति मानसस्थले त्विति । अस्य विभागस्य फलमाह—अत इति । यत्र प्रत्यक्षायोग्यस्यापि पिशाचादेः 'अत्र घटे पिशाच' इति शाब्द ज्ञानं जात, तत उत्तरस्मिन् क्षणे 'सर्वे पिशाचाः पिशाचत्ववन्तः' इत्याकारको मानसो बोध सकलपिशाचविषयक', तत्रेन्द्रियसम्बन्धाभावात् नोक्तविभाग विना निर्वाह इत्यर्थः ।

विभागकरण तु ज्ञान' पदेन शाब्दज्ञानमपि धर्तुं शक्यते तत्र प्रकारीभूत पिशाचत्व, तदेव 'मनोजन्यज्ञानप्रकारीभूतपिशाचत्ववत्ता' सम्बन्धेन सकलपिशाचविषयकालौकिकसाक्षात्कारहेतु. ।

परंतु समानानां भावः सामान्यम्, तच्च कश्चिन्नित्यं धूमत्वादि, क्वचिच्चानित्यं घटादि । यत्रैको घटः संयोगेन भूतले समवायेन कपाले ज्ञातस्तदनन्तरं सर्वेषामेव तद्घटवतां भूतलादीनां कपालादीनां वा ज्ञानं भवति तत्रेदं बोध्यम् । परंतु सा-

मान्यं येन संबन्धेन ज्ञायते तेन संबन्धेनाधिकरणानां प्रत्यासत्तिः। किंतु यत्र तद्घटनाशानन्तरं तद्घटवतः स्मरणं जातं तत्र सामान्यलक्षणया सर्वेषां तद्घटवतां भानं न स्यात्। सामान्यस्य तदानीमभावात्। किंचेन्द्रियसंबद्धविशेष्यके घट इति ज्ञानं यत्र जातं तत्र परदिने इन्द्रियसंबन्धं विनापि तादृशज्ञानप्रकारीभूतसामान्यस्य सत्त्वात्तादृशज्ञानं कुतो न जायते, तस्मात्सामान्यविषयकं ज्ञानं प्रत्यासत्तिर्नतु सामान्यमित्याह—

## आसत्तिराश्रयाणां तु सामान्यज्ञानमिष्यते।

आसत्तिः प्रत्यासत्तिरित्यर्थः। तथाच सामान्यलक्षणेत्यत्र लक्षणशब्दस्य विषयोऽर्थः। तेन सामान्यविषयकं ज्ञानं प्रत्यासत्तिरित्यर्थो लभ्यते॥

आसत्तिराश्रयाणामिति मूलमवतारयितुं भूमिकामाह पूर्वन्निवति। समानानां तुल्यानामित्यर्थं, भूतलं संयोगेन ज्ञातं कपालं स्वावयवं समवायेन ज्ञातं इति विभज्यान्वयः। तदनन्तरमिति— 'भूतलं संयोगेन घटवत् कपालः समवायेन घटवान्' इत्याकारकलौकिकसाक्षात्कारद्वितीयक्षणे 'सर्वाणि भूतलानि संयोगेन घटवन्ति' 'सर्वे कपालाः समवायेन घटवन्तः' इत्याकारकमलौकिकज्ञानं जायते तत्रेदं बोध्यम् अर्थात् एतादृशस्थले ज्ञायमानमेव सामान्यमेव प्रत्यासत्तिरिति बोध्यम्। [illegible] तमाह नयति। परन्त्विति। अयमाशयः—स्वाधिकरणं यन्न सम्बन्धेन सामान्यं भवति तेनैव सम्बन्धेन तत्सदृशाधिकरणानां अलौकिकप्रत्यासत्तिः अन्यथा समवायसम्बन्धेन [illegible]

काशाकाशादिपदार्थानामलौकिकसाक्षात्कारहेतु स्यात् दर्शितरीत्या तु घटत्वादि सामान्य घटाद्यधिकरण एव समवायसम्बन्धेन ज्ञात तेषा मेवालौकिकसाक्षात्कार जनयति नान्यस्येति भाव किन्त्विति—एवञ्चेत्यर्थ । तद्घटवत स्मरणमिति 'तद्भूतलं घटवदासीत्' इत्याकारक स्मरण जातम । सामान्यस्य समानरूपेण प्रतीयमानस्य घटस्य तदानीं अभावात्, तस्यैव च तत्तदधिकरणेषु ज्ञानसम्बन्धरूपत्वात् तदभावे तद्वत्तासम्बन्धेन सकलाधिकरणज्ञानमलौकिक न स्यादित्यर्थ । दूषणान्तरमाह--किञ्चेति । तादृशज्ञानमिति--'सर्वे घटा घटत्ववन्त:' इत्याकारक ज्ञान परदिने कुतो न स्यात्, ज्ञानसामग्रीसत्वे ज्ञानस्यावश्यम्भावित्वादिति भाव । तस्मादिति--सामान्यमात्र न प्रत्यासत्ति अलौकिकः सन्निकर्षो न किन्तु सामान्य विषयीकुर्वत् यज्ज्ञान तदेव प्रत्यासत्ति आद्योऽलौकिक सन्निकर्ष इत्याद्येन दर्शितदोषोद्धाराय आसत्तिराश्रयाणान्तु इति कारिकां व्याख्यात आसत्तिरिति । आश्रयाणा सजातीयेषु इन्द्रियसन्निकर्ष.तेषामिन्द्रियासन्निकृष्टानामपि आसत्ति सन्निकर्ष इतियावत । एतदेव स्पष्टयति--तथाचेत्यादिना । सामान्य लक्षण विषयो यस्य तत् सामान्य विषयकमित्यर्थोऽवसेयः ।

यत्रैक घटमवलोक्य सकलघटाना ज्ञान जात तत्र घटत्वसामान्यज्ञानसन्निकर्षेण सर्वेषा घटत्ववता ( घटाना ) भान जायते सामान्यज्ञानसन्निकर्षेण । स्नाय सन्निकर्ष अतीतानागतानामिन्द्रियासन्निकृष्टाना सामान्याश्रयाणां सर्वासां व्यक्तीनामलौकिक प्रत्यक्ष जनयतीतिसिद्धान्त । यत्तु-दीधित्यामुक्तम-यत्रेन्द्रियसंयुक्तो धूमादि संनिकृष्यत धूम इति ज्ञान जातम, तत्र ज्ञान धूमत्व प्रकार तत्र धूमत्वेन सन्निकर्षेण धूमा' इत्येवरूप सकलधूमविषयक ज्ञान जायत तत्पूर्वीयसिद्धान्ताभिप्रायेणेत्यपि बोध्यम । ·

ननु चक्षुःसंयोगादिकं विनापि सामान्यज्ञानं यत्र वर्तते तत्र सकलघटादीनां चाक्षुषादिप्रत्यक्षं स्यादत आह—

**तदिन्द्रियजतद्धर्मबोधसामग्र्यपेक्ष्यते ॥ ६४ ॥**

**अस्यार्थः** । यदा बहिरिन्द्रियेण सामान्यलक्षणया ज्ञानं जननीयं तदा यत्किंचिद्धर्मिणि तत्सामान्यस्य तदिन्द्रियजन्यज्ञानस्य सामग्री अपेक्षिता । **सा** च सामग्री चक्षुःसंयोगालोकसंयोगादिकम् । तेनान्धकारादौ चक्षुरादिना तादृशं ज्ञानं न जायते ॥ ६३ ॥ ६४ ॥

अलौकिकस्वभावत्वात् सामान्यज्ञानसन्निकर्षस्य इन्द्रियसम्बन्धं विनापि सकलव्यक्तिसाक्षात्कारः स्यादित्याक्षेपवारणाय नन्वित्यादि प्रवनाति । परममूले तदिन्द्रियजेति—तत्तदिन्द्रियजन्यः यस्तद्धर्मबोधः अर्थात् सामान्यज्ञानमेव यस्य सामग्री चक्षुरालोकसंयोगादिका सा अत्र प्रत्यक्षे अपेक्षिता, घटोत्पत्तौ दण्डचक्रादिरिव आलोकसंयोगादिकमपि अलौकिकप्रत्यक्षे सहकारिकारणमित्यर्थः। अस्यापेक्षायाः फलं दर्शयति तेनेति । तादृशं ज्ञानमिति—अलौकिकं सकलघटादिसाक्षात्कारश्चाक्षुष त्वाचस्तु स्यादेव तत्रालोकसंयोगस्यानपेक्षणात् ।

ननु ज्ञानलक्षणा प्रत्यासत्तिर्यदि ज्ञानरूपा सामान्यलक्षणापि ज्ञानरूपा तदा तयोर्भेदो न स्यादत आह—

**विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणः ॥**

सामान्यलक्षणा प्रत्यासत्तिर्हि तदाश्रयस्य ज्ञानं जनयति। ज्ञानलक्षणा प्रत्यासत्तिस्तु यद्विषयकं ज्ञानं तस्यैव प्रत्यासत्ति-

रिति । अत्रायमर्थः । प्रत्यक्षे संनिकर्षं विना भानं न संभवति । तथा च सामान्यलक्षणां विना धूमत्वेन सकलधूमानां वह्नित्वेन सकलवह्नीनां च भानं कथं भवेत्तदर्थं सामान्यलक्षणा स्वीक्रियते । ननु सकलवह्निधूमभानाभावे का क्षतिरिति वाच्यं, प्रत्यक्षधूमे वह्निसंबन्धस्य गृहीतत्वादन्यधूमस्य चानुपस्थितत्वाद्धूमो वह्निव्याप्यो न वेति संशयानुपपत्तेः ।

ज्ञानलक्षणासन्निकर्षं लक्षयन् सामान्यलक्षणाज्ञानलक्षणयोर्भेदशङ्कां वारयितुं यदुक्तं नन्विति । परममुखे विषयी यस्येति — यस्य=सौरभादेः विषयी=ज्ञानं तदेव सौरभादेर्व्यापारः सन्निकर्षः ज्ञानलक्षणः ज्ञानलक्षणा प्रत्यासत्तिर्ज्ञानीयोऽलौकिकः सन्निकर्ष इत्यर्थः। यत्र पूर्वस्मिन्दिवसे कुत्रचिद् हट्टे किञ्चित् चन्दनखण्डं घ्रात्वा 'सुरभि चन्दन'मिति निश्चितवान् स एव परदिने तत्र गतः केनचित् क्रेत्रा 'चन्दनखण्डमिदं सुरभि नवेति' पृष्टोऽनाघ्रायैव 'सुरभि चन्दन'मिति यद् वदति तदा तस्य प्रतिवस्तुदर्शिताकारं ज्ञानं सौरभं चन्दनं चन्दनत्वमितित्रितयमेव विषयीकरोति तत्र यथाक्रमं संयोगसन्निकर्षेण चन्दनज्ञानं, चक्षुःसंयुक्तसमवायसम्बन्धेन, चन्दनत्वज्ञानं लौकिकप्रत्यक्षमेव लौकिकसन्निकर्षजन्यत्वात्, यत्तु घ्राणेन्द्रियसंबन्धमन्तरापि चन्दनखण्डे सौरभज्ञानं तत्तु चक्षुःसंयुक्तमनःसंयुक्तात्मसमवेतज्ञानरूपेण, चक्षुःसंयुक्तमनःसंयुक्तात्मसमवेतसंस्काररूपेण वा ज्ञानलक्षणात्मकेन सन्निकर्षेण जनितमलौकिकमेव प्रत्यक्षं । या सौरभसाक्षात्कारहेतुः प्रत्यासत्तिः सा ज्ञानलक्षणाप्रत्यासत्तिरुच्यते ।

अयमभावः — 'एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारक'मित्यस्ति नियमः, तेन पूर्वं घ्राणेन सौरभसाक्षात्कारवतः प्रमातुः पुनर्यद्

चन्दनखण्डस्य चक्षुषा दर्शने ततः सौरभस्मृतिः, सौरभस्मृतिहेतवः उद्बुद्धाः संस्कारा वा 'सुरभि चन्दन' मित्याकारकं सौरभविषयकं चाक्षुषं प्रत्यक्षं जनयन्ति, यद्यपि सौरभप्रत्यक्षकरणे चक्षुष स्वसामर्थ्यं नास्ति तथापि उक्तेनालौकिकेन सम्बन्धेन चक्षुषाऽपि सौरभभानं यत् तद् द्वितीयमलौकिकं प्रत्यक्षमित्याशयवान् उभयोः प्रत्यासत्त्योर्भेदं स्पष्टीकरोति सामान्यलक्षणाप्रत्यासत्तिरित्यादि ग्रन्थेन।

उक्तः सिद्धान्तः। अक्षराण्येवं योजयितव्यानि—सामान्यलक्षणाज्ञानलक्षणाप्रत्यासत्त्योरेव भेदः—यत् सामान्यलक्षणाख्या प्रत्यासत्तिः तदाश्रयस्य=धूमत्वादिधर्मविशिष्टस्य धर्मिणो धूमादेः लौकिकसाक्षात्कारोत्तरं तस्यैव धूमत्वादेराश्रयभूतस्य देशान्तरीयकालान्तरीयस्यापि धर्मिणः ज्ञानं=साक्षात्कारं जनयति। ज्ञानलक्षणा द्वितीया तु यद्विषयकं ज्ञानं=यस्य सौरभादेरलौकिकं भानं जातं तस्यैव प्रत्यासत्तिः सम्बन्धः न तु देशान्तरकालान्तरवर्तिनोऽपि सौरभादेः एवं ज्ञानत्वेन रूपेण उभयोः प्रत्यासत्त्योः साम्येऽपि विभिन्नफलजनकत्वेन प्रकारेण परस्परं भेद एवेति भावः। एतमर्थं स्पष्टीकर्तुमाह अत्रायमर्थ इति। 'प्रत्यक्ष' इत्यारभ्य 'स्वीक्रियते' इत्यन्तः सन्दर्भः स्पष्टः।

अत्राशङ्क्य समाधत्ते 'नच' इत्यादिना। सकलवह्निधूमज्ञानाभाव इति—यदि देशान्तरकालान्तरवृत्त्योः वह्निधूमयोर्ज्ञानं न स्यात् तदा को दोष इति शङ्काग्रन्थार्थः।

प्रत्यक्षधूमे=महानसवृत्तिधूमे वह्निसम्बन्धस्य=यत्र धूमस्तत्र वह्निरित्याकारस्य व्याप्तिरूपस्य सम्बन्धस्य गृहीतत्वात्=चक्षुषा प्रत्यक्षीकृतत्वात् अन्यधूमस्य=देशान्तरीयकालान्तरीयस्य ( पर्व-

रिति। **अत्रायमर्थः**। प्रत्यक्षे 'संनिकर्षं विना भानं न संभवति। **तथा** च सामान्यलक्षणां विना धूमत्वेन सकलधूमानां वह्नित्वेन सकलवह्नीनां च भानं कथं भवेत्तदर्थं सामान्यलक्षणा स्वीक्रियते। 'नैवं सकलवह्निधूमभानाभावे का क्षतिरिति **वाच्यं**, प्रत्यक्षधूमे वह्निसंबन्धस्य गृहीतत्वादन्यधूमस्य चानुपस्थितत्वाद्धूमो वह्निव्याप्यो नवेति संशयानुपपत्तेः।

ज्ञानलक्षणाप्रत्यासत्तिं लक्षयन् सामान्यलक्षणाज्ञानलक्षणयोर्भेदशङ्कां वारयितुं शङ्कते नन्विति। परममुखे विषयी यस्येति—यस्य=सौरभादेः विषयी=ज्ञानं तस्यैव सौरभादेर्व्यापारः सन्निकर्षः ज्ञानलक्षणा. ज्ञानलक्षणा प्रत्यासत्तिर्द्वितीयोऽलौकिकः सन्निकर्ष इत्यर्थः। यत्र पूर्वस्मिन्दिवसे कुत्रचिद् दृष्टं किञ्चित् चन्दनखण्डं घ्रात्वा 'सुरभि चन्दन' मिति निश्चितवान् स एव परदिने तत्र गतः केनचित् क्वेदं 'चन्दनखण्डमिदं सुरभि नवेति' पृष्टोऽनाघ्रायैव 'सुरभि चन्दन' मिति यद् वदति तदा तस्य प्रतिपत्तुः दर्शिताकारं ज्ञानं सौरभं चन्दनं चन्दनत्वञ्चेतत्त्रितयमेव विषयीकरोति तत्र यथाक्रमं संयोगसन्निकर्षेण चन्दनज्ञानं, चक्षुःसंयुक्तसमवायसम्बन्धेन, चन्दनत्वज्ञानं लौकिकप्रत्यक्षमेव लौकिकसन्निकर्षजन्यत्वात, यत्तु घ्राणेन्द्रियसम्बन्धमन्तरापि चन्दनखण्डे सौरभभानं तत्तु चक्षुःसंयुक्तमनःसंयुक्तात्मसमवेतज्ञानरूपेण, चक्षुःसंयुक्तमनःसंयुक्तात्मसमवेतसंस्काररूपेण वा ज्ञानलक्षणाख्येन सन्निकर्षेण जनितमलौकिकमेव एवंरूपा या सौरभसाक्षात्कारहेतुः प्रत्यासत्तिः सा ज्ञानलक्षणाप्रत्यासत्तिरुच्यते।

अयमाह—'एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारक' मित्यस्ति नियमः, तेन पूर्वं घ्राणेन सौरभसाक्षात्कारवतः प्रमातुः पुनर्यद्

इत्याद्या श्रुतिः । यत्समत्वं द्वयोरत्र जीवात्मपरमात्मनोः । सनष्ट-सर्वसङ्कल्पः समाधिरभिधीयते । इत्यादि पुराणं द्रष्टव्यम । आदि-पदेन स्मृत्यादिपरिग्रहः

अस्य द्वैविध्यं दर्शयति—युक्तयुञ्जानेति । अतिरोहितार्थमन्यत् । अभ्याहतगतित्वेन सर्वविषयं भान युक्तस्य योगिनः युक्तयोगजसन्निकर्षेण । अपरो युञ्जान. योगसाधनपरस्तु चिन्तासहकृत. चिन्तारूपं सहकारिणमपेक्षते, समाधिस्थएव युञ्जाननामकयोगजसन्निकर्षेण सर्वं पश्यति नतु समाधिरहितोपि । अति-रोहितार्थमन्यत् । सर्वस्यास्य ग्रन्थस्यं मूलन्तु 'आर्षं सिद्धदर्शनञ्च धर्मेभ्यः' वै १० । २ । १३ इत्यादिसूत्रं तत्तदनुपङ्गि प्रपञ्चश्च निरीक्ष्य ग्रन्थगौरवभयान्न बहु प्रपञ्चितम ।

इति श्रीपण्डितदेवीदासतनुजनुषा सतीविष्णुदेवीगर्भजेन श्रीजैनन्या-यविशारदकवितार्किकदर्शनाचार्यनृसिंहदेवशास्त्रिणा

विरचितायां सिद्धान्तमुक्तावल्याः 'प्रभा'ख्यायां

व्याख्यायां प्रथमं प्रत्यक्षखण्डम् ।

समाप्ता च प्रत्यक्षलक्षणाख्ये तुरीया मुक्ता ।



# पुस्तक सूची

विशारद परीक्षा के लिये १९२३-१९२४ के
लिये नियत पुस्तकों की सूची इस प्रकार है।

१ पत्र-अभिज्ञान शकुन्तला नाटक सटीक कलकत्ता
शिशुपाल वध ( माघ ) ९ सर्ग सटीक
" सम्पूर्ण

२ पत्र-दशकुमार चरित्र मूल मात्र
( सटीक दशकुमार छप रहा है )

३ पत्र-न्याय सिद्धान्त मुक्तावली मुम्बई
तथा प्रभा टीकोपेतः ( केवल प्रत्यक्ष खंड )
( यह टीका मूलार्थ को लगाने के लिय अत्यन्त,सरल
से बनाई गई है ऐसी सरल टीका आज तक नहीं छपी

४ पत्र-साहित्य दर्पण सटीक कलकत्ता
" " " रुचिरात्य व्याख्या स०
विदग्धमुख मंडन सटीक मुम्बई
" " प० रामप्रपन्न कृत टीका सहित

५ पत्र-सिद्धांत कौमुदी मूलमात्र
" " प० शिवदत्त जी कृत टिप्पण सहित
" " तत्त्वबोधनी टीका सहित
" " पूर्वार्द्ध बालमनोरमा टीका

६ पत्र-अनुवाद तथा प्रस्ताव संस्कृत में इसके लिय प्र:
चन्द्रिका उपयोगी है दाम

मिलने का पता—मेहरचंद लक्ष्मणदास,
संस्कृत पुस्तकालय, लाहौर